**अजीर्णम्** । क्लीं । अपाकरोगविशेषः । आमं विदग्धञ्च यत्तदजीर्णम् । भा म ख १भ अ च मा । तच्चात्यम्बुपान विषमभोजन-वेगविधारण दिवानिद्रा रात्रिजागरणादिभिः कारणैरुत्पद्यते । उपन्ने चाजीर्णरोगे यथासमयं स्वल्पान्नमपि न च भोजनं न परिपाकमेति । आर्दौ तत्त्रिविधम्, आम विदग्ध विष्टब्धाजीर्णभेदेन । तथान्नजरसशेषाद्वारसज दिनपाकिलाद्विदयमपि कल्पितम् । तेषु कफकोपादामाजीर्णं, पित्तकोपाद्विदग्धाजीर्णं, वायुकोपाच्च विष्टब्धाजीर्णं भवति । रसशेषतया रसशेषाजीर्णम् । माधव । वा नि १२ अ । "गोमांसभक्षको मन्दजठराग्निभवेन्नरः । प्राणापत्यं चरेत् कृच्छ्रमतिकृच्छ्रं तथैव च ॥" इत्यादि कर्म्मविपाकः । See अग्निमान्द्यम् ।

**अजीर्णकण्टकरसः** । पु । रसौषध अजीर्णप्रशमः । रस र । र सा स । सा कौ । भा । भैष । प्रयोगा ।

**अजीर्णजरणः** । पु । कर्चूरे । See कर्चूर ।

**अजीर्णी** । त्रि । अजीर्णरोगयुक्ते ।

**अजेयः** । पु । अर्जुनवृक्षे । व निघ ।

**अज्झटा** । स्त्री । भूम्यामलक्याम् । भू रे आम्ला । हि भुइ आमरा । भा पू १भ गु व ।

**अज्झलः** । पु । कोकिले ।

**अञ्चकम्** । क्ली । नेत्रे । रा नि व १८ ।

**अञ्जनः** । पु । गृहगोधिकायाम् । टिक्टिकी ।

**अञ्जनम्**, **अञ्जनकर्म्म** । क्लीं । Anointing or making clear नेत्रप्रसाधने । काजल, आजनाइ, आजन् इति भाषा । सुर्मा इति पश्चिमदेशे । अञ्जन क्रियते यत्तद्द्रव्य चाञ्जनमुक्तम् । तच्च पञ्चविधम्— सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् । स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च । नीलाञ्जनञ्चेति । तेषु सौवीरं धूम्रं रक्तपित्तहरञ्च । रसाञ्जनं विषहिक्काशिरोगघ्नं व्रणरोपणशोधनञ्च । स्रोतोऽञ्जनं पीताभ, पुष्पाञ्जनं सितं, नीलाञ्जनञ्च नीलवर्णमिति । वा । तच्च षड्विधमिति कालिकापुराणे, यथा—'सौवीरं जाम्बलं तुल्यं मयूरं श्रीकरं तथा । त्वङ्किका मधनीलञ्च अञ्जनानि भवन्ति षट् ॥ सौवीरदुर्धपन्नु सौवीरं जाम्बलं प्रस्तरं तथा । मयूरं श्रीकरं रखं मेघनीलञ्च तत्समम् ॥ घृततैलादियोगेन सामान्यै दीपवह्निना । यदञ्जनं जायेत तु दृश्यिका परिकीर्त्तिता ॥" इति । गुण —नेत्रनैर्म्मल्यकारित्वमेव । पुनस्तत्त्रिविधं रसो वटी तथा चूर्णमिति । "यथापूर्व्वं बलं तेषु श्रेष्ठं माद्दर्ममीषिणः ॥' इति । तच्च पुनः प्रत्येकं त्रिविधं यथा—"तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा स्नेहनञ्चेति लिङ्गानि । नेत्रवर्त्म चारतीक्ष्णाम्लरसैरञ्जनमुच्यते । नेत्रवर्त्मशिराजालश्रीवशृङ्गाटकस्थितं । स्रवनामाश्रितमिदोषमुत्क्लिश्य स्रावयेच्च तत् ॥ कषायं तिक्तकं चापि सस्नेहं रोपणं मतम् । स्नेहश्च शैत्यात्स्य स्याद्दृष्टेश्च बलवर्द्धनम् । मधुरं स्नेहसम्पन्नं तदञ्जनं स्यात्प्रसादनम् ॥ दृष्टिदोषप्रसादाय स्नेहनार्थञ्च तद्धितं । एरण्डमात्रा वर्त्तिस्तु लेखनी स्यात्प्रमाणतः । सार्द्धैकरेणुकमिता रोपणी वर्त्तिरिष्यते । क्रियते स्नेहनीवर्त्तिर्द्विरेणुकमात्रया ॥ रसाञ्जनस्य मात्रा तु त्रिभिर्वर्त्तिमिता मता । चूर्णन्तु लेखने वैद्यैश्शलाकः प्रदीयते । रोपणे त्रिशलाकः स्यात् चतस्रः स्नेहनाञ्जने ॥" हेमन्ते शिशिरे मध्याह्ने ग्रीष्मे शरदपराह्णे वर्षासु वसन्ते च सन्देव काले इति । भा पू ख २भ । कज्जल । ह च । सि यो कामलाचि रक्तपित्तचि । स्रोतोऽञ्जने । भा । सु चि २५ अ । रसाञ्जने । च द अ सा चि प्रियङ्ग्वादि । रक्तपित्त चि । च ३ष मदंष्ट्र-क्ति । स्तम्भनयोगेच । भा बालचि । सौवीराञ्जने । वा सू १५अ अञ्जनादि । सु सू ३८अ । See अञ्जनविधि ।

**अञ्जनः** । पु । ज्येष्ठी नाम प्राणिविशेषे । टिक्टिकि ।

**अञ्जनकेशिका**, **अञ्जनकेशी** । स्त्री । हट्टविलासिनीनाम गन्धद्रव्ये । A vegetable perfume नलिकानाम गन्धद्रव्ये उत्तरदेशे प्रसिद्धे । भा पू १भ क व ।

**अञ्जनगुडिका** । स्त्री । विषविकारायामौषध वि यो । गुडपुष्पगस्, अपामार्गबीजं, अपराजिता मल, हरिद्रा, त्रिकटु च । अञ्जन कर्त्तव्यम् । च द अग्निमान्द्यचि ।

**अञ्जनत्रयम्(त्रितयम्)** । क्ली । कालाञ्जन स्रोतोऽञ्जन रसाञ्जनेषु । "कालाञ्जनसमायुक्तं स्रोतोऽञ्जनरसाञ्जने । रा नि व २२ ।

**अञ्जननामिका** । स्त्री । वर्त्मगतनेत्ररोगभेदे । आञ्जनी, आञ्जनाइ । अत्र वर्त्ममध्ये रक्तेन ताम्रा सुक्ष्मशमाणा पिडका भवति । वा उ ८ १४ व ।

"दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका॥" मा नि।

**अञ्जनभैरवः**। पु। सान्निपातिकज्वरे रस। यथा,—"सूत तीक्ष्ण कणा गन्धमेकांशं जयपालकं। सर्व्वैस्त्रिगुणित जम्बवारिणा च सुपेषितं। नेत्राञ्जनेन हन्त्याशु सर्व्वोपद्रवपुङ्गवम्॥" भैष। अत्र एकांशमिति प्रत्येकमेकांशम्। तीक्ष्ण तीक्ष्णलौहम्। रसा स सान्निपा ज्व। अत्याञ्जन विधि।

**अञ्जनयुग्मम्**। स्त्री। सौवीराञ्जने रसाञ्जने च। वा सु प्रियङ्ग्वादि।

**अञ्जनरसः**। पु। सान्निपातिकज्वरे नस्यम्। इह हेम पारद। मरिचचूर्ण समम्। र सा स ज्व चि। अन्य सान्निपातिकज्वरन्दाहे। तत्र वाह्लिकं हिङ्गु। रसकं स्फटिकारी।

**अञ्जनविधिः**। पु। नेत्ररसाधनभेदे। यथा, "अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत्। अञ्जन क्रियते येन तद्द्रव्य चाञ्जन मतम्॥ रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम्। यथापूर्व्व बल तेषु श्रेष्ठमाहुर्मनीषिण॥ तत्प्रत्येक त्रिधा प्रोक्त लेखनं रोपणं तथा। स्नेहनञ्चेति"। तेषु लेखनं चारसौष्णाम्लरसैरञ्जनं नेत्रवर्त्मादिदोषहरम्। रोपण सस्नेह कषाय तिक्त दृष्टिबलवद्धनञ्च॥ मधुर स्नेहसम्पन्न स्नेहन नेत्रस्नेहनार्थम्। हरेणुमात्रा कुर्व्वीत वटी तीक्ष्णाञ्जने भिषक्। रसक्रियानुत्तमा स्यात् त्रिविडङ्गमिता मता। मध्यमा सा द्विविडङ्गा हीना त्वेकविडङ्गिका॥ शलाका स्नेहने चूर्णे चतम्र माहुरञ्जने। रोपणे तासु तिस्र स्युर्द्वे उभे लेखने स्मृते॥ सुखयो कुञ्चिता मध्या शलाकाष्टाङ्गुलीमिता। अश्मजा धातुजा वा स्यात् कलाय परिमण्डला। सुवर्णरजतोद्भूता शलाका स्नेहने स्मृता॥ ताम्रलौहाश्मसञ्जाता शलाका लेखने मता॥ अङ्गुलीतु मृदुत्वेन रोपणे कथिता बुध॥ अथानुन्मीलयन् दृष्टी अन्त सञ्चारयेच्छनै। अञ्जिते वर्त्मनी किञ्चित् चालयेच्चैव-मञ्जनं। अदेतौषध-सम्बन्ध निर्गतं नयनं यदा। व्याधिदोषमु योग्याभिरद्भि प्रक्षालयेत्तदा। दक्षिणाङ्गुष्ठकेनाक्षि ततो वाम सवासत। ऊर्द्ध्ववर्त्मानि संगृह्य शोध्य वामेन चेतरत। निशि स्वप्ने न मध्याह्नपानाम्रौ गागतस्त्रिभि। अक्षिरोगाय दोषा स्युर्वर्द्धितोत्पीडिताद्भुता। प्रात सायञ्च तच्छान्तिरभ्रकेऽतोऽञ्जयेत् सदा। कण्डूजाड्येऽञ्जनं तीक्ष्णा धूमं वा योजयेत् पुन। तीक्ष्णाञ्जनाभितप्तं तु चूर्णं प्रत्यञ्जनं हितं। नाञ्जयेद् भीत वमित विरिक्ताशितरोगिणि। क्रुद्धज्वरितभ्रान्ताक्षि शिरोरुक्शोकजागरे। अदृष्टेऽर्के शिर स्नाते पीतयोर्धूम मदायो। अजीर्णेऽग्न्यर्कसन्तप्ते दिवास्वप्ने पिपासिते। निर्व्वाणं सर्पस्य योग्य शङ्खयो मूढकाययो। काष्ठि साधारणे प्रात साय चोत्तानशायिन। यवमाषमयी पालौ नेत्रकोषाहहि समा। द्रवद्रवौषैर्दृढा कृत्वा यथास्व सिद्धमावपेत्॥ भा।

**अञ्जनादिगण**। पु। अञ्जनफलिनीमांसीपद्मोत्पलरसाञ्जनमधुकनागाह्वरूपी वर्ग। स च विषानलदाहपित्तघ्न। वा सू १५ अ। सौवीराञ्जन, रसाञ्जन, नागकेशरपुष्प, प्रियङ्गु, नीलोत्पल, वीरणमूल, नलिनं, मधुक, पुन्नागश्चेति। सु सू ३८ अ।

**अञ्जनाधिका** } स्त्री। कृष्णकार्पासक्षुपे।
**अञ्जनिका** } See कालाञ्जनी। अञ्जन्याम्। ञ्जाजनाई। अञ्जनी लेपकारिणी। हारा। हे च ४ का। क्षुद्रमूषिकायाम्।

**अञ्जनाम्भ**। क्ली। अञ्जनजलं। Liquid collyrium

**अञ्जनिक**। पु। गन्धराजायाम्।

**अञ्जनी**। स्त्री। कटुकायाम्। कालाञ्जन्या। रा नि व ४।

**अञ्जलि**। पु। प्रसृतिद्वये, ३२ तो प प्र १ख। कुडवमाने। रत्ना नानार्थे। भा उ वाजी। करसम्पुटे। मे लत्रिकम्।

**अञ्जलिका**। स्त्री। लज्जालुकायाम्। क्षुद्रमूषिकायाम्। जटा।

**अञ्जलिकारिका**। स्त्री। (Mimosa natans) लज्जालुकायाम्। रा नि व ५। भा पू गु व। (Lycopodium imbricatum) वराहक्रान्तायाम्। वराक्रान्ता।

**अञ्जलिनी**। स्त्री। लज्जालुकायाम्।

**अञ्जिष्ठ**। पु। सूर्य्ये। उ।

**अञ्जीर**। पु। Ficus carica, Psidium pomiferum) स्वनामख्यातवृक्षे। बड़ पेयाराशगाछ। हि अंजीर। तत्पर्याय,—मञ्जुल, काकोदुम्बरिकाफल। फलगुणा— शीतलं स्वादु, गुरु, रक्तपित्तवातघ्न क्रिमिशूल हृत्पीडाकफ रुग्धरस्य नाशिलञ्च। मद व ६।

**अटरुष'** । पु । (Justicia adhatoda) वासकवृक्षे । रत्नमाला मूलिकारिरसे, कन्दर्पसारतैले च । वा चि २ अ । See वासक ।

**अटरूप** | **अटरूषक** । पु । वासकवृक्षे । रमा । चद्र रक्तपित्तचि ।

**अटवी** । स्त्री । अरण्ये ।

**अटवीलता** । स्त्री । कुष्माण्डवृक्षे । कुष्माड्या इति रत्ना ।

**अटि** । प । शरारिपक्षिणि । हला ।

**अट्टम्** । क्ली । अन्ने । गुल्के च । मेदिनिक ।

**अट्ट'** । पु । चौमे । पट्टवस्त्र । द्वितल इष्टकागृहे । দোতলা কোটাঘর ।

**अट्टनम्** । क्ली । अस्त्रभेद । त्रिका ।

**अट्टहास (क)** । पु । (Jasminum multiflorum,) कुन्दपुष्पवृक्षे । কুঁদ ফুলের গাছ । रा नि व १० ।

**अट्टालक.** । पु । उपरितल गृहे । দোতলা-ঘর ।

**अट्टालिका** । स्त्री । राजोचित गृहे । ভাল কোটাবাড়ী ।

**अडगज** । पु । चक्रमर्द्दे । চাকুন্দে । See चक्रमर्द्द ।

**अडङ्ग** । पु । गोधूमे ।

**अडहु** । पु । लकुचवृक्षे ।

**अणु** । पु । सूक्ष्मधान्ये । अणुर्व्रीहिविशेषे स्यात् । मेदिनिक । चीनधान्ये ।

**अणुज्योति** । क्ली । लोकदृष्टौ । वा शा ५ अ ६२ श्लो ।

**अणुतैलम्** । क्ली । कफगतरोगे तैलविशेष । वा सू २० अ उ २२ अ ।

**अणुमुष्टि** । पु । विषमुष्टौ, महानिम्बे । रा नि व ४ ।

**अणुरेवती** । स्त्री ।(Croton polyandrum) दन्तीवृक्षे । प मु । रा नि व ६ ।

**अणुव्रीहि** । पु । सूक्ष्मधान्ये । रा नि व १६ । तत्पर्य्याय —प्रसातिका (र) ।

**अण्डम्** । पु, क्ली । मुष्के । रा नि व १८ डिम्बे । ডিম, আণ্ডা । तत्पर्य्याया,—पेशी, कोष, (अ) । पेशि, कोश, पेशीकोष, (अटी)। डिम्ब मे)। पेषी (क)। गुणा—कटुपाकि स्वादु रुचिकर गुरुकर वातश्लेष्महरञ्च । गन्धमाजाराण्डे । খাটাশী । वै निघ २भ वा व्या विषगर्भतैले । मृगनाभी । वाथे । वि ।

**अण्डक** । पु । अण्डकोषे । हे च । क्षुद्र डिम्बे ।

**अण्डकोटरपुष्पा** । स्त्री । अजान्त्राम् । नील वुह्ना इति लोक । रत्ना ।

**अण्डकोष** । पु । कुट्मले । वृषणे । অণ্ড কোষ । रा नि व १८ । तत्पर्य्याया,— मुष्क, वृषण, (अ) । अण्ड, पेल, अण्डक, (हे । कोशा (ज । फलकोशक (त्रि) । फल (क) । बीजपेषिका (रा) । अण्डकोषलक्षण—रक्त मूत्र समाश्रित्य कोशगतऽवतिष्ठत । रेत भावाण्डयुगल मन्याभ चाण्डवर्त्तुल । भूगर्भोदरवेष्टन्या परया उदरगह्वरे । लिङ्गे ता कमभ्ये नाडग्मि कोषमायाति तत्क्षम । दक्षिणस्मात् स्थूलतर वामाख्य निम्नलम्बि च । वाम रेतसिक्त मत्र यतो दीर्घतर परात् । उपस्थपरिसस्थानमरन्दन निर्म्मित । कोषो रेत सिक्त मूत्रे धरऽण्डयुगल तथा । तनोराभ्यन्तरी रक्त सङ्कोचनगुणान्वित । तनोर्बाह्यचर्म्ममयी लोमभि कतिभिवृत । तनोर्मिरक्षवन्यान्तरकया भिद्यत द्विधा । तद्भेदयसंस्थान्त पुसोऽण्डयुगल ननु । उदरगह्वरस मूत्रे पश्चाद्गागमवाण्डयो । नियत ममनुप्राप्ति धरामायुर्दिनिर्म्मित ॥ अविरिति कथित ।

**अण्डकोषक** । पु । अण्डकोषे । श र ।

**अण्डग** । पु । गोधूमे ।

**अण्डगज** । पु । चक्रमर्द्द क्षुपे । रा नि व ४ ।

**अण्डज** । पु । मत्स्ये । पक्षिणि । भा पु २ भ ।

**अण्डजा** । स्त्री । गरटे । वि । सर्पे । मत्स्ये । पक्षिणि । मेदिनिक । मृगनाभौ । वा हेमा ।

**अण्डपर्ण** । पु । मलाण्डतरौ । अति ।

**अण्डपेशी** । स्त्री । कोषे । मुष्के । हे च ।

**अण्डस्कन्द** । पु । अण्डेषु स्कन्द इव, अण्डस्थाण्ड रोगविशेषे । तल्लक्षण यथा—प्रकोपान्मारुतादीनां कारणे पूर्व्वोदिते । अण्डस्कन्दस्तुदुद्वाणा जायते बहुसंज्ञक । तस्य रूप चिकित्साञ्च भेदश्चैव समासत । प्रवक्ष्यामि यथायोग वाजिनां हितकाम्यया ।

द्रपणौ द्रपयेद्वातु शोणिणा यथा संयुत । तथा सम्यग्यन्थी को रोगी वातात्सम न क ॥ प्रदग्ध दम्पतिऽयथा तेन पादेन खञ्जति । मध्यप्रहता तथाण्ड वदना मुष्कयोर्भवेत ॥ शनता मुष्कयोर्यैव रक्तता क्षणतापि वा । भवत् पित्तेन दुष्टेन पिडकानाञ्च सम्भव ॥ शनौ पक्वौ तरङ्गमा मुष्कौ यमा सवेदनौ । विकल्पभेन युक्ता तथा पुताल्पमादिशेत ॥ स्पर्शेन कठिनौ रुचौ स्पतर्देव यौ मदृ । द्रपणौ यमा वाह्स्य स रक्ताण्ड प्रकीर्त्तित ॥ तस्मिन् सत्ता प्रयोक्तव्या क्रिया पीताण्डवोधिता ॥ शनौ त कठिनौ रुचौ द्रपणौ मन्दवेदनौ । तत्कृमूत्रमा वाहस्य मुत्रकोष्ठञ्च शयते । श्वेताण्ड स तु विज्ञेय श्वीपाण्डौ यैधयन्छिरा । निरूह कटुतैलेन चाङ्गे स्वेदश्च कारयेत् ॥ जयदत्त ५० अ ।

**अण्डहस्ती** । पु । चक्रमर्द्दचुपे । रा नि व ५ ।

**अण्डालु.** । पु । मत्स्ये । श च ।

**अण्डिका** । स्त्री । यवचतुष्टयपरिमाणे । च ।

**अण्डिनी** । स्त्री । सान्निपातिकयोनिरोगविशेषे । लक्षण— 'अतिकाय गृहीतायामकृगा स्त्रण्डिनी भवेत्॥' सु चि ।

**अण्डीर** । पु । पुरुष । मे रत्निक ।

**अण्वस्थि** । स्त्री । मणिबन्धादिस्थे सन्ध्यास्थ्नि । सु शा ।

**अण्वी** । स्त्री । अङ्गुली ।

**अतन्द्रा** । स्त्री । काफि इति ख्याते फले । चा र्ईति च लोके । भनि ।

**अतरुणदारु** } पु । वृद्धदारके । विज-
**अतरुणदार (क)** } ताडक । भि विधारा ।
'अतरुणदारुरा अपरा ।' भा म १ भ सन्धि भान्न चि ।

**अतलस्पृक्** । स्त्री । जल । हे च ४ का ।

**अतसी** । स्त्री । (Linum Usitatissimum) Common flax चुमाइत्ते । मसिना । ह्रि तिसि । ते नव्वयगसिवेट्टु । तत्पर्याया,—क्षुमा, उमा, क्षौमी, रुद्रपत्नी, सुवर्च्चला, (र) । पिच्छिला, देवी, मदगन्धा, मदोनकटा, चुमा, हैमवती, सुनीला, नीलपुष्पिका, पार्व्वती । गुणा —मधुरा बलकारिका कफवातवर्द्धनी, दृष्टिपित्तघ्नी कुष्ठ वातघ्नी च । रा नि व १६ । गुरुइष्टिघ्नी स्निग्धा गुरु वातापसिध । मद व १० ।

**अतसीतैलम्** । क्ली । अतसीजाततैले । मसिनार तेल । गुणा —मधुर पिच्छिलं वातन मद गन्धि कषाय कफहर कामहरच । रा नि व १५ । आग्नेयं स्निग्धोष्णं कफपित्तकृत् कटुपाकमचक्षुष्य बल्य वातहर गुरु । मलकृत् रसत स्वादु ग्राहि त्वग्दोषहृदवनम् । वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे । अनुपानविधौ चापि प्रयोज्य वातशान्तये ॥ भा पू तलव ।

**अतिकटु.** । त्रि । निम्बादिद्रव्य ।

**अतिकण्ट (क:)** । पु । गङ्गोचुरके । दुरालभायाम् । मद व १ ।

**अतिकन्द (क)** । पु । हस्तिकन्दनामकहा कन्दशाके । रा नि व ७ ।

**अतिकाय.** । त्रि । स्थूलदेहे । स्थूल शरीर । 'अति काय गृहीताया मकृगा स्त्रण्डिनी भवेत् ।' मा नि ।

**अतिकृश.** । त्रि । अतिदुर्ब्बल ।

**अतिकेशर.** । पु । कुब्जकापुष्पवृक्षे । कोकण देशीय पुष्पविशेष । हि कूजा । रा नि व १० । भा पू प व । कण्टकसेवयाम् । काँटा सेउति ।

**अतिक्रान्तावेक्षणम्** । क्ली । यत्पूर्व्वमभिहित तत् । यथा चिकित्सितेषु ब्रूयात् "श्लोकस्थाने यदीरितमिति ।' सु उ ६५ अ ।

**अतिगण्ड** । त्रि । वृहद्गण्डे । मे डचतुष्क ।

**अतिगन्ध'** । पु । A sort of Jasmine (Jasminum zambac) मुद्गरपुष्पवृक्षे । रा नि व १० । गन्धके । रा नि व १३ । (Michelia champaca) चम्पकवृक्षे । रा नि व १०। भद्रयां । गन्धतृण । रा नि व ८ ।

**अतिगन्धक** । पु । हस्तिकर्णपनागवृक्षे । चम्पक वृक्षे । रा नि व १० ।

**अतिगन्धा(लु)** । स्त्री । पुत्रदात्रीलतायाम् । रा नि व ४ ।

**अतिगन्धिका** । स्त्री । पुत्रदात्रीलतायाम् । जियापुती । रा नि व ४ ।

**अतिगुहा** । स्त्री । (Uraria logopoedes) पृश्निपर्ण्याम् । छोट चाकुले । र मा । शाल पर्ण्याम् । मद व १ । वा सू २९ अ । 'लक्ष्मीं गुहामतिगुहाम् ।

**अतिघूर्णता** । स्त्री । अतिनिद्रा । भा म ४भ मसूरिकानि । 'तृष्णा दाहातिघूर्णता ।'

**अतिचर** । पु । पक्षिभेदे । वृक्षविशेषे ।

**अतिचरणा** । स्त्री । तन्नामककफजयोनिरोग विशेषे । अतिव्यवायेन शोथयुक्ता योनिरतिचरणी च्यते । 'मैथुनातिचरणा शोफसंयुक्तातिव्यवायत ।' वा उ ३३भ । See अचरणा ।

**अतिचरा(ला)** । स्त्री । पद्मचारिण्याम् । मद व १ । (Hibiscus mutabilis) स्थलपद्मिन्याम् । स्थलपद्म । रा नि व ५ । भा पू १म See स्थलपद्मम् । भततर्गे ।

**अतिच्छत्र** । पु । रक्तकोकिलाचे । তালমাখনা । বক ফুলেথাড়া । प मु । स्त्रा । छत्रायाम् । Mushroom ব্যাঙছাতু, পোগালছাতু । स्थूलतृणविशेषे ।

**अतिच्छत्रक** । पु । भूतृणे । प मु । भूतृणे । গন্ধতৃণ । रा नि व ८ । तृणसाधारणे । वृक्षविशेषे । यस्य मूले पत्रे वा वचाकार कटुरसय । रा नि । सप्तपर्णवृक्षे ।

**अतिच्छत्रा** } **अतिच्छत्रिका** } स्त्री । शताह्वायाम् । শুলফা । रा नि व ४ । मद व २ । वा उ ६भ । "अतिच्छत्रा पलङ्कषा । सि यो उन्माद-चि महापैशाचघृते । मधुरिकायां । মৌরী । च वि भ । छत्रवृक्षे । यस्य मूले पत्रे वा वचाकार कटुरसश्च । भूतृणे । रा नि । विषाणिकायाम् । वा म २९भ । तन्नामकमहौषधौ । See ओषधि ।

**अतिजागर** । पु । नीलक्रौञ्चे । रा नि व १९ ।

**अतिजृम्भ** । पु । वायुरोगविशेषे । वै निघ ।

**अतितपस्विनी** । स्त्री । गोरक्षमुण्ड्याम् । গোরক্ষ চাকুলিয়া । भा पु १भ गु व ।

**अतितर्पनम्** । क्ली । अतितृप्ती । वा सू ८भ ।

**अतितीव्रा** । स्त्री । गण्डदूर्वायाम् । रा नि व ८ ।

**अतितीक्ष्ण** । त्रि । मरिचादौ । पु । शोभाञ्जन वृक्षे । क्ली । अजमोदायाम् ।

**अतितृप्ति** । पु । पित्तजन्यरोगविशेषे । वै निघ ।

**अतितेजिनी** । स्त्री । तिपर्ण्याम् । তেজবল, তেঙবতী । मद व १ ।

**अतिदग्धम्** । क्ली । अग्निदग्धरोगे । अतिदग्ध मांसावलम्बनं गात्रविश्लेष शिरास्नायुसन्ध्यस्थिव्या पादनमतिमात्र, ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति । व्रणश्चास्य चिरेण रोहति रूढय विवर्णो भवति । स्नेहस्याप्रितपन कार्य्यमुग्र तथौषधम् । इत्यादि । सु सू १२भ ।

**अतिदाह** । पु । अतिसन्तापे । वै निघ ।

**अतिदीप्ति** । स्त्री । श्वेतसुरसायाम् । শ্বেত বাবুই তুলসী । वै निघ ।

**अतिदीप्य (क)** । पु । रक्तचित्रके । रा नि व६ ।

**अतिदुष्ट** । पु । गोक्षुरके । वै निघ ।

**अतिदेश** । पु । प्रकृतस्थानागतेन साधनम् । यथा—अनेनास्य वायुरूर्द्ध्वं प्रतिहते तेनोदावर्त्त स्यादिति । सु उ ६५ भ ।

**अतिनिद्रता** । स्त्री । कफवृद्धिजन्यरोगविशेषे । सु स १५ भ ।

**अतिपक्कमांसम्** । क्ली । पाकाधिकसिद्धमांसे । गुणा —अतिपक्कन्तु यन्मांस विरस वातल गुरु । वै निघ ।

**अतिपक्कक्षीरम्** । क्ली । अतिप्रतप्तघनदुग्धे । ঘনাবৃত দুগ্ধ । इदम् अतिगुरु । "भवेद्गरीयोऽति शृतम् । वा टी हेमाद्रौ चक्रपाणि ।

**अतिपत्र (क)** । पु । शाकतरौ । সেগুন গাছ । रा नि व ९ । उन्माद चि महापैशाचघृते । हस्तिकन्दनाममहाकन्दे । रा नि व ७ ।

**अतिपला** । स्त्री । (Sida cordifolia) बलायाम् । বেড়েলা । हि खरेन्टी ।

**अतिपातितम्** । क्ली । अस्थिभङ्गविशेषे । तेनास्थि नि शेषेण भिन्न भवति । सु नि १५ भ ।

**अतिपिच्छ** । पु । श्वेतरक्तालुके । वै निघ ।

**अतिपिच्छला** । स्त्री । कुमार्य्याम् । घृत-कुमारी । वै निघ

**अतिपिञ्जर** } **अतिपोडक** } पु । दुष्टव्रणे । च ।

**अतिबला** । स्त्री । (Sida rhombifolia) पीतबलायाम् । পীতবর্ণ বেড়েলা, পীত বাড়ুনি । हि कङ्किहिया । म पिटारिणी । तत्पर्य्याया — बलिका, बल्या, विकङ्कता, वाट्यपुष्पिका, घण्टा

शीता, शीतपुष्पा, भूरिबला, वृष्यगन्धिका। गुणा —तिक्ता कटु वातघ्नी कृमिघ्नी दाहतृष्णाविष च्छर्दिक्लेदोपशमनी च। रा नि व ४। शीतला मधुरा बलकान्तिकृत्। स्निग्धा ग्राहिणी वातरक्त रक्तपित्तक्षतघ्नी च। मद व १। इयं महाबला कृच्छ्र भवेद्वातानुलोमनी। इत्यादतिबला मेह पयसा सितया समम्॥ भा पू १भ गु व। सु सू ३८ सशमनी। च मु ४अ। सु सू कृमिचि। चि क्र क वही स्त्रीरोगचि। वा उ ४० अ। श्वेतबाट्यालक। गोरक्षतण्डुलाया। (গোরক্ষ চাকুলিয়া, বালিয়া) खिटर्वी। विष्णु नारायणतैले। शतावर्योषी मा की। चि क्र क वही केतक्यादितैले।

**अतिबलिका** } **अतिबली** } स्त्री। वाट्यालके। रा नि व ४।

**अतिभारगः**। पु। अश्वतरे। खच्चर इति लोके।

**अतिभौ**। स्त्री। चणप्रभायां। विद्युत्।

**अतिभोजनम्**। क्ली। अतिमात्रया भोजने। गुणा—आलस्यगौरवाटोपसादाश्च कुरुतेऽधिकम्। म सु ४६अ कृतान्नव।

**अतिमङ्गल्यः**। पु। (Aegle or cratoeva marmeloes) बिल्ववृक्षे। रा नि व ११।

**अतिमञ्जुला**। स्त्री। कण्टकसेवतीवृक्षे। हि सेवती गुलाब। গোলাপ, বড় গোলাপ। भा पु १भ पु व। मद व ३। See सेवती।

**अतिमण्डल**। पु। सुधामनवृक्षे। वै निघ।

**अतिमन्य (क)**। पुं। अग्निमन्थवृक्षे।

**अतिमुक्त (कः)** } **अतिमुक्तका** } पु। Mountain ebony तिनिशवृक्षे। असम। तिन्दुक वृक्ष। টেঁদ, গাব। तत्पर्याया —पुण्ड्रक, मल्लिनी, भ्रमरानन्दा, कामुककान्ता। नवमल्लिकाभेदे। म मे रायविर। वासन्ती। (Goertnera rocemosa) माधवीलतायाम्। प सु। 'अतिमुक्तकमिच्छन्ति वासन्तीं माधवीलताम्।' छला ५४। अतिमुक्तमुनि सङ्कि वासन्त्यां तिनिशे इति च। मे तयमुक्त। वा उ १३अ। "तथाति मुक्तकैरण्ड।" भा पु १भ। गुणा—कषाय शीतल श्रमघ्न पित्तदाहज्वरोन्मादहिक्काच्छर्दिघ्नश्च। रा नि व १०। See तिनिश। माधवी मधुरा शीता लघ्वी दोषत्रयापहा। भा पू १भ पु व (क) हरिमन्थे। हारा।

**अतिमुक्ततैलम्**। क्ली। अतिमुक्तकबीजतैले गुणा—वातपित्तघ्न केश्य श्लेष्मल गुरु शीतलश्च वा टी हेमा।

**अतिमुक्ता**। स्त्री। अतिमुक्तकायाम्। रा नि व १०।

**अतिमोदनी(दिनी)**। स्त्री। नवमल्लिकायां रा नि व १०।

**अतिमोदा**। स्त्री। (Jasminum arboreum) नवमल्लिकायां। সেউতি। रा नि व १० गणिकारीवृक्षे स्वनामा कोंकणदेशे ख्याते गणिवि। रा नि व १०।

**अतियवः**। पु। निःशूकयवे। कृष्णवर्णे यवे मद व १०। निःशूकोऽतियव स्मृत। यवादतियवं न्यून। भा पू १भ धान्यव।

**अतियुक्त**। त्रि। वारम्वार प्रयुक्ते। भा म ख १भ अ सा। "स्नेहार्थैरतियुक्तैं।"

**अतियोग'**। पु। अतिशयितप्रयोगे। वा सू १० अ।

**अतिरक्त**। पु। हिङ्गुले। वै निघ।

**अतिरक्ता**। स्त्री। जवापुष्पवृक्षे। वै निघ।

**अतिरस'**। पु। पौण्ड्रके। श मा।

**अतिरसा**। स्त्री। मूर्वायाम्। मूर्वा। वै निघ २भ अप चि पलङ्कषातैले। रास्नायाम्। मद व ३। यष्टीमधुनि। रा नि व ६। शतमूल्याम्। च सू ४।

**अतिरुहा**। स्त्री। मांसरोहिण्याम्। रा नि व १२। भा पू १भ। मद व १।

**अतिरूक्ष**। त्रि। स्नेहशून्ये, कङ्गुकोद्रवादौ।

**अतिरेचक**। पु। काकोल्याम्। वैद्यके। वै निघ।

**अतिरोग**। पु। क्षयरोगे। राजयक्ष्मणि। रा नि व ७०।

**अतिरोमश**। पु। वन्यछागे। हारा।

**अतिरोमशा**। स्त्री। नीलवुह्नायाम्। छागल दৈটে। प सु।

**अतिलङ्घितम्**। क्ली। अपतर्पणे। लङ्घने

—पञ्चभेदी ऽङ्गमर्द्दय काम शोषी सुखस्य च। चुन्नप्राणोऽरुचिस्तृष्णा दौर्ब्बल्य शोवनैवयी। मनस सम्भ्रमो ऽभीक्ष्ण मूह वात समी हृदि। देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत्॥ च द।

**अतिलम्बी**। स्त्री। शताह्वायाम्। भा पू १भ।

**अतिलोहितगन्ध**। पु। दमनकवृत्ते। ष्टना। प सु।

**अतिवर्त्तुल**। पु।(Sida rhombifolia) कलायविशेषे। मटर बाटुला, कडाइ। र मा।

**अतिविदाही**। त्रि। राजसर्षपादौ।

**अतिविद्धा**। स्त्री। दुष्टव्यधनविशेषे। प्रमाणातिरिक्तविद्धायाम्। सु श ८।

**अतिविष (षा)**। स्त्री। (Aconitum heterophyllum) स्वनामख्यातोपविषजातीयपण्य द्रव्ये। आतइच्। हि आतइष। अतिविषा सर्व्वत्र भाषा। तें अतिवसचेट्टु। तत्पर्य्याया,—घुण वल्लभा (भा)। शृङ्गिका (शब्दर) विश्वा विषा प्रतिविषा उपविषा अरुणा शृङ्गी महौषध (अ) काश्मीरा श्वेता (र) प्रविषा (के) श्वेतकन्दा भङ्गुरा भङ्गुरा विरूपा श्यामकन्दा विषरूपा वीरा माद्री श्वेतवचा अमृता। अतिविषा शुक्लकृष्णारुण भेदात् त्रिधा रसवीर्य्यविपाकेषु तुल्या। गुणा— कटूष्णा तिक्ता कफपित्तज्वरघ्नी आमातीसारकासघ्नी विषघ्नी छर्द्दिघ्नी च। रा नि व ६। वा सू १५अ वचादि। नागरातिविषाभया। च द ज्व चि पिप्पल्याद्यघृते। मदनपालस्तु श्यामकन्दोपविषयो श्चतुर्भेदानाह श्वेत रक्त कृष्ण पीतत्वात् ते तासा यथापूर्व्व श्रेष्ठा गुणोत्तमा सर्व्वदोषहरा शोथघ्नी श्लैष्मिक रोगघ्नी रसायनी च। मद व १। अतिविषाकटुकी प्रभृतीनाम् श्वगोमयजलेन शुद्धिर्ज्ञातव्या। सा कौ।

**अतिवीज**। पु। वव्वुलकवृत्ते। बाबलागाछ। वै निघ।

**अतिवृहत्फल**। पु। पनसवृत्ते। काँटाल गाछ। भा पू १भ।

**अतिव्यथा**। स्त्री। अतिशयितयन्त्रणायाम्। पीडायाम्।

**अतिव्याय**। पु। व्यायामाधिक्ये। अधिक दुष्टि रुद्ध। अत्यायामी न पथ्य। अति व्यायामत कासो ज्वरश्छर्द्दि श्रम क्लम। तृष्णा चय प्रतमक रक्तपित्तञ्च जायते॥ भा पू १म।

**अतिशष्कुली**। स्त्री। तिलकृतरोटिकायाम्। गुणा—रुच्या श्च अपित्तासघ्नी गुरु विष्टम्भिनी न चक्षुष्या च। भा पू कृतान्नव।

**अतिशारिवा**। स्त्री। अनन्तायाम्। अनन्तमूल। र मा।

**अतिशूक**। पु। यवे। यव। प सु।

**अतिशूकज**। पु। गोधूमे। गम। Wheat

**अतिशृतक्षीरम्**। क्ली। अतिक्वथिते दुग्धे कवलभीम्यवत सञ्जाते। ঢেলা ক্ষীর। तद्गुरुतरम्। स्यान्निर्जल घृत तद्दिविचतुरष्टाशशेषितम। तथा शृततम सार गुरु बल्यतम पय॥ वा सू ५अ अरु टी खरनाद।

**अतिशोष**। पु। चयरोगे। See चय।

**अतिसख्या**। स्त्री। वल्लीयष्टिमधुनि।

**अतिसर्जनम्**। क्ली। वधे। मे नपचक।

**अतिसान्द्र**। पु। राजमाष। बाँकाशी, बरवटी। रवा।

**अतिसाम्या**। स्त्री। कृष्णमुखगुञ्जावल्लाम्। लतायष्टिमधुनि।

**अतिसार**। पु। पर्पटके। मद व १। हि पापडा। उदरामयरोगविशेषे। See अतीसार।

**अतिसारकी**। त्रि। अतिसाररोगिणि।

**अतिसारघ्न**। पु। चेत्रपर्पटके। ক্ষেতপাপড়া। वै निघ।

**अतिसारघ्नी**। स्त्री। अतिविषायाम्। वै निघ।

**अतिसारभेषजम्**। क्ली। औषधे। तद्रोगनिवारके औषधे।

**अतिसारवारणरस**। पु। अतिसारे रस। "रस कृतकर्पूर कुमेन्द्रयवसंयुतम्। सञ्चाति सारशमन स्वात्वसौधीरभावितम्॥" भै। अत्र कृतकर्पूर पक्वकर्पूरम्। स्वात्वसौधीर अहिफेनम्। र मा स।

**अतिसारन्या**। स्त्री। श्यामायाम्। वै निघ।

**अतिसूक्ष्म**। त्रि। अतिशयसूक्ष्मे।

**अतिसेवनम्**। क्ली। अधिकमात्रया सेवने।

**अतिसौम्या**। स्त्री। वल्लीयष्टिमधुकं। रा नि व ४।

**अतिसौरभः** । पु । आम्रवृक्षे । भा पू फ व ।

**अतिस्कन्धा** । स्त्री । रक्तकुलत्थके । वै निघ ।

**अतिस्थूलवर्त्मा** । पु । दुष्टव्रणविशेषे । च ।

**अतिस्निग्धः** । त्रि । अत्यन्तस्निग्धे । तस्य लक्षणम् —कफप्रसेक शिरसो गुरुतेन्द्रियविभ्रम । लक्षण तदतिस्निग्धे रूक्षं तत प्रदापयेत् ॥ वै निघ । नस्यचि ।

**अतिसवा** । स्त्री । मयूरवल्याम् । मूर्वा । वै निघ ।

**अतिक्षिप्तसन्धिः** । पु । सन्धेरतिशयविश्लेषे । सन्धिच्युत सदुर्बैरवस्थान । तेन सन्ध्यस्थ्नोरुभयोरेवा तिक्रान्तता वेदना च । सु नि १५ष । See भग्न ।

**अतीसारः** । पु । Diarrhœa or dysentry अतीव सरति, प्रकृतिमतिक्रम्य गुदमार्गेण सरतीति अतीसार । स्वनामख्यातोदरामयरोगे, बहुद्रवमल नि सरणरोगे । तस्य निदान गुरुभोजनादिकम् । तस्य निरुक्ति —रसादिद्रवधातूनामग्नि मन्दीकृत्य मलेन सह मिश्रितानां वायुना चाध प्रणुन्नानां अतिनि सरणादतीसार उच्यते । तस्य च पूर्वरूप —हृदयनाभिगुदोदरादिस्थानेषु सूचीविद्धवद्वेदना, कायावसादवायुमलविबन्धतोदोदराध्मानापरिपाकादिकञ्च । स षड्विध वातपित्तकफसन्निपातशोकापरिपाकजभेदाद्भवति । तत्र वातजे मलस्यारुणता फेनिलता रूक्षता पक्वता तथा गुदे सशब्दवेदनमल्पशो मुहुर्निःसरणञ्च लक्षणं भवति । पित्तजे च मलस्य हरितपीतलोहितवर्णता तृष्णामूर्च्छादाहा मल द्वारे ज्वाला चेतञ्च लक्षणम् , कफजे च शुक्लगाढ सकफामगन्धिशीतलमला नि सरन्ति, रोगी सरो माञ्चश्च भवति । सान्निपातिके च वातजादिलक्षणानि दृश्यन्ते, प्रायशश्चात्र मला शूकरवसा मांस धावनवारिवद्भवन्ति । शोकजे च गुञ्जाफलसदृश शोणित केवल मलमिश्रितं मलरहित वा सरति, तत्र मलसहित चेत् दुर्गन्ध मलरहित चेन्निर्गन्ध भवति । आमातिसारे च नानावर्णं वारंवारञ्चाति सार्यते, तथा तत्रोदरशूलमतीव जायते । अती सारस्य चासाध्यलक्षण—मलस्य कृष्ण स्निग्धता, यकृत्खण्डवत् कृष्ण रक्तवर्णता, घृततैलवसामज्ज दधिदुग्धमांसधावनवारिसदृशता, कृष्ण नीलवर्णता, इषत्कृष्णरूक्षचिक्कणता, शिखिपुच्छवत् विविधवर्णचन्द्रकयुक्तता, घनशवगन्धिमस्तिष्काभता, सुगन्धपूतिगन्धबहुलता च, तथा तृष्णादाहान्धकारदर्शन, हिक्काश्वासपार्श्वशूलेन्द्रियचित्तमोहा गुह्याभ्यन्तर वलिपाक प्रलापश्च, तथा गुदसंवरणाक्षमता बल मांसहीनता अतीवोदराध्मान शोथ, मलद्वारस्य पक्वता सर्वेऽपि गात्रस्य शीतलता उपद्रवाश्च । चिकित्सा स्वस्वपर्याये प्रदर्शनीया । अतीसारे नाना विधद्रवधातुनि सरणम् अन्यत्र केवलमेव कफनि सरणमित्यतिसारप्रवाहिकयोर्भेद । इति माधवकर सग्रहादतीसारसग्रह । शार्ङ्गधरस्तु भयजयुक्ता सप्तविधमाह । तस्य सम्प्राप्ति सशम्यापां धातुरग्नि क्रशानु वर्चोमिश्रो मारुतेन प्रणुन्न । वृद्धोऽतीवाध सरत्येव यस्माद्व्याधि घोर त त्वतीसारमाहु ॥ हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधा । विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुर सराणि ॥ तस्य निदानम्—गुर्वतिस्निग्धरूक्षोष्ण द्रवस्थूलातिशीतलै । विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनै ॥ स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषा द्भयात् । शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्तुपर्ययात् ॥ जलाभिरमणैर्वेगविघातै क्रिमिदोषत । नृणां भवत्यतीसारो लक्षण तस्य वक्ष्यते ॥ सु उ ४०अ । स च वातपित्तकफसन्निपातशोकामजभेदात् षड्विध इति । अथातिसारलक्षणम्—अनिलेनाथ पित्तेन श्लेष्मणा चापि वाजिन । अतीसारस्तथा चान्य सन्निपातेन जायते ॥ सङ्कोचिताङ्ग स्वानेन सकफ योऽतिसार्यते । अल्प तनु सशब्दञ्च पुरीष बहु वा हय ॥ तस्य वातात्मक विद्यादतीसार विचक्षण । पित्तजञ्चैव वक्ष्यामि श्लेष्मजञ्च समा सत । स्वेददाहपरीतानां लक्षयेत्तिमान् भिषक् । मात्रेण नीलरक्तेन विसगन्धेन पित्तजम् ॥ मन्दाहारस्तथा वाही हृष्टरोमातिपीडित । श्याम सपिच्छिलस्निग्धं विद्यात् श्लेष्मसमुद्भवम् ॥ सन्निपाता त्मकश्चैव सर्वेषां लक्षणैर्युतम् । त्रिरूप द्वन्द्वजं ज्ञेयमतीसार विचक्षणै । अतीसारा समुद्दिष्टा शालिहोत्रादिभि पुरा ॥ ज द ४२अ ।

**अतुल** । पु । कफे । तिलकवृक्षे । श च ।

**अतृप्ति** । स्त्री । तृप्तिशून्यत्वे । अपरितोषे ।

**अतेजा** । स्त्री । छायायाम् । रा नि व २१ ।

**अत्क** । पु । अङ्गे । उणा ।

**अत्न** । पु । सूर्ये । वै निघ ।

**अत्य** । पु । अश्वे ।

**अत्यग्नि** । पु । क्षुधाधिक्य ... द अग्निमा न्द्य ... त्रि । भस्मके । विज र ।

**अत्यन्तपद्मा** । स्त्री । कमलिन्याम् । वै निघ ।

**अत्यन्तशोणित** । त्रि । अतिरक्ते । क्ली । सुवर्णगैरिके । वै निघ ।

**अत्यन्तसुकुमार** । पु । (Panicum Italicum) कन्दलीवृक्षे । कङ्गुन्याम् । रा नि व १६ ।

**अत्यम्बुपानम्** । क्ली । मात्रातिरिक्तवारिपाने । तद्दोषो यथा—अत्यम्बुपानान्न विपच्यतेऽन्न मनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्द्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ इति जलपानलक्षणम् । रा नि व १४ ।

**अत्यम्ल** । पु, क्ली । (Spondias mangifera) वृक्षाम्रे । (ঁ)ড়ুন । रा नि व ८ । See तिन्तिडी । वनमातुलुङ्गे । मातुलुङ्गे । त्रि अत्यन्ताम्लरसयुक्ते ।

**अत्यम्ला** । स्त्री । मातुलुङ्गवृक्षे । वनबीजपूरे । मधुरलेबु, मधुटाबा बा मधुलेबु । रा नि व ११ । मशाकाँकुडी । एवा तिन्तिड्याम् । श र ।

**अत्यम्लपर्णी** । स्त्री । वज्रिपूर्णे लताविशेषे । कड्वड्वेलि । हिंगोलि । रा नि व ८ । तत्पर्याय,—तीक्ष्णा, कण्डुरा, वज्रिपूरण, करवड्वल्ली, वसा, अरण्यवासिनी । अम्लवल्ल्याम् । आमरुल । गुणा—अत्यम्लपर्णी तीक्ष्णाम्ला शोथगुल्मविनाशिनी । वातहृद्दीपनी रुच्या गुल्मघ्नी चामनाशनी ॥ रा नि व ३ । माला ३ माषा ।

**अत्यय** । पु । नाशे, दोषे, कृच्छ्रे । एवा अने च । म अतिक्रमे ।

**अत्यर्क** । पु । शुक्लार्कवृक्षे । श्वेत आकन्द गाछ । रा नि व १० ।

**अत्यानन्दा** । स्त्री । कफजन्ययोनिरोगविशेषे, येन स्त्री ग्राम्यधर्मेण सन्तोषं न लभते । अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण विन्दति । भा म ख ४भ योनिरोगचि ।

**अत्यारूढा** । स्त्री । अजापृष्ठवृक्षे ।

**अत्याम्ल** । पु । रक्तचित्रक वृक्षे । रा ।

**अत्युग्रम्** । क्ली । हिङ्गुनि । मद व २ ।

**अत्युग्रगन्धा** । स्त्री । कृष्णजीरकायाम् । कृष्णापराजितायाम् । अजमोदायाम् । मद व २ ।

**अत्युदीर्णा** । स्त्री । दुष्टस्तनविशेषे । यत्र तीक्ष्ण महामुखशस्त्रेण वेधो भवति । सु शा ८४ ।

**अत्यूह** । पु । कालकण्ठपक्षिणि । दात्यूहे । मेदिनिक ।

**अत्यूहा** । स्त्री । नीलशेफालिकायाम् । नीलिकायाम् । मे हविक ।

**अत्रि** । पु । ऋषिविशेषे ।

**अत्रिदृग्जात** । पु । चन्द्रे । हे ।

**अदनम्** । क्ली । भक्षणे ।

**अदन्त** । त्रि । दन्तहीने ।

**अदल** । पु । हिज्जलवृक्षे । श च । छत्रे ।

**अदला** । स्त्री । घृतकुमार्याम् । श नि ।

**अदम्र** । पु । महामूलके । बड मूला ।

**अदारिका** । स्त्री । वृक्षकमले, वृक्षोत्पले । ওলটু কমল । वै निघ ।

**अदिति** । स्त्री । गवि । के ।

**अदृक्** । त्रि । अन्धे ।

**अदृग्** । पु । दृते । उ ।

**अदृढ** । त्रि । अस्थिरे । क्ली । तृणविशेषे । वै निघ ।

**अद्भुतसार** । पु । खदिरसारे । रा नि व ८ ।

**अद्यम्** । क्ली । धान्ये ।

**अद्यतन** । त्रि । अद्यभवे । আজিকার ।

**अद्यनि** । पु । अग्नौ । उ ।

**अद्यश्विना**, **अद्यश्वीना** } स्त्री । आसन्नप्रसवायां गवि ।

**अद्रक** । पु । महानिम्बवृक्षे । वै निघ ।

**अद्रि** । पु । पर्वते । शैलवृक्षे । मे रद्विकं । परिमाणविशेषे ।

**अद्रिकर्णी** । स्त्री । अपराजितायाम् । श्वेतापराजितायाम् । रा नि व २३ ।

**अद्रिका** । स्त्री । धान्यके । धने । महानिम्बे । भा पू १गु व ।

**अद्रिज** । त्रि । गिरिजाते । क्ली । शिलाजतुनि । रसा एवा । तुम्बुरुफले । रा नि व ११ । गैरिके ।

**अद्रिजतु** । क्ली । शिलाजतुनि । উমা । भा ।

**अद्रिजा** । स्त्री । महत्सिंहपर्णीवृक्षे । रा नि व ४ ।

**अनुपशय** । पु । What increases the disease उपशयविपरीते व्याध्यसात्म्यौषधान्न विहारादौ । यथा—हेतुव्याधिविपर्यस्तविपर्यस्तार्थ कारिणाम् । औषधान्नविहाराणामुपयोगं सुखावहं । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृत ॥ विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञित । मा नि पञ्चनिदाने ।

**अनुपानम्** । क्ली । औषधाद्नुपेयविशेषे । अनूपान । तत्र औषधपानानन्तर विलम्ब्य प्रयोज्य, रात्रौ पुन पाचनमेव व्यवस्थेयम् । विलम्ब्य च क्षामणमेतदीरित रात्रौ पुन पाचनमेतदूचिरे । ' रा नि व २० । वातेऽनुपान स्निग्धोष्ण श्लेष्मणि रूक्षोष्ण, पित्ते स्निग्ध, स्नेहपाने उष्णोदकमित्यादि । मद व १२ । "चूर्णावलेहगुडिकाकल्कानामनुपानकं । वातपित्तकफोद्रेके त्रिद्विएकपलमाहरेत "। शार्ङ्ग म ख ६ अ ।

**अनुपालु** । पु । पानीयालुके । वन आलू । रा नि व ७ ।

**अनुपुष्प** । पु । (Saccharum sara) शर तृणे । श च । खड्गतृणे । वेतसे ।

**अनुबन्धी** । स्त्री । तृष्णाया । हिक्कायां । मे ।

**अनुभास** । पु । काकविशेषे । वै निघ ।

**अनुभूति** । स्त्री । त्रिवृतायाम् । तेउडी । हि निशोत्तर । See त्रिवृत् ।

**अनुमतम्** । क्ली । "परमतमप्रतिषिद्धम् । यथान्यो ब्रूयात् सप्तरसा" इति सु उ ६५ अ ।

**अनुयव** । पु । यवाणूनोऽनुयव । वा । निःशूक यवे । क्षेमा । गुणा —हृद्य स्थैर्यंकर मूत्रमेद पित्तकफघ्न पीनसश्वासकासोरुस्तम्भकण्ठरोगघ्नश्च । वा शूकधान्यवर्गे ।

**अनुरुहा** । स्त्री । नागरमुस्तायां । नागरमोथा ।

**अनुरेवती** । स्त्री । चुन्दन्याम् । रा नि व ६ ।

**अनुलास** । पु । मयूरपक्षिणि । मयूर ।

**अनुलास्य** । पु । मयूरपक्षिणि ।

**अनुलेप**, **अनुलेपनम्** } पुं, क्ली । चन्दनादौ । गन्धद्रव्यादिलेपने । चन्दनादि-लेपन ।
गुणा — अनुलेपन तृषामूर्च्छादौर्गन्ध्यश्रमवातजित् । सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धन ॥ मद व १२ । अपिच—अनुलेपनक वर्ण्य तेज सौभाग्यदायकम् । लघु प्रीतिप्रद प्रोक्त तृष्णामूर्च्छाश्रमनाशन । दौर्गन्ध्य वातहृत् प्रोक्त पूर्व्वाचार्य्यैरिद स्मृतम् ॥ वै निघ । प्रीतिकर, ओजस्कर, शुक्रवर्द्धन, दौर्गन्ध्यहर, श्रम पापतन्द्राहरञ्च । राज ।

**अनुलोमनम्** । क्ली । अनुलोमकरणे । मलादिधातूना यथामार्ग गमनोपाये । मलादि धातुर यथापथे गमनोपाय । यथा—कृत्वा पाक मलाना च भित्त्वा बन्धमधो नयेत । तच्चानुलोमन प्रोक्त यथा प्रोक्ता हरीतकी ॥ भा ।

**अनुल्की** । स्त्री । हिक्कायाम् । तृष्णायाम् । मे ।

**अनुवास**, **अनुवासन**, **अनुवासनक** } पु, क्ली सौगन्ध्ये । स्नेहवस्तौ । स्नेहने । धूपने । मे । "य स्नेहो दीयते स स्यादनुवासननामक । तस्य माता च पलद्वय तदर्द्ध वेति । भा ।

**अनुवासनवस्ति** । पु । स्नेहवस्तौ । मात्रा वस्तौ । "अनुवासनभेदश्च मात्रावस्तिरुदीरित "। भा । स च तैलादिस्नेहोपकरणै स्नेहक्वाथादिना वा साध्यते गोपुच्छाकारेण स्वर्णादि निर्म्मितेन गजदन्तादिकृतेन वा नेत्रेण (पिचकारी वा नल) । नेत्र परिमाण वयोभेदेन विविधम् । एकवर्षी यात षड्वर्षपर्यन्त षडङ्गुल । अष्टवर्षे अष्टाङ्गुल । षोडशवर्षे द्वादशाङ्गुल । प्रत्येकस्य परिणाहो यथाक्रम कनिष्ठिकानामिकामध्यमाङ्गुलि परिमित । एतेषाञ्च प्रत्येक यथाक्रम साडाङ्गुल साडद्व्यङ्गुल साडत्र्यङ्गुलञ्च वस्तिमुखे सन्निवेश्यम् । वस्तिनाल प्रवेशनीयनेत्रमुखञ्च यथाक्रम कङ्कश्येनमयूरपुच्छ मध्यनाडीवत स्थूल भाव्यम् । येन च द्रव्यस्थापन तत्परिमाण पर्व्वोक्तवयोऽनुरूपमेव यथाक्रम रोगिणो द्व्यञ्जलिपरिमाण चतुरञ्जलिमितमष्टाञ्जलिमितञ्च भाव्यम् । एवमुत्तरोत्तर वयोऽनुरूप नेत्रादिमानं वर्द्धनीयम् । नेत्रीयञ्च—पञ्चविंशतिवर्ष नेत्रञ्च द्वादशाङ्गुल मूलपरिणाहश्च अङ्गुष्ठोदरसन्निभो भाव्य । गृध्रिनीपक्षनाडिकावत्तदग्रभाग वदराम्थि मित वा कलायपरिमित वा छिद्रवत्त्व भाव्यम् । वस्तिबन्धनार्थञ्च नेत्रमूले कर्णिकाद्वयं (कानि) कार्य्यम् । द्रव्यमानञ्च रोगिणो द्वादशाञ्जलि । अत ऊर्द्ध्वं माधुकतैल ग्राह्यम् । सु चि ३५ अ । एत त्प्रकरण सु चि ३५।३६।३७ अ द्रष्टव्य । विरेचनान्तरात्रे गते जातबलाय च । भुक्तान्नायानुवासनाय वस्तिर्देयोऽनुवासन । यथानुवासयत्यपि अनुवासनमुच्यते ।

स्विदित शनै । भोजयित्वा यथाशास्त्र कृतचङ्क्रमण ततः । उत्सृष्टानिलविण्मूत्र योजयेत् स्नेह वस्तिना । सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः । कुञ्चितापरजङ्घस्य नेत्र स्निग्धे गुदे न्यसेत् । अथ वस्तिमुखे सूत्र वामहस्तेन धारयेत् । पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधी । जृम्भाकासक्षवादींश्च वस्तिकाले न कारयेत् ॥ वं निघ वस्तिविधि । अथाशस्य यथा—अथानुवासनविधेरन्तर्यंवाप्यापनस्य च । प्रव स्यामि यथायोग शास्त्रदृष्टेन वर्त्मना ॥ काष्ठैर्दण्डैरयोभिश्च शङ्खवशनलादिभि । द्वादशाङ्गुलदीर्घन्तु परिणाहे षडङ्गुलम् ॥ कोलास्थिमात्रच्छिद्रन्तु कुर्य्यान्नेत्र विचक्षण । मूलादनुक्रमश्लक्ष्णमस्यणन्तु विशेषत । त्यक्ताङ्गुलानि चत्वारि कर्णिकाञ्चास्य कारयेत । पुटकञ्चास्य बध्नाय मूले द्वे चापि कर्णिके ॥ अनेनास्थापन कुर्य्यादनुवासनमेव च । यथायोग्य भिषक् प्राज्ञ सर्व्वरोगोपशान्तये ॥ अनुवासनविव रणम्—त्रिरात्र पञ्चरात्र वा सप्तरात्रमथापि वा । भोजयित्वा षष्ठ प्राज्ञो रसकञ्चेष्टभोजने ॥ भोजित भोजनीयेन दिनान्ते चानुवासयेत् । निरूह वेदना द्वारसपराह्णे विचक्षण ॥ त्रिभिरात्रे प्रदातव्यो निरूह शास्त्रकोविदे । दूषयोश्च प्रयोक्तव्य प्रथम पुटकोविदे ॥ द्वितीयञ्च तृतीयञ्च तोयौ चैव प्रकीर्त्तितौ ॥ ज द १६ अ ।

**अनुवासनोपगवर्ग** । पु । षड्‌विंशदशक नाम कषायवर्ग । यथा—रास्नासुरदारुविल्वमदन शतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योणाका इति दशेमानि ॥ वृश्चीर श्वेतपुनर्नवा । च सू ४अ ।

**अनुवासाख्य.** । पु । अनुवासने । व निघ ।

**अनुवेल्लितम्** । क्ली । शास्त्रासु व्रणबन्धनभेदे । सु सू १८अ ।

**अनुशयी** । स्त्री । क्षुद्ररोगान्तर्गत पादरोग विशेषे । तल्लक्षण यथा—गम्भीरामल्पशोथाञ्च सवर्णा सुपरिस्थिताम् । पादस्यानुशयीं तान्तु विद्यादन्त प्रपाकिनीम् ॥ चि—हरेदनुशयीं यस्य क्रियया श्लेष्मविद्रधे । भा पाद रो चि ।

**अनुशस्त्रम्** । क्ली । त्वक्सारस्फटिककाचजलौकाग्निक्षारनखादिरुपशस्त्रेषु । तानि च शिशुभीरु प्रभृत्यर्थम् । सु सू ८अ ।

**अनुष्णम्** । क्ली । उत्पले । नीलपद्म । रा नि ।

**अनुष्णवल्लिका**
**अनुष्णवल्ली** } स्त्री । नीलदूर्व्वायाम् । रा नि व ८ ।

**अनुसार्य्यकम्** । क्ली । सुगन्धद्रव्यविशेषे । मे ठडीला ।

**अनूचान** । पुं । उत्तमवेदे साङ्गवेदाध्यायिनि ।

**अनूप** । पु । महिषे । मे पतिके । अम्बुप्राय देशे । मे । तल्लक्षण यथा—“बहम्बुवृक्षबहुल वात श्लेष्मामयान्वित । देशोऽनूप इति ख्यात ॥ तथा नदीपल्वलशैलान्त्यफुल्लोत्पलकुलैर्युत । हससारस कारण्डचक्रवाकादिसेवित । सरो वराहमहिष-रुरुरोहितकुलाकुल । प्रभूतद्रुममुख्याढ्यो नाना शस्यफलान्वित । अनेकशालिकेदारकदलीचुविभूषित । अनूपदेशो ज्ञातव्यो वातश्लेष्मामयान्वितः” । भा । गुणा —गुरु , सान्द्र , पिच्छिल , मधुर , श्लेष्मल , स्निग्ध , प्रमेहगलगण्डश्लीपदकृद्‌-कारय । रा नि । राजवल्लभस्तु स्निग्ध शीतल वातश्लेष्मल गुरुश्चाह ।

**अनूपजम्** । क्ली । आर्द्रके । रा नि व ६ । त्रि । अनूपदेशोत्पन्नद्रव्यमात्रे । पुं । वृक्षविशेषे । আঁব গাছ । वै निघ ।

**अनूपदेश** । पु । अनूपलक्षणयुक्तप्रदेशे । See अनूप ।

**अनूपमासम्** । क्ली । अनूपदेशस्थजन्तुमांसे । See आनूपमासम् ।

**अनूष्णम्** । क्ली । उत्पले । শুন্দিফুল, শালা । रा नि व १० ।

**अनृजु.** । त्रि । शठे । असरले । पु । तगरपुष्पवृक्षे ।

**अनेकदिग्वायु** । पु । नानादिग्भवविसङ्कुलवाते । এলো মেলো বাতাস ।

**अनेकप.** । पु । गजे । হাতী । मद व ११ ।

**अनेकान्त** । पु । क्वचित्तथा क्वचिदन्यथेति य म । सु उ ६५ अ ।

**अनेडमूक** । त्रि । वाक्‌श्रुतिरहिते । मे । अन्धे ।

**अनोकह.** । पु । वृक्षे । গাছ ।

**अन्त काण्डशल्यावलोकिनी** । स्त्री । नाडीयन्त्रविशेषे । सा च दशाङ्गुला भवति । अत्रि ।

**अन्त:करणम्** । क्ली । अन्तरिन्द्रिये, मनसि ।

**अन्त.कुटिल:** । पु । शङ्खे । শাঁক ।

**अन्त.कोटरपुष्पी (ष्पिका)** । स्त्री । नील वृन्तायाम् । ছাগলবেঁটে । प मु । ख्या ।

**अन्तःपदवी** । स्त्री । सुषुम्नाख्यनाड़िकायाम् ।

**अन्तःसत्त्वा** । स्त्री । भल्लातकवृक्षे । गर्भिण्याम् । श च ।

**अन्तक** । पु । कारस्करवृक्षे । वद्ध्रपाक्षेन । भा गु व । यमे । सन्निपातज्वरविशेषे । तल्लक्षणं— यथा—दाहं करोति परितापनमातनोति, मोहं ददाति विदधाति शिरःप्रकम्पम् । हिक्कां करोति कसनञ्च समातनोति, जानीहि तं विबुधवर्जित मन्तकाख्यम् । भा म १म ।

**अन्तरम्** । क्ली । अवकाशे । छिद्रे । मध्ये । मे रविक ।

**अन्तरापत्या** । स्त्री । गर्भिण्याम् ।

**अन्तरायाम** । पु । आक्षेपकभेदे । लक्षणं यथा —अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रित । स्नायु प्रतानमनिलसभ्र क्षिपति वेगवान् ॥ विष्टब्धाक्ष स्तब्धहनुर्भग्नपार्श्वः कफं वमन् । अभ्यन्तरे धनुरिव यदा नमति मानव । तदा सोऽभ्यन्तरायाम कुरुते मारुतो बली ॥ भा । मा नि ।

**अन्तरि(री)क्षम्** । क्ली । आकाशे । रा नि व १२ ।

**अन्तरिक्षजलम्**
**अन्तरीक्षजलम्** } क्ली । आकाशजले । वृष्टिर जले । See गगनाम्बु ।

**अन्तरुहा** । स्त्री । श्वेतदूर्वायाम् ।

**अन्तर्जठरम्** । क्ली । कोष्ठे । कुक्षिमध्ये । अम ।

**अन्तर्दधनम्** । क्ली । सुराबीजे । श च ।

**अन्तर्दाह** । पु । शरीराभ्यन्तरदाहे । गायेव भिजवे ज्वाला । कोष्ठसन्तापे । रा नि व २० । सन्निपातज्वरविशेषे । लक्षण यथा—अन्तर्दाह शैत्य बहि श्वयथुररतिरपि श्वास । अङ्गमपि दग्धकल्प सोऽन्तर्दाहादिति कथित ॥ भा म १म ।

**अन्तर्धूम** । त्रि । भाण्डमुखरुद्धकाभ्यन्तरे अग्नि दग्धे । च द ग्रहणी चि , चित्रकक्षारे ।

**अन्तर्मल** । पु । मलान्तवृक्षे । कश्चिदति ।

**अन्तर्महानाद** । पु । शङ्खे ।

**अन्तर्मुखम्** । क्ली । व्रणविस्रावणास्त्रविशेषे । लक्षण यथा—तद्वदन्तर्मुख तस्य मध्यमध्यर्द्धमङ्गुलम् । अर्द्धचन्द्रानन चैतत् तथाध्यर्द्धाङ्गुलं फल ॥ कश्चिदति ।

**अन्तर्मुखी** । स्त्री । स्त्रीयोनिरोगविशेषे । तल्ल क्षण —व्यवायमतितृप्ताया भजन्त्यास्त्व पीडित । वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थित ॥ वक्रयत्याननं योन्या सास्थिमांसानिलार्तिभि । भृशार्ति मैथुनाशक्ता योनिरन्तर्मुखी मता ॥ च चि ।

**अन्तर्वत्नी** । स्त्री । गर्भिण्याम् । अम ।

**अन्तर्वमि** । स्त्री । अपरिपाके । चिका ।

**अन्तर्विद्रधि** । पु । जठराभ्यन्तरस्थविद्रधिरोगे । लक्षण यथा—पृथक् सम्भूय वा दोषा कुपिता गुल्म रूपिणं । वल्मीकवत् समुन्नद्धमन्त कुर्वन्ति विद्रधिम् ॥ गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा । वृक्कयो प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ । एषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणै ॥ भा ।

**अन्तर्वृद्धि** । पु । अन्त्रवृद्धिरोगे ॥ See अन्त्र वृद्धि ।

**अन्तर्वेध** । पु । मर्म्मवेधे । मर्म्मपीडायाम् ।

**अन्तशय्या** । स्त्री । मरणे । मे ।

**अन्तःस्नेहफला** । स्त्री । श्वेतकण्टकार्य्याम् ।

**अन्तावसायी** । (इन्) । पु । नापिते । मे ।

**अन्तिका** । स्त्री । सातलायाम् । चातकयां । चुल्ल्याम् । मे कविक ।

**अन्त्य** । पु । मुस्तायाम् । मे ।

**अन्त्यपुष्पा** । स्त्री । धातकीवृक्षे । वै निघ ।

**अन्त्रम्** । क्ली । पुरीतति । नाडीभूँडि । रा नि व १८ । उक्तं सार्द्धत्रयो व्यामा पुंसामन्त्राणि सूरिभि । अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्द्दिशेत् ॥ सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणा मर्द्धव्यामहीनानि । सु शा ५श । असृज श्लेष्म यश्चापि य प्रसाद परो मत । स पच्यमान पित्तेन वायुश्चाप्यनुधावति । ततोऽस्यान्त्राणि जायन्ते गुद वस्तिश्च दक्षिन ॥ इति तदुत्पत्ति । सु शा ४र्थ ।

**अन्त्रकूज** । पु । वायुरोगविशेषे । नाडीशब्दे । सु नि १म ।

**अन्त्रकूजनम्** । क्ली । अन्त्रध्वनौ । आँत्डाका, वायोवर्त्ता इति भाषा । नि ।

**अन्त्रपाचम्** । क्ली । स्थावरविषान्तर्गतवृक्षार्त्त- निर्यासविशेषे । सु कल्प २य ।

**अन्त्रवल्लिका** । स्त्री । महिषवल्ल्यां । रा नि व ३ ।

**अन्त्रवल्ली** । स्त्री । सोमवल्लीलतायाम् ।

**अन्त्रवृद्धिः** । स्त्री । Hernia स्वनामख्यात रोगविशेषे । तल्लक्षणं यथा—वातकोपिभिराहारैः शीततोयावगाहनैः । धारणेरणभाराध्वविषमाङ्गप्रवर्त्तनैः ॥ क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा । पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् । कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ उपेक्ष्यमाणस्य च मुष्कवृद्धिम् आध्मानरुक्स्तम्भवतीं स वायुः । प्रपीडितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः ॥ अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः । मा नि ।

**अन्त्राद** । पु । आभ्यन्तरकृमौ । मा नि । शार्ङ्ग ७ अ । See कृमि ।

**अन्त्रालजी** (मा) } स्त्री । वातश्लेष्मजन्य क्षुद्र
**अन्धालजी** (सु) } रोगविशेषे । तल्लक्षणं—घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् । अन्त्रालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥ मा नि ।

**अन्त्री** । स्त्री । वृद्धदारकलतायाम् । श टी ।

**अन्धकम्** । क्ली । अङ्गारे । रत्ना ।

**अन्दिका** । स्त्री । चुल्ल्याम् । श टी ।

**अन्ध** । त्रि । नेत्रहीने । क्ली । तिमिरे । मेधिके । (न्धस्) अन्ने । रा नि व २० । जटे । भरत ।

**अन्धक** । पु । तुम्बुरी । काँटाधने' । भा पू १भ ह व ।

**अन्धकाक** । पु । काकाकारे पक्षिणि । पाण दोडि । स भेदजुया । विका ।

**अन्धकार** । पु । आलोकाभावे । तत्पर्य्याय,—ध्वान्त तमिस्र तिमिर तम (अ), भूच्छाय (रा), अन्धतमास अवतामस सन्तमस अवतमस । गुणा—भयदृष्टितेजोऽवरोधकर रोगजाङ्यकर । राज ।

**अन्धकूप** । पु । मोह ।

**अन्धता** । स्त्री । पित्तरोगे । वै निघ ।

**अन्धपूतना** । स्त्री । बालकग्रहपीडाविशेषे । लक्षणम्—यो द्वेष्टि स्तनमतिसारकासहिक्काच्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः । दुर्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रुवुभिषजोऽन्धपूतनार्त्तम् ॥ चि—तिक्तद्रुमपत्रसिद्धजलेन स्नानं । सुरामिसाधिततैलम् । पिप्पल्यादिसिद्धघृतादिकञ्च । सु उ २७।३१ अ ।

**अन्धमूषा** । स्त्री । वज्रमूषापरनामके औषधपाकार्थं यन्त्रविशेषे । तस्य लक्षणं यथा—अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा । सैव च्छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥ द्वौ भागौ तुषदग्धस्य एका वल्मीकमृत्तिका । लौहकिट्टस्य भागैकः श्वेतपाषाणभागिकम् । नरकेशसमं किञ्चित् छागीक्षीरेण पेषयेत् ॥ यामद्वयं दृढं मर्द्द्य तेन मूषां सुसम्पुटाम् । शोषयित्वा रसं क्षिप्त्वा तत्काले सन्निरोधयेत् । वज्रमूषा समाख्याता सम्यक्पारदसाधिका । र सा स । कश्चिददति ।

**अन्धमूषिका** । स्त्री । देवताड़वृक्षे । देयाताड़ा । तृणविशेषे । श च ।

**अन्धाहि** । पु । कुँचिया मीने । कुँचेगाछ, जलटोटे । विका ।

**अन्धाहुली** । स्त्री । आहुल्यनामकशिम्बीफल वनस्पतिविशेषे ।

**अन्धिका** । स्त्री । सर्षप्याम् । स्त्रीविशेषे । मेकविके । नेत्ररोगविशेषे । श र ।

**अन्धु** । पु । कूपे । चिका ।

**अन्धुल** । पु । शिरीषवृक्षे । श च ।

**अन्नम्** । क्ली । शस्ये । व्रीहियवादौ खाद्यद्रव्यमात्रे । चर्व्यचोष्यलेह्यपेयभेदेन अन्नं चतुर्विधम् । केऽपि च निष्पेयचर्व्यचोष्यखाद्यभेदेनाष्टधा वदन्ति । राजनिघण्टुकारोऽपि अन्नमष्टविधमाह चर्व्यादिभेदेन । व २० । भक्ते । भात । तत्पर्य्याय,—भक्त अन्ध भिस्सा (अटी), अद्य कसिपु जीवातु (ज), कूर (रा), जीवनक (हे), कूर आपूपिक जीवन्ति प्रसादन (शब्द र) । तत्र तण्डुलपरिमाणापेक्षया पञ्चगुणजले सिद्धम् । अन्नं पञ्चगुणे साध्यम् । च द ज्व चि । प प्र २ख । खिन्नतण्डुले यथा—शस्यचिवगत प्राहु मतुप धान्यमुच्यते । आमविसुषमिन्युक्तं स्विन्नमन्नमुदाहृतम् ॥ वशिष्ट । तथा जलदानप्रमाणतोऽन्नं चतुर्विधम् । चतुर्विधं भवेद्भक्तं जलदानप्रमाणतः । तत्र भक्तं विलेपी च यवागू पेयया सह ॥ प्रयोगरत्नाकर' । अन्नगुणा—अग्निकरं पथ्यं तर्पणं मूत्रलं लघु च । तत्र अधौतमन्नमसुतप्तम्—शीतलं गुरु हृद्य कफजनक । सुधौतमन्नं उष्णं विशदं गुणकरञ्च । भृष्टतण्डुलजमन्नं—रुच्यं सुगन्धि कफघ्नं लघु च । अतिक्लिन्न—ग्लानिकरं, तण्डुलान्वितं—दुर्जरम् । मन व ११।१८ । धान्याम्ले पाचितं भक्तं लघु अग्निप्रदीपकं रुचिप्रदञ्च । वै निघ । मथितयुक्त भक्त—

स्वादु शीतलं रुच्यं अग्निदीपनं पाचकं पुष्टिकरं यहण्यर्शःशूलघ्नं । राशौ भर्जितं—रुच्यं रुचिकरं दीपनमर्शोघ्नञ्च । मुद्गयूषयुक्त—कफज्वरे, शर्करामिश्रित—पित्तज्वरे हितम् । लाजभक्त—लघु शीतलं रुचिकरं मधुरं हृद्यं निद्रारुचिकरं व्रणशोधनञ्च । यावकान्न—गुरु स्वादु हृद्यं स्निग्धं गुल्मज्वरकण्ठरोगकासमेहघ्नञ्च । खेचरान्न—तर्पणं गुरु हृद्यं धातुवर्द्धकम् । गोधूमान्न—गुरु घनं कासश्वासघ्नञ्च । कोद्रवान्न—रुचिकरं मधुरं प्रमेहघ्नं मूत्रदीपघ्नं तृष्णाघ्नं छर्द्दिकफवातामदाहघ्नञ्च । श्यामाकान्न—रुच्यं लघु रुच्यं दीपनं बल्यं वातकरं मेहगलरोगमूत्रकृच्छ्रघ्नञ्च । नीवारान्न—रुचिदं लघु दीपनं गुरुवातकृत् यकृत्प्लीहश्वासव्रणघ्नञ्च । कुलत्थान्न—मधुरं रूक्षम् उष्णं लघु कटुपाकि दीपनं कफवातश्लेष्मश्वासहरञ्च । माषान्न—दुर्जरं मांसवृद्धिकरं गुरुवातघ्नं हृद्यञ्च । शिम्बान्न—मधुरं रुच्यं वातपित्तकोपनञ्च । वैदलान्न—गुरु रुचिकरं । आढक्यन्न—गुरु कफपित्तघ्नञ्च । मस्त्वौदन—कफकरं त्रिदोषकरं अग्निमान्द्यकरञ्च । शाकान्न—लेखनं रूक्षमुष्णं दोषद्रावकञ्च । मांसौदनं—धातुवर्द्धकं स्निग्धं गुरु च । फलान्न (फलान्न)—हृद्यं गुरु फलसमगुणञ्च । षष्टिक साधारणशाल्यन्न—दीपनं बल्यं पाचनं त्रिदोषघ्नं चक्षुष्यं विषघ्नञ्च । नवान्नं मधुरं स्निग्धं गुरु मलस्तम्भनं रक्तपित्तघ्नञ्च । उष्णान्न—दीपनं लघु श्रमकरं मदात्ययरक्तपित्तप्रमेहवातकरं कासश्वासक्षयाध्मानगुल्मजाड्यचतकामहरञ्च । शीतान्न—शीतलं लालास्रावकम् अग्निमान्द्यमेहमूर्च्छादिहरञ्च । वै निघ । क्लिन्नान्न—दुर्जरं ग्लानिकरञ्च ।

**अन्नकाल** । पु । भोजनसमये । तल्लक्षणं,—"क्षुत् सम्भवति पक्वेषु रसदोषमलेषु च । काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ॥" भा ।

**अन्नकोष्ठ** । पु । तण्डुलधान्यादिरक्षणाधारे । গোলা, মরাই ।

**अन्नगन्धि** । पु । अतिसाररोगे । त्रिका । मलभेद । सं हगवण ।

**अन्नजम्** । क्ली । त्रैदिवसिकान्नमण्डे । म तिन दिवसाची शिलीवेज ।

**अन्नजा** । स्त्री । हिक्काभेदे । पलान्नै रतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्द्धगो भूत्वा तां विद्यादन्नजां भिषक् ॥ भा ।

**अन्नद्रवशूल** । पुं, क्ली । परिणामशूले । तल्लक्षणं यथा,—यदा जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते । पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च । न शमं याति नियमात् सोऽन्नद्रव उदाहृतः ॥ मा नि See परिणामशूलम् ।

**अन्नद्रवाख्य** । पु । अन्नद्रवशूले । मा नि ।

**अन्ननाडी** । स्त्री । अन्नपाकनाड्याम् । सा च २० हस्तमिता कलापेशीनिर्म्मिता । तदुक्तं—हस्तविंशतिप्रमाणा कलापेशीविनिर्म्मिता । अन्नपाकक्रियायां च पाकनाडी प्रकीर्त्तिता ॥ ऊर्द्धांशो कुक्षिनामास्य अधोंऽशो गुदनामकः । कण्ठादामाशयं यावदन्ननाडी तु कथ्यते ॥ ततश्चामाशयं तस्मात् स्थूलान्त्रं स्थूलमन्त्रकं । आमाशयात् समारभ्य भागं प्रथमं आन्त्रिकं । ग्रहणी चान्यधिष्ठानं क्षुद्रान्त्रं प्रकीर्त्तितं । तत पक्वाशयं प्रोक्तं पक्वान्नपरिधारणात् ॥ स्थूलान्त्रस्याप्यधोभागं सरलं गुदसंज्ञकं । अन्नकिट्टं मलं सञ्चं वहति धारयत्ययम् ॥ आमनाड्या स्थिता पश्चादन्ननाड्यन्नवाहिनी । अधस्तात् कुण्डलीभूता नाडी चोदरमध्यगा ॥ कण्ठादधोगतिनाडी भित्त्वा वक्षःस्थलाश्रयां । पेशीसुखद्वयवर्त्तीं प्रविष्टैयमधोगुहाम् । इत्यादि । आत्रेय ।

**अन्नप्राशनम्** । क्ली । षष्ठे अष्टमे वा मासि बालस्यान्नभोजने । भा ।

**अन्नमण्ड** । पु । भक्तमण्डे । ভাতের মাড় । गुणा—क्षुद्बोधनो बस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुञ्जये दशगुणो हि मण्डः ॥ च द अग्निमा चि ।

**अन्नमय** । पु । स्थूलशरीरे ।

**अन्नमयकोश** । पु । शरीरे ।

**अन्नमलम्** । क्ली । पुरीषे । मदे ।

**अन्नरस** । पु । भक्तमण्डे ।

**अन्नलिप्सा** । स्त्री । अन्नभोजनेच्छायाम् । क्षुधायाम् । वै निघ । प्रकृतिगामिनीऽन्नलिप्सा । च द ।

**अन्नवहा** । स्त्री । धमनीद्वयं । याभ्यां भुक्तमन्नमुदरं नीयते । सु शा ९ अ । तयोर्मूलमामाशय, अन्नवाहिधमन्यः ।

**अन्नवाहिस्रोत** । क्ली । गलनाड्याम् । গলার নলী ।

दिने दिने। अत्रानुपानं पयसा नारिकेलोदकेन वा। कुष्ठेकामृतलाङ्कुरलौहादस्य त्रिफलाभागमेद, अत पाठद्वयम्। प्रयोगा उ द चि। भेषजमिदं कुष्ठरोगे हितम्। अत्र पलमेकं रसस्येति रस सिन्दूरमिति केचित। अपरे हिङ्गुलोत्थपारद व्यवहरन्ति। इदानीन्तु रससिन्दूरमेव व्यवहरन्ति। रसादिसर्व्वमेकीकृत्य लौहपात्रे त्रिफलाक्वाथेन पचेत्। पाकशेषे त्रिफलाचूर्णं देयम्। र सा स र स र। कुष्ठोक्तौ यथा—"हुताशमुखसगुड पलमेकं रसस्य वै। पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च। गन्धकस्य पलञ्चैकमभ्रकस्य च गुग्गुलो। हरीतकीविभीतक्योश्चूर्णं कर्षन्य ह्यो। अष्टमाषाधिकं तत्र धात्र्याः पाचितलानि षट्। घृतं द्वादशगुणं लौहात् द्वानि शक्तिफलाजलम्। एकीकृत्य पचेत्पात्रे लौहे तद्विधिपूर्वकम। पाक मेतस्य जानीयात पाकज्ञः कुशलो भिषक्"। इत्यादि। हुताशमुखसगुडि यथा रसार्णवे—रसस्य पञ्चभागेन गन्धेन लौहपात्रके। लौहदण्डेन च तथा दत्त्वैरण्डनवनीतकं। मर्द्दनान्नज्जलिहृत्वा पिष्ट शालिचिकाद्रवे। हरद्योस्यास्तु पित्तेन वेष्टयित्वा निधापयेत। वर्त्तिकाया सुखं निक्षा शनैर्मृदग्निना पचेत। गन्धगन्धस्य यावत्स्यात् तद्धुताशमुखं विदु॥ कश्चित्तु हुताशमुखसगुडमिति गुग्गुलुपर्यन्तं सम भ्राति। तेन शोधनजारणादिक्रमेण सर्व्वेषामशौ शोधनमात्र हरीतकीविभीतकौ साङ पंड्य पृथगिति वचनात। हरीतक्यास्तु ५ तो विभीतक्याश्च आमलक्या षट् पाचितल १२ तो। मिलितत्रिफला १६ प पाकायजल १६ श शेष ४श घृत १६ प लौहपात्रे पाच्यम्। वस्त्रपीडित यदा न निःसरति मुद्रा च भवति तदावताश्च चूर्णप्रक्षेप। अस्य पाके सावधानेन भाव्यम्। अमृत सारलौहवदस्य क्रिया ज्ञेया। इत्यदपि अमृताङ्कुर लौह कुष्ठे उक्तम् यथा—सूत हिङ्गुलसम्भूत ताम्र तद्द्विगुणं भवेत्। सुजीर्णलौह तत्तुल्यमभ्र भल्लातक तथा। ताम्रद्विगुणगन्धश्च गुग्गुलुस्तद्विधा मत। त्रिफलायास्तथा चूर्णं प्रत्येक सूततुल्यक। ताम्रात्तु गुणं सर्पि तैलमेरण्डज द्विधा। रसाञ्जनञ्चाभ्रतुल्यं पञ्च चैवामृतद्रव। चतुर्गुण घृतात्तैलाम्लिनीयमय तारयेत्। इत्यादि। अथ प्रयोगा कुष्ठचि। अत्र रसेन्द्रसारसंग्रहीत पाठ प्रायेण तुल्य एव। केवल गन्धकस्य पलञ्चैकमित्यत्र—"अभ्रकस्य पलञ्चैक गन्धकस्य चतु पलमिति।" कर्षन्य हयोरिति प्रत्येकं कर्षद्वयमिति। घृत द्वादशगुणमित्यत्र—"घृत चाष्टगुण" मितिभेद। अभ्रकस्य पलञ्चैव गन्धकस्य चतु पलमित्यत्र प्रयोगामृतपाठे न साधु मन्यन्ते भट्टादयो विशिष्टवैद्या इति। र सा स टी। रसरत्नाकर प्रयोगामृतेन तुल्य एव केवल द्वादशमाषाधिकमित्यत्र अष्टमाषाधिकमिति भेद। रसेन्द्रचिन्तामणौ च 'अष्टमाषाधिकानि" घृत त्वष्टगुणमिति पाठभिन्नतास्ति। रसे चि कुष्ठ। सा कौ। अन्य दत्तपित्ते उक्तम्।

**अमृतादि**। पु। कषायद्रव्यसमूहे यथा—"अमृतपर्पटोन सुम्बक सप्तपर्ण खदिरमसितवेत्र निम्बक द्वे हरिद्रे' इत्यादि। अयं विसर्पविस्फोटके हित। "असितवेत्र श्यामा लता रस र। च द विसर्प चि। सा कौ। प्रयोगा। अपर मूत्रकृच्छ्रे यथा—अमृत नागर धात्री वाजिगन्धा त्रिकण्टक। प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान्॥ भैष।

**अमृतादिवटी**। स्त्री। विष २ भा कपर्द्द-भस्म ५ भा मरिच ९ भा जलेन मुद्गमाना वटी-कार्या। इयं कफे त्रिदोषेऽग्निमान्द्ये च हिता। भा म १भ ज्वरचि।

**अमृताद्यगुग्गुलु**। पु। अयं मेदोरोगे हित। यथा— अमृता त्रुटिवेल्लवत्सक कलिपथ्यामलकानि गुग्गुलुम्। क्रमवृद्धमिदं मधुना पिडकास्थौल्य-भगन्दर जयेत।' अत्र त्रुटि सूक्ष्मैला। वेल्ल विडङ्ग। वत्सक कुटजत्वक्। एषां क्रमवृद्धा भागो ग्राह्य। भैष मेद। भा म ३भ मेदचि।

**अमृताद्यघृतम्**। क्ली। वातरक्ते हित। घृत ४श कल्कद्रव्य १श। पाकार्थं आमलकीरस ४श वारि १२श दत्त्वा पाच्यम्। आरग्वध शोभाञ्जनफलमज्जा। तथैव श्वेतपुनर्नवा। त्रुटक कौशिकी नागमृतम्। गन्धञ्च एरण्डमूल। घन मुस्ता। च द वातरोग चि। भा म २भ।

**अमृताद्यचूर्णम्**। क्ली। आमवाते। गुडूची नागरगोक्षुरमुण्डितिकावरुणचूर्णानि प्रत्येकं समभागानि। भा म २भ।

**अमृताद्यतैलम्**। क्ली। गलगण्डादौ हितम्। मूर्च्छिततिलतैल ४श गुडूच्यादीनां शतपल वारि ६ श शेष १६ श। उक्तद्रव्याणां मिलितकल्क १श। तैलपाकविधिना पाच्यम च द गलगण्ड चि। अथवा गुडूच्यादीनां प्रत्येकं १ प वारि १२८ प। शेष पिचुमामृतानिम्बहिंसाभयावृक्षक

पिप्पलीभिः । सिद्धं नलावेतसदेवदारु हिताय नित्यं गलगण्डरोगी ॥ तैल ४ श कल्कार्थ—
গুলঞ্চ, নিমছাল, গুডকাউলী, কেলেকড়া, কুটজত্বক্,পিপুল,বেড়েলা, বেতস, দেবদারু । मिलित १ श । भैष । सिद्धं बलाभ्यामिति । च द ।

**अमृताफल.** । पु, स्त्री । पटोलि । भा पू । भ । काबिलप्रसिद्धफलवृक्षविशेषे,रुचिफले वा, नाम्पाती इति लोके । मद व ७ ।

**अमृतारिष्टम्** । क्ली । अरिष्टमिदं विषमज्वरादौ हितं । अत्र गुडूच्या पलशतं दशमूलस्य तथा एकत्र द्रोणचतुष्टयजले पक्त्वा पादशेषं ग्राह्यं । अथ तत्र क्वाथे गुडस्य तुलात्रयं (७१॥० सेर) गोलयित्वा, कृष्णजीरस्य १६ प पर्पटस्य २ प । तथा सप्तपर्ण त्रिकटु मुस्तक नागकेशर कटुकातिविषेन्द्रयवादीनाञ्च प्रत्येकं चूर्णपलं निक्षिप्य आवृतपात्रे मासमात्रं स्थापयेत् । तेनामृतसंज्ञकेनारिष्टं जायते । भैष ।

**अमृतार्णव** । पु । रसोऽयं अतिसारे ज्वरातिसारे च हितं । मात्रा १ मा । अनुपान धान्यजीरक शालबीजानां यथालाभं देयम् । द्रव्याणि यथा हिङ्गुलोत्थरस-लौह-गन्धक टङ्कण शटी धान्यक-ह्रीवेर-मुस्तकाम्बष्ठाजीरकातिविषाजीरकाणि छागीक्षीरेण मर्द्दयेत् । भैष । रस र । अजाजी जीरकम् । घुणप्रिया अतिविषा । धान्यजीरकयुग्मेणेति पूर्वे प्रतरत्र मुद्रापाठ्यम् । र सा स अतिसा चि ।

**अमृतार्णवरस.** । पु । कामहरोऽयं रसः । अत्र अमृता गुडूची । पनक पद्मकाष्ठ । र सा सं कासचि । रस र । भैष । द्वितीयो रसः वाजीकरणाधिकारे । अत्र सूतभस्म रससिन्दूरम् । र सा स । अस्य कासे—"रास्ना विडङ्ग त्रिफला रसगन्धकटुत्रिकं । अमृता पद्मकं क्षौद्रं विषतुल्यं सुचूर्णितम् ॥" मात्रा २ गुञ्जा । रस र कासचि । अन्य राजयक्ष्मणि—"पारदगन्धक गुड मृतलौहञ्च टङ्कणं । रास्ना विडङ्ग-त्रिफला देवदारु कटुत्रयम् । अमृता पद्मकं तुल्यं विषञ्चापि विचूर्णयेत् । मधुनाच वटी कार्या ।"प्रयोगा । अन्य रसेन्द्रसारधृते रसायनाधिकारे । "सूतभस्म चतुर्भागं लौहभस्म तथाष्टक । अभ्रभस्म च षड्भागं गन्धकस्य च पञ्चमं । भावयेत्त्रिफलाक्वाथैस्तमसं भृङ्गजद्रवैः । शिग्रुवह्नि कटुकाथैर्भावयेत् सप्तधा पृथक् । सम्यक्तुल्या कृता योज्या गुडेन सिंह पुरातने ॥' मात्रा निरूपिता । र सा स प्रयोगा रसायने ।

**अमृतार्णवलौहम्** । क्ली । कुष्ठाधिक "त्रिकटुत्रिफलालौहं समभागं विचूर्णितं । सर्वामपि चूर्णानामर्द्धभागं शिलाजतु । गुडूचीस्वरसेन भावना रविरश्मिभि । वारत्रय तत घृतेन सह मर्द्दयेत् ॥" मात्रा १ मा मधुना लेह रस र प्रयोगा । अयम् अमृतार्णवरस इति ऽप्युक्त । प्रयोगा ।

**अमृतावटिका (गुग्गुलु.)** । स्त्री । ब्रणघ्नी वटिका । ब्रणशोथे इति च द । "अमृपटोलमूलत्रिफलात्रिकटुकृमिघ्नानाम् । समभागचूर्णं सर्व्वसमो गुग्गुलुभागः ॥ प्रतिदिवसमेकां गुडिकां खादेदक्षप्रमाणाम् । रस र ।" अयमादृधिक न कर्त्तव्य कीटादिकवृद्धाल्पमपि । प्रगा । द्वितीया वृहदभिधाना त्रयी हिता । यथा "अमृताया पलशतं दशमूलशतं तथा । पाठा मूर्वा बला द्वे च तथा गन्धर्व्वहस्तक ॥ पृथग्दशपलानि नभयानां शतं तथा । विभीतकशते द्वे च धाशतचतुष्टय ॥ गुग्गुलो प्रस्थसंयुक्तं जलद्रोणत्र निशाम् । एका पर्युषितां पक्त्वा चतुर्थांशावशेते ॥ क्वाथे गुग्गुलुमालोड्य लौहपात्रे पचेद्घ शीते चैतानि सचूर्ण्य प्रक्षिपेत्पलिकानि गु त्रिफलात्रिवृतादन्तीव्योषच्छिन्नाश्वगन्धकान् । विड चित्रक चोचं सूक्ष्मैलां नागकेशरम् ॥' इत्यादि पौडत्रिमडगुग्गुलुना सह पर्युषितं कर्त्तव्य । तत ऽपरदिने क्वाथकरणम् । कैशोरगुग्गुलुवत् सर्वमपरं ज्ञेयम् । प्रयोगा ब्रणचि । रसरत्नाकरधृतपाठ स्तुल्यएव । तत्र अस्य पत्री यथा—छत्रपिष्टितगुग्गुलु १६ प क्वाथार्थं गुडूची १०० प दशमू १०० प আকনাদী, মূর্ব্বা, বাড়িয়ালা, শ্বেত বাড়িয়ালামূল, এরণ্ডমূল, প্রত্যেক ১০ প সামি- हरीतकी १००, बहेडा २००, आमलकी ४००, पाकार्थं देय जल द्रोणत्रयमित (१९२श) अत्रैव पौण्डीवद्ध गुग्गुलु दत्त्वा पाकशेषजलं ४८ श कर्त्तव्यम् । अत्रैव क्वाथे क्वाथस्थापितगुग्गुलु पिष्ट पाचनीयम् । सिद्धे प्रक्षेपार्थ त्रिफला दन्तीमूल त्रिकटु दन्तीमूलं गुडूची अश्वगन्धा विडङ्ग तेजपत्र गुडत्वक् सूक्ष्मैला नागेश्वर गुग्गुलु, एषां प्रत्येक १ प एकीकृत्य स्निग्धभाण्डे स्थाप्यम् । मात्रा ८ माषा । उष्णोदकमनुदेयम् । रस र ब्रणशोथ चि । भा ०म । अन्या कुष्ठरोगे वातरक्ते च हिता । तथा अस्य पाठ—अमृताया पलशतं दशमूल्याश्चशतं । पाठा मूर्व्वा बला त्रिफला

दार्वी गन्धर्व्वहस्तका । एषां दशपलान् भागान् विभीतक्या शतं हरेत। द्वे शते च हरीतक्या आमलक्यास्तथा शतम्। जलद्रोणत्रये पक्का अष्टभागावशेषित । प्रस्थं गुग्गुलुमाहृत्य प्रस्थार्द्धञ्च घृत पचेत्। पाकसिद्धौ प्रदातव्य गुडूच्या सत्त्वमेव च पलद्वयं तथा शुण्ठ्या पिप्पल्याश्च पलद्वयम् ॥ इत्यादि । भैष कुष्ठ चि ।

**अमृताष्टक** । पु क्ली । गुडूच्याद्यष्टद्रव्यसिद्ध कषाये। एष पित्तश्लेष्मज्वरे हित । चद चि । "गुडूचीन्द्रयवारिष्टपटोल कटुरोहिणी। नागर चन्दन मुस्त पिप्पलीचूर्णसंयुतम्। अमृताष्टक इत्येष पित्तश्लेष्मज्वरापह ॥" अरिष्ट निम्बत्वक्। रोहिणी कटुकी। एषां प्रति २० रत्तिक वारि ३२ तो शेष ८ तो । प्रक्षेपार्थं पिप्पलीचूर्ण ॥० तो। सा कौ । [व ४ ।

**अमृतासङ्गम्** । क्ली। खर्परिकातुत्थे। तत् पर्य्याय,—कर्परिकातुत्थ, अञ्जन ( हे )। मद ।

**अमृतासङ्गम** । पु। खपरीतुत्थे। तूँटे। मे मोरचूत। बेनिघ ।

**अमृताह्वम्** । क्ली। अमृतफले, नास्पातीति लोके। हि अपी। मद व ६ । गुणा—गुरु वातघ्न स्वादु त्रिदोषघ्नश्च। 'नास्पाती' सुह्मदेश प्रचुर लभ्यते। भा । खर्बूजे। मद व ६ ।

**अमृताह्वयतैलम्** । क्ली। वातरक्ते तैलम्। पाठो यथा—"गुडूची मधुक कृष्णपञ्चमूल पुनर्णवा। रास्ना सैरण्डमूला च जीवनीयानि साभत। पलानां शतिकैर्भागैर्बला पञ्चशत भवेत्। कोल विल्व यवान् माषान् कुलत्थाथाढकोन्मितान्। काश्मर्य्याश्च शुष्काना द्रोण द्रोणशतेऽम्भस। साधयेज्जर्जरं पुत चतुर्द्रोणश्च शेषयत्। तैलद्रोण पचेत्तेन दत्त्वा पञ्चगुण पय । पिष्टा त्रिफलिकश्चैव चन्दनोशीरकेशरम्। पत्रैलागुरुकुष्ठानि तगर मधुयष्टिका। मञ्जिष्ठाद्वपलञ्चैव तत्सिद्धं सुव्ययोगिकम् ॥" भा म २भ वातरोगचि ।

**अमृति** । स्त्री। जलपात्र विशेषे।

**अमृतेश्वररस** । पु। अयं रसो यक्ष्माणि हित । रसभस्मामृतासत्व लौह मधुघृतान्वितम्। अमृतेश्वरनामायं यक्ष्मी राजयक्ष्माणि ॥ भा म २भ । रसेचि । प्रयोगा ।

**अमृतोत्था** । स्त्री। सुधामूलायाम्, मालम्मिछरीति भाषा। चवि ।

**अमृतोत्पन्नम्** । क्ली। तुत्थे। खर्परीतुत्थे। खापर। म कालखापरी। रा नि व १३। [नि व ।

**अमृतोत्पन्ना** । स्त्र। गृहमक्षिकायाम्। रा

**अमृतोद्भव** । पु। धन्वन्तरौ। रत्ना । क्ली। तुत्थे। रा नि व १३। खर्परीतुत्थे। खापर। रा नि व । आमलक्याम ।

**अमृतोपमम्** । क्ली। खर्परीतुत्थे। तूँटे। म मोरचूत। वै निघ। द्रव्ये। वै निघ ।

**अमृतोपहिता** । स्त्री। तोपचिनी इति ख्याते।

**अमेध्यम्** । क्ली। पुरीषे। श र ।

**अमोघा** । स्त्री। पाटलावृक्षे। भा । श्वेतपाटलायाम। हरीतक्याम्। विडङ्गे। मे । श्वेतपाटलायाम्। पद्मभेदे। रा नि व २३।

**अम्बक** । पु। मकुष्ठवृक्षे। जटा । क्ली। नेत्रे। द्वे च । ताम्रे। रा नि व १३।

**अम्बरम्** । क्ली। कार्पासे। कापास। रमा । अभ्रधातौ। अङ्खुर। रा नि व १३। भैष । वसन्तकुसुमाकरे। तन्नामकगन्धद्रव्ये। विश्व ।

**अम्बरट** । पु। कार्पासवृक्षे। वै निघ ।

**अम्बरा** । स्त्री। कार्पासवृक्षे। प सु ।

**अम्बरातक ( रीय )** । पु। आम्रातकवृक्षे। आमडा गाछ। जटा ।

**अम्बरि(रीष)** । पु, क्ली। आम्रातकवृक्षे। भर्जनपात्रे। अम ।

**अम्बष्ठ** । पु। देशविशेषे। स्वोढाया वैश्यकन्यायां ब्राह्मणाज्जाते ब्राह्मणविशेषे।

**अम्बष्ठका (की)** } स्त्री। (Stephania hernandifolia Syn

**अम्बष्ठा (ष्ठिका)** } cissampelas hexandra) पाठायाम्। निमुर्वा। आकनादि। रा नि व ६। पटाड् इति हिमालये। भार्ग्यां। रमा। लज्जालुमूले। भप स्त्रीरोग चि पुष्यानुगचूर्ण। अम्लशोणाम्। आम्रन। रा नि व ५। भा पू १भ। यूथिकायाम्। यूँई। प सु। मयूरशिखायाम्। धा मू प्रियङ्ग्वादि। "अम्बष्ठामधुक नमस्कारी।" आम्रातके। आमड़ा। चन्द्रक्षुपविशेषे। अम्माडा, अम्बरी इति च दक्षिणापथे। हि मोइया। माचिका माकरुड इति च पश्चिमदेशे ख्याता। पृश्निनी। तत्

**अम्बुवल्लिका** । स्त्री । कारवेल्लाम् । वै निघ ।

**अम्बुवल्ली** । स्त्री । क्षुद्रकारवेल्ला । जलपिप्पल्यां । वै निघ ।

**अम्बुवारिणी** । स्त्री । स्थलकमलिन्याम् । वै निघ ।

**अम्बुवासिनी** । स्त्री । रक्तपाटले ।

**अम्बुवासी** । पु । रक्तपाटले । वै निघ ।

**अम्बुवाह** । पु । मुस्तके । चिक्ताकवली प्रदर चि ।

**अम्बुवेतस** । पु । जलवेतसे । म लव्हाला ब्रतपर्थ्याय,—परिव्याध विदुल नादेयी (अ) ।

**अम्बुशिरीषिका** } स्त्री । जलशिरीषे । वै
**अम्बुशिरीषी** } निघ । तत्पर्य्याय —
शिरीषिका टिण्टिनिका दुर्व्वला वारिशिरीषिका । अस्या गुणा,—त्रिदोषविषकुष्ठार्शोनाशिनी । भा ।

**अम्बुशुक्ति** । स्त्री । जलशुक्तौ । झिनुक । म जलशिंपी । वै निघ ।

**अम्बुसर्पिणी** । स्त्री । जलौकसि । जोँक ।

**अम्बुसादनम्** । क्ली । निर्म्मलीवीजे । वै निघ ।

**अम्बुसारा** । स्त्री । कदलीवृन्ते । भा पू १भ फ व ।

**अम्बुसाह्व** । पु । कुन्दपुष्पक्षुपे । वै निघ ।

**अम्बूक** । पु । लकुचवृक्षे । कै ।

**अम्भ** । पु । जले । रा नि व १४ । बालनामौषधविशेषे । अ ।

**अम्भपा** । पु । चातकपक्षिणि ।

**अम्भसार** । पु । मुक्तायां । वै निघ ।

**अम्भसू** । स्त्री । धूमके । म धुवं । धूमे । हि ।

**अम्भोजम्** । क्ली । पद्मे । वारिवलसे । पु । पुष्करादये । सारसपक्षिणि । कै ।

**अम्भोजनाल** । पु । पद्मनाले । वै निघ ।

**अम्भोजा** । स्त्री । स्थलयष्टीमधुनि । वै निघ ।

**अम्भोद** । पु । भद्रमुस्तायाम् । रा नि व ६ । च द यक्ष्म चि एलादिमन्थे । प्रपौण्डरीके । प नु । क्ली । कांस्ये ।

**अम्भोधर** । पु । मुस्तके । मेघे । समुद्रे । शब्द र ।

**अम्भोधिपल्लव** । पु । प्रवाले । मं पोवलं । रा नि व १३ ।

**अम्भोरुहम्** । क्ली । पद्मे । च द र पि चि । पु । सारसपक्षिणि । अ ।

**अम्भोरुहकेशरम्** । क्ली । पद्मकेशरे । च द र पि चि ।

**अम्र** । पु । आम्रवृक्षे । आमगाछ । रा नि । See आम्र । माचिकायां । पुदिना । हि मोहया । अम्लवेतसे । रा नि ।

**अम्रम्** । क्ली । आम्रफले ।

**अम्रगन्धहरिद्रा** । स्त्री । (Curcuma reclinata) आम्रहरिद्रायाम् । आमहलुद । हि आमहल्दी ।

**अम्रवेतस** । पु । अम्लवेतसे ।

**अम्रसार** । पु । अम्लवेतसे । रा नि ।

**अम्रात (क)** । पु । (Spandias mangifera) Hogplum आम्रातकवृक्षे । आमडा गाछ । हि अम्वाडा । म अवाडाचे झाड । श मा । चिका । See आम्रातक ।

**अम्ल** । पु । षड्रसान्यतमरसे । अम्ल रस । म च जम्बीरमातुलुङ्गफलादिषु व्यक्त । गुणा —लघु उष्ण, रुचिकर, दीप्तिकर, हृदयतर्पण, वातानुलोमन, बल्य, कण्ठदाहकरश्च । रा नि व २० । तद्विपाकोऽम्ल तद्विपाकगुणस्तु पित्तकृत वात श्लेष्मरोगघ्न । सु सू । प्रीतिकर पाचन मार्द्दव करश्च । अतिसेवनात् भ्रान्तिकुष्ठकफपाण्डुकार्य्यकास जनक । रा नि व १२ । पाचन रुचिकर पित्तल कफजनको रक्तवर्द्धक लघु लेखन उष्णवीर्य्य स्पर्शशीतल सङ्कोचन क्लेदनो वातघ्न स्निग्ध तीक्ष्ण सारक शुक्रविस्मानाहदृष्टिघ्न स्पणश्च । अतिसेवने—भ्रमदद्रुदाहतिमिरज्वरघ्न ,शोथविस्फोट कुष्ठपाण्डुत्वकृच्च । भा पू १भ । लवणाम्ल पाचकत्व पित्तश्लेष्मवातिक्लेदनमुगात्व वातनत्वञ्च । राज ।

**अम्लम्** । क्ली । अम्लतमफले । काञ्जिके । घोले । रा नि । मदरफल । सि या अरोचक चि । वनरचन्दने रा नि व १२ ।

**अम्लक** । पु । लकुचवृक्षे । श र ।

**अम्लकरञ्ज** । पु । करञ्जविशेषे । टेपाकरञ्जा । तत्फलगुणा —विदामाग्न गुरु रुचिकर पित्त करश्च । राज ।

**अम्लका** । स्त्री । पालङ्कशाके । পালং শাক । प मु । पलाशीलतायाम् । रा नि, व ४ ।

**अम्लकाञ्जिकम्** । क्ली । काञ्जिके । কাঁজি । च द ग्रहणी चि मत्तापट्पलघृते ।

**अम्लकाण्ड'** । पु । शूलत्रणीभे । वै,निघ, । क्ली । लवणतृणे । লোণা ঘাস । रा नि व ८ ।

**अम्लकूचि'** । पु । वृक्षविशेषे ।

**अम्लकेशर:** । पु । मातुलुङ्गे । টাবালেবু গাছ । प मु । दाडिमवृक्षे ।

**अम्लकेशरी** । पु । अम्लरसनिम्बुकवृक्षे । গোঁড়া লেবু । वै निघ ।

**अम्लकोश. (शाकः)** । पु । तिन्तिडीवृक्षे । मद व ६ ।

**अम्लगोरस.** । पु । अम्लतक्रे । টক্ ঘোল । म भ वटताक । वै निघ ।

**अम्लचाङ्गेरी** । स्त्री । चाङ्गेरीभेदे । টক্ আম-রুল । च चि २श अगु तैलं ।

**अम्लचुक्रिका** । स्त्री । चिञ्चाम्ले । তেঁতুলের অম্বল । रा नि व ११ । See चिञ्चासार ।

**अम्लचूड** । पु । शाकाम्ले । चिञ्चासारे । তেঁতুলের অম্বল । रा नि व ११ । अम्लशाके । চুকা পালং । रा नि ।

**अम्लजम्बीर** । पु । अम्लरसनिम्बुकवृक्षे । টক্ লেবু গাছ । म इडनिंबू । रा नि व ११ । See निम्बूक ।

**अम्लटक.** । प । अश्मन्तकवृक्षे । অম্ল কুচাই ।

**अम्लत्वक्** । पु । प्रियालवृक्षे । मं चारोली ।

**अम्लदोलक.** । पु । चुक्रे । চুকা পালং । मं भ वीती । वै निघ ।

**अम्लद्रव** । पु । वीजपूरादिरसे । भा म १भ विद्रधिकाव्य चि । "अम्लद्रव सगमयेद्रसर्ना ।"

**अम्लद्रव्यम्** । क्ली । अम्लवेतसे । থৈকল । म आम्लवेतस । रा नि व ६ ।

**अम्लनिम्बूक** । प । महाम्लनिम्बुके । গোঁড়া লেবু । म मोठे इरनिम्बू । वै निघ ।

**अम्लनिशा** । स्त्री । शट्याम् । শটি । रा नि ।

**अम्लपञ्चकम्** । क्ली । १ कोलदाडिमवृक्षाम्ल चुक्रिकाम्लवेतसेषु । २ जम्बीरनारङ्गाम्लवेतसतिन्तिडी बीजपूरेषु । रा नि व २१ । See पञ्चाम्लम् ।

**अम्लपत्र.** । पु । दण्डालुके । থাম্ আলু । वै निघ । अश्मन्तकवृक्षे । रा नि व ९ । क्षुद्रपत्र तुलसीवृक्षे । र मा ।

**अम्लफलम्** । क्ली । चुक्रशाके । रा नि व ७ ।

**अम्लपत्रक** । पु । भण्डायाम् । अश्मन्तकवृक्षे । অম্ল কুচাই, আবুটা । रा नि व ९ । मद व १ । अम्ललोणिकायाम् । আমরুল । भा पू १ब ।

**अम्लपत्रा** । स्त्री । गन्धभार्या । ওকড়া । प मु ।

**अम्लपत्रिका** । स्त्री । चाङ्गेर्याम् । খুদে নুনী । नुनी इति लोके । आँवेता इति हिन्दी । रा नि व ५ ।

**अम्लपत्री** । स्त्री । पलाशीलतायाम् । रा नि व ४ । चाङ्गेर्या । रा नि व ५ । क्षुद्राम्लिकायाम् । খুদে নুনী ।

**अम्लपनस** । पु । लिकुचवृक्षे । ডেলো, মাদার গাছ । म ओटीचे झाड । वै निघ ।

**अम्लपर्णिका** } स्त्री । वृक्षविशेषे । सुरपर्णाम् ।
**अम्लपर्णी** } भा । गुणा —अम्लपर्णी वात कफशूनम्य च विनाशिका । वै निघ ।

**अम्लपादप** । पु । वृक्षाम्ले । তেঁতুল গাছ । मं कोकंवी । व निघ ।

**अम्लपित्तम्** । क्ली । रोगविशेषे । तल्लक्षणम्— विरुद्ध दुष्टाम्लविदाहि - पित्तप्रकोपि पानान्नभुजो विदग्धं पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्त ॥ अविपाक क्लमोत्क्लेश तिक्ताम्लो द्गारगौरव । हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भि- षक् ॥ तच्च द्विधा—अधोगमूर्द्धगञ्चेति । मा नि ।

**अम्लपित्तान्तकमोदक** । पु । अम्लपित्ते योगविशेष । अत्र शुण्ठी ८ प पिप्पली ८ प गुवाकचूर्णं ८ प घृत ४श एकत्र पाक । पाकसिद्धौ एषां प्रक्षेप यथा लवङ्गचूर्णं वचाचूर्णं कुष्ठचूर्णं नागकेशरचूर्णं यमानीचूर्णं रक्तचन्दनचूर्णं रास्ना चूर्णं कृष्णजीरकचूर्णं यष्टिमधुचूर्णं देवदारुचूर्णं त्रिफलाचूर्णं तेजपत्रत्वगेलाचूर्णं सैन्धव हबुषाफल चूर्णं शटीमदनकटफलचूर्णं जटामांसीचूर्णं अभ्र वङ्ग रौप्य तालीशचूर्णं पद्मकाष्ठचूर्णं मुस्ताचूर्णं वराहक्रान्ताचूर्णं गजपीपल पिप्पलीमूलचूर्णं

ग्लावगीचूर्ण जातीफलचूर्ण काकोलीमुलक-पिप्पली कर्पूर विडङ्ग मनयमानीनां चूर्ण वला गुड्च्यपामार्गवीजगोक्षुरवीजचन्दनदेवताडानां चूर्ण लौह कांस्यञ्चेति द्रव्यजात प्रत्येक २ तो स्वर्ण १ तो । भैष ।

**अम्लपित्तान्तकरस** । पु । रसोऽयमम्ल पित्तघ्न । रसे चि । अत्र तुल्यां पथ्यामिति सर्व्व चूर्णसमां हरीतकीम् । रसास । मृतसूतार्क लोहानां तुल्या पथ्या विमर्द्दयेत। माषमात्र लिहेत चौद्रैरम्लपित्तप्रशान्तये ॥ भैष ।

**अम्लपूरम्** । क्ली । वृचाम्ले । रा नि व ६ ।

**अम्लपुष्पिका** । स्त्री । आरण्यशणवृचे । वन शण । म राणताग । वै निघ ।

**अम्लपूरम्** । क्ली । तिन्तिड्याम् । তেঁতুল । म कोकम्ी । रा नि व ६ ।

**अम्लफल** । पु । आम्रवृचे । रा नि व ११ ।

**अम्लफलम्** । क्ली । वृचाम्ले । তেঁতুল । रा नि व ६ ।

**अम्लफला** । स्त्री । कत्यारिकायाम् । म लवु कत्यारी । वै निघ ।

**अम्लवदर** । पु । अम्लकोलिकायाम् । টক কুল । च सू ४अ ।

**अम्लभेदन** । पु । अम्लवेतसे । रा नि । चुक्रे ।

**अम्लमारीष** । पु । अम्लशाकविशेषे । অম্ল নটিয়া । हि सारा । गुणा —"अम्लमारीषको दीपकोपनो मधुर पटु ।' वै निघ ।

**अम्लमूलकम्** । क्ली । व्युषितकाञ्जिकपक्कमूलके । "काञ्जिक व्युषित पक्व मूलक त्वम्लमूलकम् । प प्र ३ख । च द सग्रहणी चि ह्रद्द्युक्त ।

**अम्लमेह** । पु । पित्तजन्यमेहरोगभेदे । अत्र रोगी अम्लरसगन्ध मेहति । सु नि ६अ ।

**अम्लरुहा** । स्त्री । मालवदेशप्रसिद्धनागवल्लीभेदे । गुणा—रुचिकरी दाहघ्नी गुल्महरी मदकरी अग्नि मलवर्द्धिनी आध्मानहरी च । रा नि ।

**अम्ललोणिका** | स्त्री । (Oxalis corniculata) चाङ्गेर्यां । আমরুল শাক । मं चुका । भटो । तत्पर्याय —चाङ्गेरी चुक्रिका दन्तशठा अम्बष्ठा (च) । गुणा —दीपनी रुच्या रूचोष्णा कफवातघ्नी पित्तला अम्ला
**अम्ललोणी**

ग्रहण्यर्शःकुष्ठातीसारघ्नी च । भा पू १ म । भावा २—३ माषा । मालवविशेषे । চুকা-পালঙ । र मा ।

**अम्लवती** । स्त्री । चाङ्गेर्याम् । আমরুল । रा नि व ५ । चुक्राम्लिकायां । থুদে সুনী ।

**अम्लवर्ग** । पु । चाङ्गेरी लकुचा अम्लवेतस जम्बीरक वीजपूरक - नागरङ्ग दाडिम कपित्थाम्र वीजाम्लकाम्बष्ठाकरमर्द्द कतिन्दुककोलतिन्तिडीषु । अम्बष्ठासहित द्विरेतदुदित पञ्चाम्लक तद्द्वय, विज्ञेय करमर्द्द निम्बुकयुत स्यादम्लवर्गाह्वयम् । रा नि व २२ । अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लका । नाग रङ्ग तिन्तिडी च चिञ्चाफलञ्च निम्बुकम् । चाङ्गेरी दाडिमञ्चैव करमर्द्द तथैव च । एष चाम्लगण प्रोक्तो वेतसाम्लसमायुत ॥ रसास ।

**अम्लवल्ली (ल्लिका)** । स्त्री । त्रिपर्णीकन्दे ।

**अम्लवाटक** । पु । आम्रातकवृचे । मं आवाटा । वै निघ ।

**अम्लवाटा** } स्त्री । अम्लरसयुक्त-नागवल्ली
**अम्लवाटिका** } भेदे । অম্লরসবিশিষ্ট পান-
**अम्लवाटी** } বিশেষ । म अवांडे पर्ण ।

रा नि व ११ । अस्या गुणा,—अम्ल तिक्त-कटु रसा रुच्या उष्णा मुखपाककारिणी विदाहिनी रक्तपित्तप्रकोपकरी विष्टम्भिनी वायुनाशिनी । रा See नागवल्ली ।

**अम्लवातक (वाडक)** । पु । आम्रातक वृचे । আমড়া গাছ ।

**अम्लवाष्प** । पु । चाङ्गेर्याम् । আমরুল । म चुका । वै निघ ।

**अम्लवास्तु(स्तू)कम्** । क्ली । चुकनामपत्र शाके । অম্লবেতুয়া টোপাবেতো इति भाषा । रा नि व ७ ।

**अम्लविदुल** । पु । अम्लवेतसे । व निघ ।

**अम्लवीजम्** । क्ली । वृचाम्ले । তেঁতুল । रा नि व ६ । See तिन्तिड़ी ।

**अम्लवृच (कम्)** । क्ली पु । वृचाम्ले । তেঁতুল । भा पू १भ ।

**अम्लवेतस (क)** । पु, क्ली । (Rumex vesicarius) country sorrel अम्लाम्ल फलवृचे । अम्लवेतस । हि आमलटास् । चुक्र

इति चद । चद ज्व चि । छिन्नचूर्णपर्णे साम्ल वेतसे । धगू २अ । तत्पर्य्याय,—अम वीधि रसाम्ल आम्लवेतस वेतसाम्ल अम्लसार शतवेधी वेधक भीम भेदन अम्लाङ्कुश भेदी राजाम्ल अम्लभेदन रक्तसार फलाम्ल अम्लनायक सहस्र वेधी वीराम्ल गुल्मकेतु वराभिध शङ्खद्रावी मांस द्रावी (रा), वराङ्गी (र) चुक्र (अ)। गुणा— अत्यम्ल कषायोष्ण वातघ्न कफार्शोगुल्मारोचक हरश्च। भोटदेशे प्रसिद्ध । रा नि व ८ । लघु दीपनमत्यम्ल भेदन हृद्रोगशूलगुल्मघ्न पित्तल लोम हर्षण रूक्ष विमूत्रदोषहर प्लीहोदावर्त्तघ्न हिक्का नाहारुचि श्वास कासाजीर्ण वान्तिहर वातकफज रोगघ्न छागमांसद्रवकर चणकाम्लतुल्यगुण लौहसूची- द्रावकञ्च । भा पू १भ । तत्पक्वफलगुणा —दोषघ्न गुरु दारकञ्च । राज । चुक्रे । চুকা পালঙ্ । हि चुकेका शाक । प मु । अम्ललोणाम् । चद काण्डाय गु ।

**अम्लशाकम्** । क्ली । वृक्षाम्ले । টেঁতুল । रा नि व ६ । पु । चुक्रनामपत्रशाके । अम्लकुचाई, টক পালঙ্, চুকা পালঙ্ । तत्पर्य्याय — शाकाम्ल शुक्राम्ल अम्लचूलिका चिघाम्ल अम्लचूड चिञ्चासार । गुणा —अत्यम्ल वातघ्न दाहश्लेष्मघ्नञ्च । सशर्करस्य तस्य गुण —दाहपित्तकफहरत्वम । रा नि व ७ ।

**अम्लशाकाख्यम्** । क्ली । चुक्रनामकपत्रशाके । টক পালঙ্ । म थोरचुका । रा नि व ७ ।

**अम्लष्टा** । स्त्री । चाङ्गेर्य्याम् । म आंबोती ।

**अम्लसरा** । स्त्री । नागवल्लीभेदे । रा नि व ६ ।

**अम्लसार** । पु । अम्लवेतसे । रा नि व ६ । निम्बुके । रा नि व ११ । हिन्तालवृक्षे । रा नि व ९ ।

**अम्लसार (कम्)** । क्ली । काञ्जिके । चुक्र नामककाञ्जिकभेदे । रा नि व १५ ।

**अम्लस्कन्ध.** । पु । अम्लरसान्वित द्रव्यसमूहे । "अम्ली धात्रीफलाम्लीका मातुलुङ्गाम्लवेतसम् । दाडिम रजत तक्र चुक्र पारेवत दधि ॥ आम्र मामातक भव्य कपित्थ करमर्द्दकम् ।" सा सू १०।२९५ ।

**अम्लस्तम्भनिका** । स्त्री । तिन्तिड्याम् । वै निघ ।

**अम्लहरिद्रा** । स्त्री । शट्याम् । रा नि व ६ ।

**अम्ला** । स्त्री । चाङ्गेर्य्याम् । আমরুল । रा नि व ५ । वनमातुलुङ्गे । अम्लवेतसे । रा नि व ६ । शीवल्लीवल्ल्याम् । वर्षाभलिका । रा नि व ८ । तिन्तिड्याम् । रा नि व ११ । भा पू १भ फलव ।

**अम्लाङ्कुशः** । पु । अम्लवेतसे । रा नि व ६ ।

**अम्लाटन** । पु । महासहावृक्षे । मे झाँटि विशेष । आम्लानी इति च भाषा । हि कट्सरय्या लालगुलमखमल । आम्लनाट् इति दाक्षिणात्यदेशे । बाणपुष्प इति च गौडे व्यवहार । गुणा —कषायो मधुररसिक उष्णवीर्य्य स्निग्धश्च । भा पू १भ पुव । ४ख म भ योनिरो चि । चिक्क कवली गर्भवेदना हरयोगे ।

**अम्लाढ्य.** । पु । करुणनिम्बुके । নারাঙ্গা-নেবু গাছ । प मु ।

**अम्लात. (क)** । पु । अम्लाटनवृक्षे । भा पू १भ पुव ।

**अम्लातको** । स्त्र । पलाशीलतायाम् । रा नि व ।

**अम्लाटान** । पु । कुरण्टकवृक्षे । पीयावांसा इति प्रसिद्धे । बाणपुष्प इति गौडे ।

**अम्लादि** । पु । तिन्तिड्याम् । रा नि व ६ । चुक्रनामकपत्रशाके । रा नि व ७ ।

**अम्लाध्युषित** । पु, क्ली । सन्नगताक्षिरोगे । लक्षणम्—"श्याव लोहितपर्य्यन्त सर्व्वञ्चाक्षि प्रप च्यते । सदाहशोथ साम्रावमम्लाध्युषितमन्नत ॥" मा नि । करुणनिम्बुके ।

**अम्लान** । पु । (Gomphrena globosa) बन्धुजीववृक्षे । বাঁকুলীবৃক্ষ । विका । झिण्टिका भेदे । अम्लानी झिण्टिकाभेदे । विश्व । अम्ला टनवृक्षे । आम्लानी इति भाषा । भा म ४भ योनिरो चि । 'अदष्टमधुकम्लानामाम्लाणि ।' महा सहायाम् । मेदिनि । महाराजतरुणीवृक्षे । रा नि व १० ।

**अम्लानम्** । क्ली । पद्मे । श र ।

**अम्लाना** । स्त्री । महासेवतीपुष्पवृक्षे । বড় বন- সেউতী । म थोर रायशेवती । वै निघ ।

**अम्लानिनी** । स्त्री । पद्मसमूहे । पद्मिन्याम् । त्रिका ।

**अम्लाम्ला** । स्त्री । चाङ्गेर्य्याम् । আমরুল শাক ।

**अम्लायनी** । स्त्री । मल्लिकाभेदे । म नेवाली । वै निघ ।

**अम्लिका** । स्त्री । तिन्तिडीवृक्षे । प मु रा नि व ११ । आस्ये । रा नि व ३ । पलाशीलतायां । माचिकायाम् । पुदिना । रा नि व २२ । श्वेताम्लिकायाम् । चाङ्गेर्याम् । रा नि व २३ । अम्लोद्गारे । मे । अर्शोरोगे तिन्तिडार्थे, एव सन्त्व दीपन योगे । पुरीषसंग्रहणादौ पुनरम्लिका श्यामच्छद हउदारके । सियी अग्निमुखचूर्णे हन्त । सि यौ अरोच चि ।

**अम्लिकाकन्द** । पु । मं अम्लनालिकायाम् । वै निघ ।

**अम्लिकापानम्** । क्ली । तिन्तिडीपानके । तेंतुलपाना । पक्वतिन्तिडीक वारिमर्दित शर्करा मरिचलवङ्गकर्पूरमिश्रित पानकमुच्यते । "अम्लिकाया फल पक्व मर्दित वारिणा दृढम् । शर्करा मरिच मिश्र लवङ्गेन्दुसुवासितम् । अम्लिकाफल सम्भूत पानकम् वातनाशनम् ।" भा पू पानकवर्ग ।

**अम्लिकावटक** । वटकविशेषे । अम्लवडा । भोतीवरा इति लोके । "अम्लिका स्वेदयित्वा तु जलेन सह मर्दयेत । तन्नीरे कृतसंस्कारे वटकान मज्जयेज्जन । अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपना ॥" भा ।

**अम्ली** । स्त्री । जलवेतसे । वै निघ २भ मदात्यय चि खर्जूरादिमन्थे । चुक्रिकाया । टक्पालङ् । तिन्तिड्याम् । रा नि व ११ । भा पू १भ फलव । चाङ्गेर्याम् । मे लद्विक ।

**अम्लीका** । स्त्री । तिन्तिड्याम् । अ टी । "अम्लोद्गारे । सु नि ६ अ ।

**अम्लीकाफलम्** । क्ली । तिन्तिडीफले । तद्गुणा —गुरु सन्दीपन भेदन तृष्णाघ्न लघु कफ वातघ्नौ पथ्यञ्च । वा मू ६अ । "अम्ली हि चाम्लफलम विपक्व तदम्लपित्तामकरं विदाहि । वातामये शस्त शस्ते प्रशस्त पक्व तथा शीतगुणोपपन्न ॥ ' चवि १०अ ।

**अम्लीय** । पु । अम्लवेतसे । वै निघ ।

**अम्लोटक** । पु । अश्मन्तकवृक्षे स्वनामैव प्रसिद्धे । हि आमरीडा । अम्लचूडाई । रबा ।

**अम्लोटज** । पु । चाङ्गेर्याम् । र । मदन पाली । च द चातुर्थज्व चि । "अम्लोटजसहस्रेण दलन ।"

**अम्लोत्तमम्** । क्ली । दाडिमे । प मु ।

**अयनम्** । क्ली । माषषट्क व्याप्य भानोरुदग् दक्षिणतो वा गतौ । मे नविक । तच्च द्विविधम्—उत्तरायण दक्षिणायनञ्च । तयोराद्य वर्षाशरद्धेम न्तात्मक, तत्र भगवानाप्याययते सोमोऽम्ललवण मधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व प्राणिनां बलमभिवर्द्धते । द्वितीयञ्च शिशिरवसन्त-ग्रीष्मात्मक तत्र भगवानाप्याययतेऽर्क तिक्तकषाय कटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व प्राणिना बलमपहीयते । सु सू ।

**अयम्**<br>**अयसम्** } क्ली । लौहमात्रे । रबा । च द पाण्डु चि । कान्तलौहे । प मु । मुण्डलौहे । रा नि व १३ ।

**अयस्कान्त** । पु । कान्तलौहे । रा नि व १२ । लौहचुम्बके । कान्तपाषाणे । चुम्बक पाथर । गुणा —लेखन शीतो मेदोविषघ्नश्च । मद व ४ ।

**अयस्कान्तशिला** । स्त्री । लौहचुम्बके । चुम्बक-पाथर । वै निघ

**अयस्कार** । पु । जङ्घाग्रभागे । त्रिका ।

**अयस्फोट** । पु । लौहकिट्टे । वै निघ ।

**अयानम्** । क्ली । स्वभावे । हारा ।

**अयाह्वम्** । क्ली । कांस्यधातौ । काँसा । वै निघ ।

**अयुक्छद** । पु । सप्तपर्णवृक्षे । छातिम गाछ । हे च ।

**अयुग्मक** । पु । सप्तपर्णवृक्षे । वै निघ ।

**अयुग्मच्छद** । पु । सप्तपर्णवृक्षे । छातिम गाछ । अ टी ।

**अयुग्मपत्र**<br>**अयुग्मपर्ण** } पु । सप्तपर्णवृक्षे । वै निघ ।

**अयोग** । पु । विश्लेषे । कठिनोद्यमे । कूटे । मे गत्रिक ।

**अयोगुड** । पु । लौहगुडिकायां । "वरमाशी विषविष कथित ताम्रमेव वा । पीतमत्यग्निसन्तप्तो भक्षितो वाप्ययोगुड ॥ ' च ।

**अयोग्रम्** । क्ली । मुषल । वाग्भट । अर्श

**अरण्यवास्तुक'** । पु । कृष्णवर्वचुपे । वनबेतो । म गाणचाकवत । रा नि, व ५ । See कृष्णवर ।

**अरण्यशालिः** । पु । Wild rice. नीवार धान्ये । उडिधान । मं देवभात । रा नि व २३ ।

**अरण्यश्वन.** । पु । वनकुक्कुरे । नेकडेबाघ । व निघ ।

**अरण्यशूरण** । पु । वनशूरणे । बुना ओल । म गोडासूरण । रा नि व ७ ।

**अरण्यश्वा** । पु । कपौ । वानर । हे च । चित्रकव्याघ्रे ।

**अरण्यसम्भूत** । पु । कर्कटके । काँकरोल ।

**अरण्यहलदीकान्द** } पु । वनहरिद्रायाम् ।
**अरण्यहरिद्रा** (स्त्री } वनहलुद । हि वन हर्दि । गुणा —कुष्ठघ्न वातरक्तापह्य । भा पू १भ ह व । कटु मधुरा रुच्या अग्निदीपनी तिक्ता कुष्ठवातहा रक्तदोषविषश्वासकासहिक्काश्च नाशयेत् । वै निघ ।

**अरति** । स्त्री । अनिच्छायाम् । अस्वास्थ्य चित्तयान्यर्थमरति कथ्यते बुधैः । भा । औदासीन्ये । पित्तरोगे ।

**अरत्निः** । पु । निष्कनिष्ठमुष्टौ । वितत कनिष्ठाङ्गुलि मुष्टि । रा नि व १८ ।

**अरम** । पु । नेत्ररोगविशेषे । वै निघ । अर्म शब्द पश्य ।

**अरल.** । पु । श्योणाकवृचे । श्योणा गाछ । श्रम ।

**अरला** । स्त्री । हंसपदाम् ।

**अरलु.** (क) । पु । श्योणाकवृचे । शोना गाछ । हि अरलु । म टेटु डिडा । श्योणापाठा इति भा म १भ अतिसा चि गङ्गाधरचूर्णे । "नागरपाठारलुधातकीकुसुमै ।" च द गभज्वरे । वै निघ अतिसा चि अम्बष्ठादि । वैतसवृचे ।

**अरलुपुटपाक** । पु । श्योणाकत्वक्पुटपाके । साधनविधि कुटजपुटपाकवत् । 'अरलुत्वक्तथैव पुटपाकोऽग्निदीपन । मधुमोचरसाभ्याञ्च युक्त सर्व्वातिसारजित् ॥' शार्ङ्ग म ख १अ ।

**अरविन्दम्** । स्त्री । पद्मे । पमु । रा नि व १० । ताम्रे । रा नि व १३ । कोकनद । रक्तकुमुद नीलोत्पले । रा नि व १० । पु । सारसपक्षिणि श्रम ।

**अरविन्ददलप्रभम्** । क्ली । ताम्रे । तामा वै निघ ।

**अरविन्दिनी** । स्त्री । पद्मसमूहे । र मा

**अराल'** । पु । Resin सर्जरसे । धुना । हि धुना । म राल । शालवृचे । मत्तहस्तिनि । मे ।

**अरि'** । स्त्री । स्वनामख्यातखदिरे । खदिरविशेष मं आरि । क शौगुरि । तत्पर्य्याय,—सन्दानिका दारौ, खदिरपत्रिका । गुणा —कषाया कटुक तिक्ता रक्तपित्तघ्नी च । रा नि व ८ ।

**अरिपुरिम** । पु । विट्खदिरे । गुयेबाब्ला । म गधीहिवर । व निघ ।

**अरिमः** । पु । विट्खदिरे । गुयेबाब्ला । रत्ना । भैष मुखरो चि ।

**अरिमर्द्द** । पु । कासमर्द्दवृचे । कालकाशन्दा । म कासविदा । रा नि व ४ । एतत्पत्र रुचिकर वृष्य विषकासरक्तघ्न मधुर वातकफघ्न पाचक कण्ठ शोधन विशेषेण कासहर विषघ्न धारक लघु च । भा पू १भ ।

**अरिमेद'** (क.) । पु । (Accacia farnesiana, syn mimosa) विट्खदिरवृचे । विट् खयेर, गुयेबाब्ला, दुर्गन्धखदिर । म गन्धीहिवर । क करवेल् । हि गन्धाबुल । प मु । तत्पर्य्याय,—इरिमेद, रिमेद, गोधास्कन्ध, अरिमेदक, अहिमार, पूतिमेद, अहिमेद, विट्खदिर । गुणा —कषाय उष्ण तिक्त भूतघ्न शोफातिसारकामघ्न विसर्पघ्नञ्च । रा नि व ८ । मुखदन्तरोगघ्न कण्डूविषघ्न श्लेष्मक्रिमिकुष्ठव्रणघ्नश्च । मद व ५ । कषाय उष्ण तिक्त भूतविनाशी मुख रोगदन्तरोगरक्तदोषकण्डूक्रिमिकफशोथातिसारकास विसर्प विषकुष्ठव्रणघ्नश्च । भा पू १भ वटादि । भैष मुखरो चि । च सू ४अ । सावा १ तो ।

**अरिमेदाद्यतैलम्** । क्ली । मुखरोगे विहितम् । मूर्च्छिततिलतैल प्रस्थ क्वाथार्थ खण्डीकृतारिमेदत्वक् (विट्खदिर, गाँटीनाशेश्वर वा गुयेबाब्ला) १२॥ श वारि ६४ श पादशेष १६ श । कल्क द्रव्याणां मञ्जिष्ठादीनां प्रत्येक २ तो । ततो यथा-

ताम्रचूर्णक। चित्रामूलकषायादै यामं खल्वे विमर्दयेत्। तद्गोलं बन्धयेद्वस्त्रे दोलायन्त्रेषु तक्रके। त्रिफलायुते पचेच्चतुर्यामात् समुद्धरेत्। वटिकार्कप्रभा नाम जरामृत्युविनाशिनी। सर्वरस-प्रयोगेषु सूर्य्यतुल्यो भवेन्नरः। पलाशबीजतैलस्य कर्षमेकं गवां पयः। अनुपानमिदं प्रातः दृढगात्रस्ततो भवेत्॥ प्रयोगा रसायना।

**अर्कप्रिया।** स्त्री। आदित्यभक्तायाम्। हुड-हुडिया गाछ। जवायाम्। रा नि व १०।

**अर्कभक्ता।** स्त्री। ब्राह्मी। ब्राह्मीशाक। आदित्य भक्तायाम्। हुड़हुड़िया, हुल्टे इति च भाषा। हि हुलहुल। म सूर्य्यफुलवल्ली। रा नि व ४। र मा।

**अर्कभूति'।** स्त्री। ताम्रभस्मनि। वै निघ २भ चोरताम्ररसे, सबङ्गौ चि।

**अर्कमूर्त्तिरसः।** पु। रसोऽयं सान्निपातिक ज्वरे प्रयोज्य। द्रव्याणि चास्य रसगन्धकलौह विषाणि। अत्र लौहस्याष्टौ भागाः पारदस्य भाग त्रय, गन्धको द्विगुण, विषस्य च षोडशांशो ग्राह्य। अयमेव त्रिदोषदावानल कथ्यते यदायं ताम्रपात्रे स्थापित पुनः निम्बुकरसपित्तवर्गकषायाद्यैर्भाव्यते रसैर्भाव्यते। भैष ज्व चि।

**अर्कमूलम्।** क्ली। तन्नामकक्षुपमूले। च द अम्लिका चि आरग्वधे।

**अर्कमूला।** स्त्री। Aristolochia Indica) ईश्वरमूल्याम्। ईशेर मूल। रत्ना।

**अर्कलवणम्।** क्ली। अर्कक्षारे। वै निघ।

**अर्कवल्लभ.।** पु। बन्धुजीववृक्षे। वान्धुलिवृक्ष, दुपुरे चण्डी। म दुपारी। रा नि व १०।

**अर्कवल्ली।** स्त्री। आदित्यभक्तायां। हुड़हुडे। वै निघ।

**अर्कवेदम् (धम्)।** क्ली। तालीशपत्रे। प मु। रा नि व ६।

**अर्कसुता।** स्त्री। कृष्णापराजितायां। वै निघ।

**अर्कसुधा।** स्त्री। अर्कोत्थसुधायाम्। आक-न्देर दूध। गुण—गुल्मरोगस्य नाशिनी। वै निघ।

**अर्कहिता।** स्त्री। आदित्यभक्तायाम्। हुड़-हुड़िया। म सूर्य्यफुलवल्ली। रा नि व ४।

**अर्कक्षीरम्।** क्ली। अर्कदुग्धनिर्यासे। आक-न्देर आठा। गुणा—क्रमिघ्नं व्रणघ्नं कुष्ठार्शो दरेषु च हितम्। राज। तिक्तलवणमुष्णवीर्यं लघु स्निग्ध गुल्मोदरकुष्ठहरं विरेचने हितञ्च। भा पू १भ। च द अर्श चि।

**अर्कादिगणः।** पु। अर्कालर्कनागदन्तीविशल्या भार्गी रास्नावृश्चिकालीप्रकीर्य्या - प्रत्यक्पुष्पी - पीत तैलोदकीर्य्याश्वेतायुग्मतापसवृक्षा इति। अर्कालर्कं करञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेता महाश्वेतावृश्चिकाल्यलवणातापसवृक्षश्चेति॥ सु सू ३८अ। गुणा—कफमेदोविषघ्न क्रमिकुष्ठघ्न विशेषाद्व्रणशोधनश्च। वा सू १५अ।

**अर्काश्मा।** पु। सूर्य्यकान्तमणौ। चुनी, मोम इति च लोके। इला।

**अर्काह्व।** पु। तालीशपत्रे। सूर्य्यकान्तमणौ। अर्कवृक्षे। अम।

**अर्की।** पु। मयूरे। मयूर। म मोरी। वै निघ।

**अर्केश्वररस.।** पुं। रसोऽयं वातव्याध्युपशमनो द्विविधः। तृतीयो रक्तपित्ते, चतुर्थश्च कुष्ठाधिकारे। "रसस्य भागाश्चत्वारो गन्धकस्य दशैव तु। ताम्रस्य वाटिकायाञ्च दत्त्वा चैनामधोमुखीम्। सम्यक् निरुध्य तस्याश्च दद्यादूर्द्ध्वे शरावकं। भाण्डे निरुध्य यत्नेन भस्मनापूर्य्य भाण्डकम्। अग्निं प्रज्वालयेद्यामं मुखं तस्य निरुध्य च। स्वाङ्गशीतं समुद्धृत्य तत्ताम्रं चूर्णयेद्भिषक्। भावयेदर्कदुग्धेन पुटित्वा दशधा पुनः॥" रसे चि। रसेन्द्रसार-संग्रहे अयमेव कुष्ठे धृत। विशेषस्तु—तत्र गन्ध-कस्य ताम्रपत्रिकायाश्च १२ भागा उक्ता। इति प्रथम॥ 'रसेन गन्धं द्विगुणं विमर्द्य ताम्रस्य चक्रेण सुतापितेन। आच्छादयित्वाथ ततः प्रयत्नात् अर्के विलग्नश्च ततः प्रगृह्य। सचूर्णं च द्वादश धार्कदुग्धै पुटेत वह्निविफलाजलैश्च।' भाचा २र। इति द्वितीय॥ रसे चि। "सूतार्कं मृतताम्रञ्च मृताभ्रञ्च समांशिकम्। अमृताम्बुरसैर्भाव्य त्रिसप्तक पुटे पचेत्। वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः। भक्षणम्।' अत्र अर्क ताम्रम्। अमृता गुडूची। माक्षिक स्वर्णमाक्षिकम्। र सा स रक्त पित्त चि। इति तृतीय॥ चतुर्थं कुष्ठाधिकारे। "पलानीषस्य चत्वारि अनेर्द्वादश ताम्रतो। ताम्रस्य पत्रिका देया रसस्योर्द्ध्वे शरावकं। दत्त्वा विमर्द्य भाण्डस्य पूरयेद्भस्मना दृढ। अग्नि प्रज्वालयेद्याम

दय शीत विचूर्णयेत्। पुटेद्द्वादशधा सूर्य्यादुग्धेना लोडित पुन। वरापावकभृङ्गाना द्रवस्त्रिभि र्विभावयेत्। अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित्।" अत्र ईश पारद, तस्य चत्वारि पलानि। बलिगन्धकस्य च द्वादशपलानि। र सा स।

**अर्कोत्तमा**। स्त्री। वर्व्वर्याम्। बाबुइतुलसी।

**अर्कोपल**। पु। सूर्य्यकान्तमणौ। आतस्‌पाथर इति लोके। रा नि व १३।

**अर्गट**। पु। आर्त्तगल इति प्रसिद्धे कण्टकवृक्षविशेषे। नीलझाँटी। हि आर्त्तगल। म एरपणी। गुणा—शीत व्रणशोधनरोपणश्च। मद व ५। तथा। "अर्गटस्तुवर शीतवीर्य्या व्रणविशोधन। व्रणरोपणकृच्चैव पुष्पमस्य मधु स्मृतम्। तिक्तञ्च ज्वरपित्तघ्न कफरक्तरुजापहम्।" वै निघ।

**अर्गलम्**। क्ली। मासे। वै निघ।

**अर्घटम्**। क्ली। भस्मनि। हारा।

**अर्घ्यम्**। क्ली। माक्ष्यमधुनि। See मधु।

**अर्घ्याट (ल)**। पु। शकलायाम्। ওকড়া, চেঁচ্‌কো। शकला चालुपत्र स्यादर्घ्यंतोऽर्घ्याटको मत, इति द्रव्याभि।

**अर्घ्यात**। पु। अर्घ्याटे। ওকড়া। द्रव्याभि।

**अर्घ्याहिं**। पु। मुचुकुन्दवृक्षे। रा नि व १०।

**अर्चि**। स्त्री, क्ली। कान्तौ। अग्निज्वालायाम्।

**अर्जक**। पु। क्षुद्रतुलसीवृक्षभेदे। বাবুই তুলসী। हि बावरी। म अजवल्ला। क गर्गेर। तै तेल्लगग्गेरचेट्टु। तत्पर्य्याय,—श्वेतच्छद गन्धपत्र पाता कुठेरक। "वर्व्वरिकाकारी लघुमञ्जरीक सूक्ष्मपत्र निर्गन्ध श्वेतकुठेरक (বাবুই)।" स सू ३८ अ सुरसादी च। श्वेतवर्व्वर्य्याम्। शादा बाबुई। भा पू १भ। श्वेतपर्णास ভোকমারী इति लोके। सियो विमूधी चि वमनशान्तौ। अर्जक श्वेत कृष्णरक्तभेदात्त्रिभेद तुल्यगुणश्च। गुणा—कटूष्ण वातकफरोगघ्न नेत्ररोगहर रुच्य सुखप्रसवकरश्च। रा नि व १०। श्वेतपर्णासवृक्षे। See बवरी।

**अर्जकार्ज**। पु। असनवृक्षे। আসনা, পিয়াশাল।

**अर्जुन**। पुं। (Tarminalia Arjuna or Pentaptera arjuna.) स्वनामख्यातवृक्षे। অর্জ্জুন গাছ। हि कहू, कोह। म अर्जुनसादडा। क सारदोल। तै मद्दिचेट्टु। तत्पर्य्याय,—नदीसर्ज्ज वीरतरु इन्द्रद्रु ककुभ (अ), इन्द्रद्रुम (शब्दर), अम्बर, पार्थ चित्रयोधी धनञ्जय वैरान्तक किरीटी गाण्डीवी कर्णारि करवीरक कौन्तेय इन्द्रसूनु गाण्डीरी शिवमल्लक सव्यसाची धीरद्रु कृष्णसारथि पृथाज फाल्गुन धन्वी। गुणा—कषायोष्ण कफघ्न व्रणशोधन पित्तश्रमतृष्णाहर वातकोपनश्च। रा नि व ९। शीतल हृद्य क्षतक्षयविषरक्तहर मेदोमेहव्रणघ्न तुवर कफपित्तघ्नश्च। भा पू १भ वटादिव। वा सू ५ अ न्यग्रोधादि। "जम्ब्वाम्राजुनकपीतनसोमवल्क।" माधा २ लो। नेत्रशुक्लगतरोगे। लक्षणम्—"एको य शशरुधिरोपमश्च विन्दु शुक्लस्थो भवति तमर्जुन वदन्ति।" मा नि। मयूरे। मेतनिक। नि। श्वेतवर्णे।

**अर्जुनम्**। क्ली। तृणमात्रे। इला। सुवर्णे। म नविक। कासतृणे। र मा। दर्भभेदे।

**अर्जुनघृतम्**। क्ली। हृद्रोगे हितम्। अत्र क्वाथार्थमर्जुनत्वक् ६४ प पाकार्थं जल ६४ श शेष १६श कल्क १ श घृत ४ श। मूर्च्छितघृत ४श अर्जुनस्वरस १६श अर्जुनत्वक्कल्क १श एकत्र पाच्यम्। च द हृद्रोग चि। "पार्थस्य कल्कस्वरसेन सिद्ध शस्त घृत सर्व्वहृदामयेषु।" घृत ४ श अर्जुनस्वरस ४ श कल्कार्थं अर्जुनत्वक् १ श। सा कौ। भैष भा रस र।

**अर्जुनत्वक्**। स्त्री। अर्जुनवल्कले। অর্জ্জুনছাল। च द अ सा चि शूलव्यादि।

**अर्जुननामाख्य**। पु। अर्जुनवृक्षे। भा।

**अर्जुनसुधा**। स्त्री। अर्जुनोत्थसुधायां। অর্জ্জুনকাঠের চূণ। गुणा—"सुधा ह्यर्जुनजा शीता कफस्य च विनाशिनी।" वै निघ। द्रव्यगुणे।

**अर्जुनाख्य**। पु। कासतृणे। र मा। अर्जुनवृक्षे।

**अर्जुनाद**। त्रि। दर्भकाशखादके। च चि २ अ।

**अर्जुनाद्यघृतम्**। क्ली। प्रमेहे घृतम्। यथा—"अर्जुनपटोलनिम्ब त्वचादीप्यकरोहणमञ्जिष्ठे। भल्लातकागुरुघ्ने सन्दानमरन्दगोशीरे। नीपुरककोमवल्के नक्तपटोलेर्द्दरिद्रा त्रिफला। अत्र कषायाणामर्द्ध तोयश्चतुर्गुणेन चैव शोध्य। मञ्जिष्ठा

षष भावनायाम्लदाड़िमे। गुञ्जादय पथ खण्डे खादेत्पाय।" भैष पाण्डु चि।

**आननम्**। क्ली। मुखे। रा नि व १८।

**आनय**। पु। उपनयने।

**आनर्त्त**। पु। जले। मे तत्रिक।

**आनाखु**। पु। इन्द्रतुल्यायाम्। प गृ।

**आनाह**। पु। विण्मूत्ररोधकव्याधौ। मूढ़ो। तस्य लक्षण—"आम शकृद्वा निचित क्रमेण भूयो विबद्ध विगुणानिलेन। प्रवर्त्तमान न यथास्वमेन विकारमानाहमुदाहरन्ति।" भा। मा नि।

**आनील**। पु। नीलवर्णाश्वे। रङ्गे। म कथित। हैं च। त्रि। ईषन्नीलवर्णे।

**आनुलोमन**। त्रि। अनुलोमकारिणि। च द अर्श चि।

**आनुलोम्यम्**। क्ली। सारल्ये। च द अश।

**आनुवासनिकम्**। क्ली। अनुवासनवस्तौ। च चि ३अ। See अनुवासनवस्ति।

**आनूप**। पु। महिषे। जटा। अनारस इति ख्यात वृक्ष। हिन्तलवृक्षे। टहज्जलगाछ। प मु। अनूपदेशवासिप्राणिमात्रे। देशविशेषे। क्ली। भौम जलविशेषे। तन्निरुक्तिगुणा——रहम्बु बहुव्रतय वातश्लेष्मामयान्वित। देशोऽनूप इति ख्यात आनूप तद्भव जलम्॥ इति। See अनूप। जले। रा नि व १४। See जलम्।

**आनूपजलम्**। क्ली। अनूपदेशस्थजले। तद्गुणा—स्वादु स्निग्ध गुरु पित्तहर पामाकण्डूवात कफज्वरकरञ्च। रा नि व १४।

**आनूप-जाङ्गल-साधारणमांसम्**। क्ली। रुरु हरिण मृगक्रोड़ सारङ्गाणा मांसेषु। तच्च लघु स्वादु बल्य हृद्य कृष्यञ्च। रा नि व १७।

**आनूपपक्षिमांसम्**। क्ली। सारसहंसचक्र वाकादिमांसे। गुणा—शीतल स्निग्ध वात कफघ्न गुरुञ्च। रा नि व १७।

**आनूपभूमि**। स्त्री। सजलभूमौ। See अनूप।

**आनूपमांसम्**। क्ली। कूलेचर प्लव कोशस्थ पादिमत्स्याणा मांसेषु। त च गवय रुरु च्छागक्रोड़ गण्डकादय। रा नि व १७। गुणा—मधुर स्निग्ध गुरु अग्निमान्द्यकर कफकर मांसपोषक अभिष्यन्दि प्रायेण हितञ्च। भा पू १भ। सि यो वा व्या शालण भेद।

**आनूपवर्ग**। पु। तद्देशस्थप्राणिवर्गे। आनूप वर्गस्तु पञ्चविध। तद्यथा—कूलचरा प्लवा कोशस्था पादिनो मत्स्याश्चेति। तत्र गजगवयादय कूलचरा पशव। तन्मांस वातहर वृष्य मधुर मित्यादिगुणयुक्तम्। हंससारसादय प्लवा सङ्घात-चारिणश्च—तन्मांस रक्तपित्तादिहरम्। शङ्ख शङ्खनखादय कोशस्था—तन्मास स्वादुरसपाक त्वादिगुणम्। कूर्म्मकुम्भीरादय पादिनश्च। सु सू ४६अ। आनूपालेषु विज्ञेया श्लेष्मला वात कोपना। अत्रि २०अ।

**आन्तरि (री) क्षजलम्**। क्ली। आकाश सलिले। तच्चतुर्विध भवति धार कार तौषार हैम भेदात्। तेषु धार वर्षोद्भव, वर्षोपलोद्भव कारम्, नीहारतोय तौषार तथा प्रातर्हिमोद्भव हैममिति। धारमपि द्विविध सामुद्रगाङ्गभेदात्—तयोर्गाङ्ग गुणाढ्यमदोष पावनञ्च। तदुक्त आश्विने स्वाति विशाखस्थे रवौ मेघो यद्वर्षति वारि तद्गाङ्ग, तथा मार्गशिर्षादिनक्षत्रेषु मेघो यद्वर्षति तोय तत्सामुद्र ज्ञेयम्। तत्परीक्षा दधिलिप्ते रौप्यपात्रे शाल्यो दनपिण्ड विन्यस्य वर्षायां धृत न विकारमेति मुहूर्त्तेन तदा गाङ्ग ज्ञेयम्। तच्च जल गाङ्ग स्वादु शीतल रुचिप्रद कफ पित्तघ्न निर्दोष स्वच्छ लघु नित्यगुणाधिकञ्च। तथा सामुद्रजल शीत गुरु कफवातकर। यथा चित्रानक्षत्रे पतित तद्गुणाढ्य गाङ्गवद्भवति, तथोभयविधमेव वारि रसाश्रय वशाद्भुवि पतित नानारसत्व याति। रा नि व १४। See गगनाम्बु।

**आन्त्रम्**। क्ली। अन्त्रे।

**आन्त्रिक**। त्रि। अन्त्रसम्बन्धीये।

**आन्दोलनम्**। क्ली। कम्पे।

**आन्ध्रसिक**। त्रि। पाचके। अम।

**आन्ध्रदेशपूगम्**। क्ली। तद्देशीयपूगफले। गुणा—पाके मधुर किञ्चिदम्ल तुवर वातकफघ्न मुखजाड्यकरञ्च। वै निघ।

**आप**। (म) क्ली। जलसमूहे। पु। अष्टवसु मध्ये। स्त्री। वाम्भ्रे। सीता। अम।

**आपक्कम्।** त्रि। इषत्पक्के कलायादौ। अम। गोटिका इति कश्चित्।

**आपगाजल (वारि) (सलिलम्)।** क्ली। नदीजले। गुणा—"नादेयं दीपन रुक्ष वातलं लघु लेखन"। मद व ८। See नदी।

**आपणः।** पु। हट्टे। पण्यविक्रयस्थाने। अम।

**आपतिक.।** पु। शोणपक्षिणि। बाजपक्षी।

**आपनम्।** क्ली। मरिचे। श च।

**आपनिक'।** पु। इन्द्रनीलमणौ।

**आपन्नसत्वा।** स्त्री। गर्भवतीनार्य्यां। रा नि व१८।

**आपस्तम्भिनी।** स्त्री। लिङ्गिनीलतायाम्। रा नि व ३।

**आपाक।** पु। पायान् इति कुम्भकारस्य आर्द्र शुष्कमृत्पात्रदाहस्थाने। जटा।

**आपानम्।** क्ली। पानभूमौ। हला।

**आपालि.।** पु। केशकीटे। উকুণ। अम।

**आपिञ्जरम्।** क्ली। स्वर्णे। সোণা। रा नि व १३।

**आपीत।** पु। तुणीवृक्षे। তুঁদ গাছ। गुणा—कटु कषायो मधुर लघु तिक्त ग्राही हिमो उष्ण व्रण कुष्ठ रक्तपित्तघ्न। भा पू १भ। क्ली। रौप्यमाक्षिकधातौ। स्वर्णमाक्षिके। रा नि व १३। पद्मकेशरे। मद व ३।

**आपीनम्।** क्ली। ऊधसि। हला। सुवर्ण स्त्याम्। সোণামুখী। अम। पु। कूपे।

**आपुप' (पूप)।** पु। पिष्टके। रत्ना। आपूपशब्दानुमाने। राज।

**आपूप्य।** पु। शक्तुके। चूर्णके। ছাতু, ময়দা বেসন্। त्रिका।

**आपूर्य्यमाण।** पु। शुक्लपक्ष।

**आपूपम्।** क्ली। रक्ते। दा, रक्त। रा नि व १३।

**आप्त।** त्रि। विश्वस्तवाचि। रजस्तमोभ्यां निर्मुक्ताः तपोज्ञानबलेन ये। येषां त्रिकालममलं ज्ञानमव्याहतं सदा। आप्ताः शिष्टा विबुधास्ते तेषां वाक्यमसंशयम्॥" चर।

**आप्ता।** स्त्री। जटायाम्। हारा।

**आप्यम्।** क्ली। वाळौषधौ। कुड़। करौ। भा पू १भ। त्रि। जलविकारजे फेनादौ।

**आप्यायनम्।** क्ली। तर्पणे। प्रीणने। रा नि।

**आप्ल(प्ला)व, (प्लुतम्)।** पु, क्ली। स्नाने। अम। हे च।

**आफिङ्गम्।** क्ली। अहिफेने। श चि।

**आफोनम्।** क्ली। अहिफेन। वै निघ।

**आफु(फू) कम्।** क्ली। अहिफेने। আফিম। भा पू १भ।

**आबाधा।** स्त्री। पीडायाम्।

**आब्दिका।** क्ली। तिन्तिडाम्। श र।

**आभा।** स्त्री। बब्बूले। বাবলা। म बाभूल। भा पू १भ वटादिव। च द भग्न चि वा व्या परश्च पाकि। २ा त्रिकशूल चि। महाशतावर्य्याम्। See बर्बूर।

**आभागुग्गुलु'।** पु। भग्नाधिकारे, भग्नसन्धाने च हितकर। आभावब्बूलि। বাবলা। "आभा फलत्रिकव्योष सर्व्वैरेभि समीकृते। तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधक॥ च द भग्न चि।

**आभीलम्।** क्ली। शरीरपीडायाम्। वै निघ।

**आम।** पु। व्याधिमात्रे। मो। मनवैषम्यरोगे। रा नि व २०। अपक्वान्नजरसे। सिग्धो श्लो चि बन्ध। तल्लक्षण यथा—"आमाशयस्थ रस सारो यो न पक्वोऽग्निलाघवात्। आमसंज्ञां स लभते बहुव्याधिसमाश्रय। आममन्नरसं केचित् केचित्तु मल सञ्चयम्। प्रथमा दोषदुष्टिं वा केचिदामं प्रचक्षते॥ ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगत रसमाम प्रचक्षते॥" इति। विश्व र। षट्प्रकाराजीर्णरोगेषु। See अजीर्णम्।

**आमक।** पु। कुष्माण्डे।

**आमगन्धि।** त्रि। विस्रगन्धयुक्ते। আঁশটে গন্ধযুক্ত। अम।

**आमगन्धिहरिद्रा।** स्त्री। (Curcuma reclinata) আম আদা। हि आमहलदी। वै निघ।

**आमघ्नी।** स्त्री। कटुतुम्ब्याम्। रा नि व ६।

**आमचनक'।** पु। अपक्वचणके। কাঁচা ছোলা। मं फवे आद चीनहरभरे। क हद्रिला

हरिद्रवकर्णे। गुणा—शीतल रूक्ष सन्तर्पण तृष्णादाहहर शील्य अश्मरीशोषघ्न कषाय इष स्कटुवीर्य्यश्च। रा नि व १६।

**आमज्वर** । पु। अपक्वज्वरे। काँचा ज्वर। "लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकम्। तन्द्रा लस्याविपाकाश्च वैरस्य गुरुगात्रता इत्यादि आमज्वरस्य लिङ्गम्॥ मा नि।

**आमण्ड (क)** । पु। एरण्डवृक्षे। प य। गर्भैरण्डे। रा नि व ८। भा पू १भ।

**आमण्डवास.** । प। आसवे। वै निघ।

**आमतिन्तिडि (डी)** । स्त्री। अपक्वतिन्तिडाम्। काँचा तेँतुल।

**आमनस्यम्** । क्ली। वैमनस्ये। दु खि, पीडा याम्। अम।

**आमपत्रिका** । स्त्री। चिल्लीशाके। म चिविल। व निघ।

**आमपीनसम्** । क्ली। कफे। कफाक्रमणे। सर्दि हओन।

**आमय** । पु, क्ली। कृष्णागुरुणि। रसा। कुष्ठे। दूड। रा नि व ११। मियी अप चि। "शिरीष लगुनामये।" भा म १भ ज्व चि शालपर्ण्यादि मूलामयमधुम्रुता। रोगे। उष्ट्रे। रा नि व २०।

**आमयव्याम** । त्रि। रोगिणि।

**आमयावी** । त्रि। रोगिणि। रा नि व २०।

**आमरक्तम्** । क्ली। रक्तामाशयरोगे। मा नि। See अतिसार।

**आमरस** । पु। अपक्वरसे। सि यो मजी चि श्रीकण्ठ।

**आमल (क)** । स्त्री। आमलक्याम्। आमला गाछ। वासकवृक्षे। वासक गाछ। श च। काठ धात्रीफले। काठ आमला। See काठधात्री फलम्। पद्मकाष्ठे।

**आमलकचूर्णम्** । क्ली। रसायनाधिकारे। च चि १भ।

**आमलकगुण्ठ** । पु। काठामलके। "गुड़ाम लकगुण्ठयो।" च द ज्व पथ्यादि।

**आमलका (की)** । स्त्री। (Phyleanthus emblica Syn Imblica officinalis) स्वनामख्यातवृक्षे। आम्ला गाछ। हि अओरा। म आवले। क नेल्लि। उत, अंडा। तत पर्य्याय,—तिष्यफला अमृता वयस्था वयस्था कायस्था (अ), अकरा (श), बहुफली (मे), श्रीफली धात्रिका शिवा शान्ता धात्री अमृतफला वृष्या वृत्तफला रोचनी (रा), पञ्चरसा (शब्दमा), कर्षफला तिष्या (र)। आमलकी गुणा हरीतकीतुल्या। विशेषम् रक्तपित्त प्रमेहशान्तिकरो स्वास्थ्यकरो रसायनी अम्लरसा च। मद व १। भा पू १भ। कषायाम्ला मधुरा शीतला लघ दाह पित्त वमि मेह शोषघ्नो रसायनी च। रा नि व ११। अस्या फलमपि अम्लत्वाद्वायु माधुर्य्येण पित्त रूक्ष कषायत्वात कफश्च हन्ति इति त्रिदोषघ्न। मद व १। आम लस्य फल शुष्क तिक्तमम्ल कटु स्मृतम्। मधुर तुवर केश्य भग्नसन्धानकारकम्। तथा आमलक्यास्तु वृक्षस्य मज्जातु तुवरा मधु। वमिकृद्वातपित्तघ्नौ चान्ये तु फलवद्गुणा। वै निघ। अम्लमामलक मृदुशीतवीर्य्यत्वात पित्त शमयति। सु सू ४५ष। तान् गुणान्तानि कर्माणि विद्यादामलकीष्वपि। यान्युक्तानि हरीतक्या वीर्य्यस्य तु विपर्य्यय॥ च चि १अ। काठधात्रीफल स्वादु कषाय कटु शीतपित्तास्रदोषघ्नश्च। भ्रुस्यामलक्याम्।

**आमलकायसम्** । क्ली। रसायनविशेषे। इद ब्राह्मरसायनमपि कथ्यते। आमलक निरस्थि यथोक्त विधिना शुष्क दश जीवनीयादिक मिलित दश दशगुणवारिणा क्वाथयित्वा पादशेषे पूत क्वाथ ग्राह्यम्। तत चर्ण यथाविहिताग्निना साध्यम। च चि १अ।

**आमलकावलेह** । पु। रसायनविशेषे। च चि १अ रसायनाधिकारे।

**आमलकीपत्रम्** । क्ली। तालीशपत्रे। वै निघ।

**आमलक्यादि** । पु। तदादिवर्गे। आमलकी हरीतकी पिप्पली विभीतकश्चेति। आमलक्यादि रित्येष गण सर्व्वज्वरापह। चक्षुष्यो दीपनो वृष्य कफारोचकनाशन॥ सु सू ३८ष।

**आमलक्यादिचूर्णम्** । क्ली। सर्वज्वरे हितं भेदि दीपनञ्च। आमलं चित्रक पथ्या पिप्पली सैन्धव तथा। चूर्णितोऽय गणो ज्ञेय सर्वज्वरहर पर॥ भा म २भ ज्व चि।

**आमलच्छद** । पु। तालीशपत्रे। [illegible]।

**आमलाद्यलौहम्** । क्ली । रक्तपित्ते रस विशेष । अत्र लौह सूक्ष्मचूर्णसम । आमला पिप्पलीचूर्णं तुल्यया सितया सह । रक्तपित्तहरं लौह योगराजमिद स्मृतम् ॥ र सा स ।

**आमली** । स्त्री । अम्लामलक्याम् । वै निघ ।

**आमवात** । पु । Acute rheumatism आमलक्षणविशिष्टवातरोगविशेषे । आमवात । "अङ्गमर्दोऽरुचिस्तृष्णा चालस्य गौरव ज्वर । अपाक शूनताङ्गानामामवातस्य लक्षणमिति तल्ला लरम् । विरुद्धाहारचेष्टाभ्यां मन्दाग्नेर्निश्चलस्य च । स्निग्ध भुक्तवतो ह्यन्न व्यायाम कुर्वतस्तथा ॥ वायुना प्रेरितो ह्याम श्लेष्मस्थान प्रधावति । तेना त्यर्थं विदग्धोऽसौ धमनी प्रतिपद्यते । वातपित्त कफैर्भूयो दूषित सोऽन्नजो रस । स्रोतांस्यभिष्य न्दयति नानावर्णोऽतिपिच्छिल । जनयत्याशु दौर्बल्य गौरव हृदयस्य च । व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुण । युगपत्कुपितावन्तस्त्रिक सन्धिप्रवेशकौ । स्तब्ध वा कुरुतो गात्र आमवात स उच्यते ।" मा नि ।

**आमवातगजसिंहमोदक** । पु । आमवात हितकर । अत्रादौ खण्ड किञ्चिज्जलेन संमिश्र्य मृद ग्निसन्तापे उष्णीकृत ततश्चूर्णादि सर्व प्रक्षिप्य मोदकवत्पचेत् । ततो घृत मधु च प्रक्षिपेत् । "शुण्ठी चूर्णस्य प्रत्येक यमान्याश्च पलाष्टकं । जीरकस्य पल द्वे च धान्यकस्य पलद्वय । पलैक शतपुष्पाया लवङ्गस्य पल तथा । टङ्कणस्य पल भृष्ट मरिचस्य पलानि च । चित्रकत्रिफलाचारपिप्पलीनां पल न्तथा । शृङ्गेला तेजपत्रञ्च चविकानां पल तथा । अभ्र लौह तथा वङ्ग प्रत्येकञ्च पल पलम् । एतषां सर्वचूर्णानां खण्ड दद्यात् गुणत्रय । घृतेन मधुना मिश्र कर्षमात्रन्तु मोदक" ॥ र सा स ।

**आमवातारिगुडिका (वटिका)** । स्त्री । आमवाते रस । रस गन्धक सोहागा सैन्धव लौह ताम्र शङ्खभस्म—एषां प्रति १ तो गुग्गुलो १४ तो त्रिफलाचूर्णं ३॥ तो चित्रकचूर्ण ३॥ तो सर्व घृतेन विमर्द्य वटी कार्या । सा कौ । रस र । रसगन्धकलौहाभ्र तुल्य टङ्कणसैन्धव । समभाग विचूर्ण्याथ चूर्णाद्द्विगुणगुग्गुलुम् ॥ गुग्गुलो पादिक देयं त्रिहतामूलवल्कलम् । तत्सम चित्रक देय घृतेन परिमर्दयेत् ॥ खादेन्माषद्वय चास्य त्रिफला चूर्णयोगत ॥ इति । रसगन्धौ वराबह्निगुग्गुलु क्रमवर्द्धित । एरण्डतैलेन मर्द्दयेदति चिक्कणम् ॥ इति च । र सा म । पाठान्तरे—रस गन्धकलौहार्कतुल्यटङ्कणसैन्धवात् इति । तथा— रसगन्धकलौहार्कशङ्खटङ्कणसैन्धवात् इति च ।

**आमवातेश्वररस** । पु । आमवाते रस । अत्र गन्धकादिसर्वं द्रव्य पञ्चाङ्गुलरसे इति एरण्ड मूलरसे । पत्र पुनर्निर्गति सप्तवार भावयेत् । तत सच्चूर्णं पञ्चकोलक्काथे २० वारान् भावयेत् । तत टङ्कणादिसर्वं योज्यम् । पाठ —शुद्धगन्ध पलार्द्धञ्च मृतताम्रञ्च तत्सम । तामार्द्धं पारद शुद्ध रसतुल्य मृतायस । सर्वं पञ्चाङ्गुलेनैव भावयेच्च पुन पुन । मच्चूर्णं पञ्चकोलीयं क्वाथे सर्वं विभावयेत । रौद्रे विंशतिवाराश्च शुष्कीभूत रसेन्द्रक । भृष्टटङ्कण चूर्णेन तुल्येन सह मेलयेत । टङ्कणार्द्ध बिड देय मरिचं बिडतुल्यक । तिन्तिडिक्षारतुल्यञ्च सूत तुल्यञ्च दन्तिक । त्रिकटु त्रिफलञ्चैव लवङ्ग चाई भागिक । आमवातेश्वरो नाम विष्णुना परि कीर्त्तित ॥ र सा स ।

**आमशूल** । पु । The cholic pain arising from indigestion आमजन्य शूलरोगभेद । तल्लक्षण यथा—"आटोपहृल्लास वमीगुरुत्वस्तैमित्यमानाहकफप्रसेकै । कफस्य लिङ्गेन समानलिङ्गमामोद्भव शूलमुदाहरन्ति ॥" इति निदानम् ।

**आमाजीर्णम्** । क्ली । आमरसाजीर्णे ।

**आमातीसार** । पु । Dysentery षड्- धातीसारान्यतमे रोगविशेषे । अस्य सम्प्राप्ति — अन्नाजीर्णात्प्रद्रुता चोभयन्त कोष्ठ दोषा धातु सङ्घान् मलाश्च । नानावर्ण नैकश सारयन्ति शूलो पेत षष्ठमेन वदन्ति ॥ संसृष्टमेभिर्दोषैश्च न्यस्तमप्स्ववसीदति । पुरीष भृशदुर्गन्धि पिच्छिलञ्चाम संज्ञितम् ।" मा नि ।

**आमानुबन्ध** । पु । आमसात्त्ये । सन्दा आमसञ्चये । च द श्ह चि गुडूच्यादि ।

**आमान्नम्** । क्ली । अपक्वान्ने । কাঁচা বা আতপ চাউল ।

**आमाम्लम्** । क्ली । सालाम्रे । কচি আম্ । गुणा —"कषायमम्लरस रुच्य वातपित्तवर्द्धकञ्च ।" भा पु १ भ ।

**आमावस्या** । स्त्री । अपक्वामावस्यायाम् ।

**आम्रत्वचा** । स्त्री । आमवल्कलि । আমের ছাল । गुण—कषाया । रा नि व ११ ।

**आम्रनिशा** । स्त्री । आम्रहरिद्रायां । श निघ ।

**आम्रपल्लव** । पु क्ली । आमकिसलय । च स छद्दा । गुण—रुच्य कफपित्तघ्न । भा पु १भ ।

**आम्रपुष्पम्** । क्ली । आमसुकुल । আমের বোল । गुण—रुच्य दीपनश्च । रा नि व ११ । अतीसार कफपित्तप्रमेहघ्न रक्तदुष्टिकर शीत वात लघ्न । भा पू १भ ।

**आम्रपेशिका (शी)** । स्त्री । गुप्तामखण्ड । আমচুর, আমশী । स आंबोशी । गुणा—अम्ल मधुरा कषायरसा भेदिका वातकफघ्नी च । भा पू १भ ।

**आम्रफलम्** । क्ली । आमे ।

**आम्रफलपानकाम्** । क्ली । आमफलकृत पानकविशेष । আমের পানা । "आममाम जले स्विन्नं मर्द्दितं दृढपाणिना । सिताशीताम्बुसयुक्तं कर्पूरमरिचान्वितं । प्रपाणकमिदं श्रेष्ठ भीमसेनेन निर्मितं । सद्यो रुचिकरं वल्यं शीघ्रमिन्द्रियतर्पणम् ॥ भा पू १भ ।

**आम्रमयः** । ति । आमकृते ।

**आम्रमूलम्** । क्ली । आमशिफायां । আমের শিকড় । गुणा—सुगन्धि रुच्य सग्राहि शीतलश्च । रा नि व ११ ।

**आम्ररसाकृति** । पु । रसालभेद । किञ्चित्कुङ्कुमसयुक्ता विसम्बदविगालिता । सशर्करा भवेच्छीता पक्वाम्ररससन्निभा ॥ पीता शिखरिणी या सा लघ्वी वर्णकृतो हि सा । सुरुच्या मधुरा बल्या वातपित्तहरापरेति ॥

**आम्रलेह** । पु । आमकृतलेह । हि रायत । আমের চাট । 'तरुणाम भर्ज्जयित्वा सह येद्गुड शर्करे । सैन्धव मरिच हिङ्गु भर्जित तत निःक्षिपेत् । रुचिकृच्चाम्र लेहोऽय मधुरम्लनिकारक । हृद्य स्निग्धो गुरुश्चैव पाकविद्याविशारदः ॥' वै निघ ।

**आम्रवन्द** । पु । आमवन्दायाम् । আম গাছের বান্দুরা । वै निघ २भ ज्व चि ।

**आम्रव(वा)ट** । पु । आम्रातके । मद व ६ ।

**आम्रवीजम्** । क्ली । आमास्थिनि । আমের আঁটী বা কুশী । हि कोइलीया । गुणा—कषा छर्द्यतीसारघ्न हृदयदाहघ्न मधुर हृदयदाहघ्नश्च । भा

**आम्रवेतस** । पु । अम्लवेतसे । रा नि व ६

**आम्रहरिद्रा** । स्त्री । आमनिशायाम् । আম হলুদ । गुणा "तिक्ता चाम्ला रुचिप्रदा लघुर्वह्निदीपनी चोष्णा तुवरा च सरा मता । कफ शोषघ्न काम श्वास हिक्का ज्वरं तथा । कुष्ठरोग रक्तदोष नाशयत् ।" वै निघ ।

**आम्रात (क)** । पु । The hogplum ( Spondias mangifera ) स्वनामप्रसिद्ध वृक्षविशेष । আমড়া গাছ । हि आम्बाडा । क हरनरिश्मांबा, आंबाडे । तत्पर्याय,—पीतन कपीतन तपराक्ली र ), मधुराम्लक ( श ) पीतनक कपीचूत आम्रवाटिक भद्रीफल रसाढ्य तानीर कपिप्रिय अम्लवातक कपिचूत अम्ल रोप ( श ), आम्रात अमात ( शञ्ज मा ) अम्रातक अध्वगभोग्य ( वि ) । फलगुणा—"आम्रातमन्यवातघ्न गुरुष्ण रुचिकृत्सर । पक्वन्तु तुवर स्वादुरसपाक हिम स्मृत । तर्पण श्लेष्मल स्निग्ध तृष्य विष्टम्भि दुर्जर । गुरु दल्य मरुत्पित्त क्षत दाह क्षयास्रजित् । आम फल कषायाम्ल । पक्व तत मधुराम्ल स्निग्ध पित्तकफघ्नश्च । रा नि व ११ । आम्रावर्त । আমোট্ট, আমসত্ব इति ख्याति । 'पक्वस्य सहकारस्य कट विस्तारितो रस । घर्मशुष्को ,पुनर्दत्त आम्रातक इति स्मृत ॥' क्ली । आम्रातकफल । আমড়া । राजाम्र । भा प १भ ।

**आम्रातक** । प । पलाशिकायाम् । रा नि व २३ । च सू ४ अ ।

**आम्रावर्त्त** । प । Inspissated mango juice आम्रातके । আমোট্ট আমৌট, अमावट इति च प्रसिद्ध । हि अम्बट । म आंबरसा चौंपोळी । विधि—पक्वामरस पटे विस्तारित रौद्रशुष्क आम्रावर्त उच्यते । गुणा—तृष्णाच्छर्दि वातपित्तघ्न सारक रुच्य लघुश्च । भा पु १भ ।

**आम्रास्थि** । क्ली । आम्रवीजमध्ये । আমের আঁটী । च स ४अ ।

**आम्ल** पु । तिन्तिडाम् । তেঁতুল গাছ । अम्लवेतसे । मद व ६ । वै निघ २भ वा व्या प्रत्य

मध्यायसहस्रञ्च क्लतवान् स्वयम्'।" तन्निरुक्ति यथा—आयुरस्मिन् विद्यते, अनेन वा आयुर्विन्द तीत्यायुर्व्वेद इति। सु सू १ अ। आयुर्हिताहित व्याधे निदान शमन तथा। विद्यते यत्र विद्वद्भि स आयुर्व्वेद उच्यते॥ वैद्यशास्त्रे। हिताहित सुख दुःखमायुस्तस्य हिताहित मानञ्च तच्च यत्रोक्तमायु र्व्वेद स उच्यते॥ च सू अ।

**आयुर्व्वेदमयः**। त्रि। आयुर्व्वेदाभिन्ने।

**आयुर्व्वेदी**। पु। वैद्ये। रा नि व २०।

**आयुष्कर.**। त्रि परमायुर्ज्जनके।

**आयुष्मान्**। पु। तृतीययोगे। जीवकमहातृपे। रा नि व ५। त्रि। दीर्घजीविनि।

**आयुष्यम्**। त्रि' पथ्ये। आयुर्हितकरे। रा नि व २०।

**आयुस्**। क्ली। जीवितकाले। अम।

**आरः (क.)**। पु। हरिताले। रैकन इति गौडदेशख्याते मधुराम्लफलद्रुमे। रमा। क्ली। सुगन्धलोह। रा नि व १२। 'आर वासम् स्मृत ताम्र। मेघनादरसे। पित्तले। भा।

**आरकूट'**। पु क्ली। ताम्रयशदयोरुपधातौ, पित्तल। पितल। हि पीतरी। रा नि व १३।

**आरक्तम्**। क्ली। रक्तचन्दने। त्रि। ईषत् सम्यक् वा रक्तवर्णे।

**आरक्तपुष्पी**। स्त्री। बन्धुजीवकद्रुमे। वासूली।

**आरग्वध.**। पु। Cassia fistula ) अरग्वध द्रुम। बङ शोन्दाल, सोणालु, बाधालनड़ी, बानरनडी। हि आमलटास, धनबहेडा, गीध दालो। म धीरवाडावा। ते रेल्लचेटु। सुवर्णालु फल वा पत्र। तत्पर्याया—चक्रपरिव्याध (वै), जठरनुत् (शं), राजवृक्ष सम्पाक चतुरङ्गुल ग्रग्राक आरेवत व्याधिघात कृतमाल सुवर्णक (ख), मन्थान रोचन दीर्घफल उपद्रुम प्रग्रह हिमपुष्प राजतरु कृतक महाकर्णिकार ज्वरान्तक अरुज स्वर्णपुष्प स्वर्णद्रु कुष्ठसूदन कर्णी अरघक महाराजद्रुम कर्णिकार स्वर्णाङ्ग। तत्र अमपरिमात्मने फल, वहिपरिमार्जने कुष्टदो पत्र बाह्यम्। तिक्तो पित्त ज्वराचादी शीतरुक्ष। सुवर्णालुफले। च द पित्त ज्व चि। "द्राक्षारग्वधयोर्वापि।" च द वात श्ले ज्व आरग्वधादि। "आरग्वध ग्रन्थिक मुस्त तिक्ता।" आरग्वध चिरमालक। ड। सु सू ३८ अ। आरग्वधपत्रे। च सू ३ अ १म पत्रे। See अरग्वध।

**आरग्वधपञ्चकम्**। क्ली। वातकफज्वरे कषाय विशेषे। यथा—आरग्वधस्तिक्तकरोहिणी च हरी तकी पिप्पलिमूलमुस्ता। हा अवि २स्थान २अ।

**आरग्वधादि.**। पु। आरग्वधेन्द्रयव पाटलकाक तिक्ता निम्बामृता-मधुरसा-स्रुववृक्षपाठा। भूनिम्ब सैर्य्यक पटोल करञ्जयुग्म सप्तच्छदाग्नि सुषवी फल बाणघोण्टा। इत्यास्यको गण छर्द्दिकुष्ठविषमज्वरघ्न कफकण्डूतिप्रमेहदुष्टव्रणशोधन, विशपती बलास घ्न। वा सू १५अ। सु सू ३८अ। आरग्वध दि पञ्चद्रव्यकृतकषाये। वातश्लेष्मज्वरे, च द। आरग्वध ग्रन्थिकमुस्ततिक्ताहरीतकीभि क्वथित कषाय।

**आरग्वधाद्यतैलम्**। क्ली। योनिव्यापदधि कारे तैलम्। सर्षपतैल ४श गद्दभमूत्र ४श आर ग्वधमूलत्वक् १प मञ्जूचूर्ण २प हरिताल २प एकत्र पाच्यम्। च द योनिव्या चि। कुष्ठरोगे च तैलं। आरग्वधत्वक् वटत्वक कुष्ठ हरितालं मन शिला हरिद्रा दारुहरिद्रा च, एषां मिलितपादिककल्केन तैलप्रस्थ विपचेत्। च द कुष्ठ चि।

**आरट्ल.**। पु। तद्देशीयाश्वे। आवरो घोड़ा। जटा।

**आरणालम्(कम्)**। क्ली। काञ्जिके। आमानी काँजि। यत्र निस्तुषीकृते आमैर्गोधूमे संहितं तदारणालमुच्यते। प प १ख। आरणालस्तु गोधूमैरामै स्यान्निस्तुषीकृते। पक्वैरासन्धितं तत्तु सौवीरमुद्यम गुणै। भा पू सन्धानव।

**आरणि**। पु। कुलहलके आवर्त्ते। दारा।

**आरण्यगोमयः**। पु। वन्यगोमये। वनघुटे। च चि १अ।

**आरण्यपशुः**। पु। वनजपशौ। स सप्तधा,—महिष गवय शरभ ऋष्य रुरु पृषत मृगा।

**आरण्यमक्षिका**। स्त्री। दंशके। डाँशमाछि। रका।

**आरण्यमुद्गा**। स्त्री। मुद्गपर्ण्याम्। मुगानी। रा नि व ३।

**आरण्यबिम्बिका**। स्त्री। तुण्डिकायाम्। बुनो तेलाकुचा। रा नि व १३।

**आविकनवनीतम्।** क्ली। मेषीदुग्धजातनवनीते। ভেড়ীর দুধের ননি। गुणा —पाके हिम लघु सारकं योनिशूले कफे वाते अर्शसि च सदा हितम्। ऐडक नवनीत स्निग्धमल्प शीतञ्च मेधाहृत् गुरु पुष्टिस्थौल्यमन्दाग्निदीपनञ्च। रा नि व १५।

**आविकमांसम्।** क्ली। मेषमांसे। ভেড়ার মাংস। गुणा —मधुर ईषत्‌गुरु बलकरञ्च। आजमांसादपि गुणं तत्र अल्पगुण स्निग्ध गुरु सदोष अभिष्यन्दि च। वा सू ६ अ।

**आविकमूत्रम्।** क्ली। मेषीमूत्रे। ভেড়ীর মূত। गुणा —तिक्त कटुकम् उष्ण कुष्ठघ्नम् अर्श शूलोदररक्त-शोफ मेह विषघ्नञ्च। रा नि व १५। शोफकुष्ठार्शोमेहवर्चोविड्ग्रञ्च। मद व ८।

**आविकक्षीरम्।** क्ली। मेषी दुग्धे। ভেড়ীর দুধ। मे भेडिचे दुध। गुणा —स्वादु अम्लपाक स्निग्धोष्णञ्च पित्तकफोल्वणं वृंहण हिक्काश्वासा निलघ्नञ्च। वा टी चारपाणि। लोमश गुरु कफपित्तहर स्थौल्यघ्न मेदघ्न वातप्रकोपि पथ्य अनिलजी कास हितञ्च। रा नि व १५। वातव्याधिहर हिक्काश्वासपित्तकफप्रदञ्च। वा सू ५ अ। क्षीरञ्च मधुर रूक्षगुणं वातकफापहं। न शस्त रक्तपित्तानां वातिकानां हित भवेत्। अत्रि ८ अ।

**आविकी।** स्त्री। कम्बल। शाल। शल्लकी। मे निघ।

**आविग्न.।** पु। करमर्दवृक्षे। পানি আমলা। शर। भ गौ सा।

**आविट।** वृक्षविशेषे। हि आवुटा। म आपटा।

**आविध.।** पु वेधनास्त्रे। তোমর, ভ্রমর। अम

**आविरः।** पु। प्रसववेदनायाम्। मा नि मूढगर्भ।

**आविलम्।** क्ली। कावेलदंशीयफलविशेषे। ऐसो इति लोके। म थोरसेवफल। त्रि। कलुषे।

**आविलकन्द।** पु। मालाकन्दे। रा नि व १।

**आविलमत्स्य.।** पु। मत्स्यविशेषे। तल्लक्षणं यथा—शमाइ तालपञ्च स्तनाढ्य। गुणा —अतिदक्ष्य मधुर बल्य वीर्यपुष्टिप्रद गुणाढ्यश्च रा नि व १७।

**आविला।** क्ली। मत्स्यां। पार्श्वस्याम्। आनन्द। मं भांबोडो। अम।

**आविशृङ्ग।** पु। मेषशृङ्गाम्। মেড়াশিঙে।

**आविष्ट।** त्रि। भूतादिभिरधीते। ভূতে পাওয়া। হারা।

**आवी।** स्त्री। प्रसववेदनायाम्। सु नि ८ अ प्रसवल्लिङ्गे मूत्रकफप्रसेकादौ। निज र।

**आवेगी।** स्त्री। वृद्धदारकवृक्ष तायां। वीदतावक। रा नि व। र मा। मद व १।

**आवेश।** पु। अपस्माररोगे। दैव च। भूतसञ्चार रा नि व २०।

**आवेशनम्।** क्ली। शिल्पशालायाम भूतावेशे। मे नवतुक। मलेषु भतमाक्रम शिरसि सन्निवेशने। 'शस्त्रावेशनताडनै।' च द ज्व चि। आधि। धरणि।

**आवेशनमन्त्र।** पु। येन मन्त्रेण भूतादयः शरीरे विशन्ति। अ चि ३ स्था ५ अ।

**आवेशिक.।** त्रि। आगन्तुके। अम।

**आवेष्टक।** पु प्राचीरादौ। পাঁচিল, বেড়া।

**आवोधन।** क्ली। ज्ञाने। वुद्धौ।

**आशन.।** पु। असनवृक्षे। विजय-काष्ठ।

**आशय।** पु। आधारे। अभिप्राये। पनसवृक्षे। मे। अजीर्णे। Organs or receptacles कोष्ठागारे अन्नस्थाने। आशया सप्त—वात पित्त-कफ-रक्त पक्व मूत्रामाशया, स्त्रीणामतिरिक्तो गर्भाशय इत्यष्टौ। सु शा ५ अ वायु स्वस्थानस्थितः दोषानाशय करोति। आशय्याभ्यासयोगेन करीन्द्रा शयसम्भवम्। सु शा ४ अ। तत्र छरो रक्ताशय, तदध श्लेष्माशय, तदध आमाशय, तदध पक्वाशयादूर्ध्व ग्रहणी नाम या कला सैव पाचकाशय। नाभिकन्दमध्याशय मध्यभागे स्थित तस्योपरि तिल तदधो वाताशय। तदध पक्वाशय स एव मलाशय। तदधो वस्ति स एव मूत्राशय। भा पू। वाभटस्तु नाभीस्त्वय अशया अष्टधा वदन्ति, ते च गर्भाशय स्तनौ च। तत्र गर्भाशय पित्तपक्वाशयान्तरे, प्रसूतौ स्तनौ स्तन्याशयौ च।

**आशयफलम्।** क्ली। पनसे। विश्व।

**आशयाश।** पु। वायौ। अग्नौ। श टी।

**आशा।** स्त्री। तृष्णायाम्। अम।

**आशाढ।** पुं। पलाशदण्डे। अ। तृतीयमासे। द्विरूप। श टी।

**आशापुरसम्भव.** । पु । भूमिजगुग्गुलौ । आशापूरी धूप इति लोके । रा नि व १२ ।

**आशाबन्ध'** । पु । मर्कटजालके । मावडशार जाल । मे धचतुष्क ।

**आशित** । त्रि । भुक्ते । अशिते । जटा । क्ली । भोजने ।

**आशितम्भवम्** । क्ली । अन्नादौ । पु । तृप्तौ । रं ।

**आशिता** । त्रि । अतिशयभोक्तरि । हे च ।

**आशिर** । पु । अग्नौ । उणा ।

**आशी (शी)** । स्त्री । सर्पदन्ते । मे । सप विषे । श र । आशी तालुगता दंष्ट्रा तया दष्टो न जीवति । विषविद्या । हस्तिनामकौषधे । रा नि व ५ ।

**आशीत (क)** । पु । अहिलक इति ख्याते पश्वहस्तविशेषे । रत्ना ।

**आशीविष** । पु । सर्पे । मद व १२ । अम । दर्वीकरसर्पे । सु क प ४अ ।

**आशु** । पु क्ली । धान्यसामान्ये । रमा । वषा भव षष्टिकादिव्रीहिविशेषे । आउश धान । मे शब्दिक । "आशुभक्तोदकं पिष्टम ।' चद अ पि चि अश्मर्यां । गुणा —मधुर पाकेऽम्ल पित्तकर गुरुश्च । राज ।

**आशुकारी** । पु । पित्तोल्वणसन्निपातज्वरे । लक्षण—"अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च । गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते । पित्तोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत ॥" भा म १भ ।

**आशुकोपित** । पु । मध्यदेशजातवक्रककशाल्यौ । धकोड धान इति प्रसिद्ध । रा नि व १६ ।

**आशुग** । पु । वायौ । अम ।

**आशुतोक्ष्णकम्** । क्ली । ताम्रे ।

**आशुप** । पु । वंशविशेषे । বেউড বাঁশ । शब्द ।

**आशुपत्री** । स्त्री । शल्लकीलतायां । कुन्दुरुकी लता । रत्ना ।

**आशुमण्ड** । पु । आशुभक्तमण्ड । आउश-चा लेर मण्ड ।गुणा —ग्राही मधुर कफकर तपण चयदोषघ्न शुक्रवर्द्धनश्च । अत्रि १स्थान २३ अ ।

**आशुव्रीहि** । पु । व्रीहिधान्ये । रत्ना । आशु धान्ये । अटीभ ।

**आशुशुक्षणि** । पु । अग्नौ । रत्ना ।

**आश्चेकुटी** । पु । पर्वते । शमा ।

**आश्च्योतनम्** । क्ली । नेत्रसेचने । वा टी हेमा, । चक्षुपूरण । प्रयोगा । तस्य लक्षण—"अथ आश्च्यो तनं काथ्य निशायां न कथञ्चन । उन्मीलिते ऽक्षिद्व्यध्ये बिन्दुभिर्द्व्यङ्गुलाद्धितम् । काथचौद्रासव स्नेहबिन्दूना यत्तु पातन । यदङ्गुलौस्रिते नेत्रे प्रोक्तमाश्च्योतन हि तत ॥" इति । मात्रा च लेखने ८ बिन्दव, स्नेहने १० बिन्दव, रोपणे १२ बिन्दव, शीते चोष्णा ग्रीष्मे च शीता बिन्दवो भवेयु । तत्र वाते तिक्त, पित्ते स्निग्ध, कफे च तिक्तोष्ण रुच हितम् । वै निघ ।

**आश्रय** । पु । आधारे । जटा । गृहे । हे च ।

**आश्रयाश** । पु । चित्रकवृक्षे । अग्नौ । अम ।

**आश्रव** । पु । क्लेशे । मे ।

**आश्लेष** । पु । आलिङ्गने । रत्ना ।

**आश्वत्थम्** । क्ली । अश्वत्थफले । अम ।

**आश्वयुज** } पु । षष्ठमासे, आश्विने मासि । **आश्विन** } अत्र रवे कन्याराशिस्थिति । आश्विन मास । अम ।

**आश्विनेयौ** । पु । अश्विनीकुमारौ । अम ।

**आश्वीनम्** । क्ली । एकेनाश्वेन एकदिनगम्ये पथि । अम ।

**आषाढ** । पु । स्वनामख्याततृतीयमासे । यत्र रवेर्मिथुनराशिस्थिति । अम । पलाशदण्डे । मे ।

**आषाढकम्** । क्ली । प शवीजे ।

**आसङ्गा** । स्त्री । सौराष्ट्रमृत्तिकायां । रा नि व १३ ।

**आसङ्गिनी** । स्त्री । चक्रवायौ । घूर्णि वाताम । त्रिका ।

**आसङ्गिम** । पु । कर्णबन्धनाकृतिविशेषे । स चाभ्यन्तरदीर्घैकपालि । सु सू १६अ ।

**आसत्ति** । स्त्री । सङ्गमे । मे ।

**आसन** । पु । जीरकवृक्षे । मे नतिक । क्ली । गजस्कन्धे । हला । पीठिकायां । পিঁড়ি ।

**आसनपर्णी** । स्त्री । अपराजितायां । भै गौकर्णविरी । व निघ ।

**आसन्द** । पु । ग्रन्भते । मे दमिक ।

पू १म पुष्पव । मलमूत्रस्तम्भनरक्तजनन । राज । कटुकत्व रक्तजनुक्षवर विसदृद्धि जनुजनक मूर्च्छा रायनश्च । रा नि व १० । माला इमा ।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्षे । रा नि व १० ।

**ओड्रपर्य्याय** । पु । सूर्य्यकान्तपुष्पवृक्षे रुनाम ख्याते । जवा । अम ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुम । वङ्गजवा फुल । प क । See ओड्र ।

**ओड्रपुष्पा** । स्त्री । जवावृक्षे । वै निघ ।

**ओढापलङ्कषा** । स्त्री । गौरचसुगन्धाम । वै निघ ।

**ओतु** । पु स्त्री । विडाले । विड़ाल । अम । वनविड़ाले । वै निघ ।

**ओद** । पु । अन्ने ।

**ओदन** । पु । अदने सिकथे । स च मण्डादिभ्यो गुरु । वा टी हेमा । क्ली । भक्ते । प सु । अन्ने । रा नि व २० । पिटुलि । सा कौ ज्य वलि ।

**ओदनपाकी** । प । नीलझिण्ट्याम् । च चि २म चन्द तैल ।

**ओदना (निका) (नी)** । स्त्री । महासमङ्गायाम् । वेड़ेला विशेष । वाट्यालके । वेलेडा । रा नि व ४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां । रा नि व ४ । वाट्यालके । हि खिरिहिटी । मद व १ ।

**ओल (ल)** । पु । स्वनामख्यातकन्दशाके । ओल गाछ । र मा, भा पू १भ । गुणा —अग्निकर कफघ्न रुचिकर लघु अर्शसि पथ्य । ग्राम्यकन्दस्तु दीपन इति । राज । See सूरण । वि । आर्द्रे । मे लन्ति ।

**ओल(ल)कन्द** । पु । सूरणे । ओल । र मा । वनौले । बुनो ओल । पानीयभक्तवन्ध्याम् ।

**ओष** । पु । दाहे । प्रोष प्लोष इति पर्य्यायशब्द । अम भरत ।

**ओषण (णि)** । पु । कटुकरसे । ज्वाल । हे च । (णी) पुराकशाके । पुरुकिशाक । गुण —कफवायुनाशित्वम् । राज । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे ।

**ओषधि** । स्त्री । फलपाकान्तवृक्षादौ, कदली धान्यादिके । ह च । द्रव्येषु । तानि पुनरौषधय । ताश्च द्विविधा स्थावरा जङ्गमाश्च । तासां स्थावरा चतुर्धा यथा—वनस्पति, वृक्ष, वीरुत्, ओषधि श्चेति । तासु अपुष्पफलवान् वनस्पति, पुष्पफलवान् वृक्ष, प्रतानवती लता, फलपाकनिष्ठा च ओषधि । जङ्गमा अपि चतुर्धा जरायुजाण्डजस्वेदजोद्भिद्भेदात् । तत्र पशुमनुष्यव्यालादयो जरायुजा । खगसर्पसरीसृपप्रभृतयोऽण्डजा । कृमिकीट प्रभृतय स्वेदजा । मण्डूकादय उद्भिज्जा इति सु सू १अ ।

**ओषधिगण** । पु । रासायनिकौषधिगणे । ता सोमसमवीर्य्या महौषधय इति ख्याता । तासाञ्च सोमवत्क्रियाश्रो स्तुतय शास्त्रे कथिता । ताश्चाष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणु अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति । एतासामुदरिण्यादिषु लभ्या —"आसाञ्च या क्षीरवत्यस्तासां क्षीर कुडवमितं सकृदेव उपभुञ्जीत । यास्तु अक्षीरा मूलवत्य तासां प्रदेशिनी प्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे । श्वेतकापोती समूलपत्रा भक्षयितव्या । गोनस्यजगरी कृष्णकापोतीनां समवमुष्टि खण्डश कल्पयित्वा क्षीरेण विपाच्य परिस्राव्यतमभिहुतञ्च सकृदेवोपभुञ्जीत । चक्रकाया पय सकृदेव । ब्रह्मसुवर्चला सप्तरात्रमुपभोक्तव्या । भक्ष्यकल्पेन शेषाणां पञ्च पलानि क्षीराढकक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहारविहारौ व्याख्यातौ केवलन्तु नवनीतमभ्यङ्गार्थे शेष सोमवदानिगमादिति । अथासां पृथग्विज्ञानमुच्यते —मण्डलै कपिलैश्चित्रै सर्पाभा पञ्चपर्णिनी । पञ्चारत्निप्रमाणा या विज्ञेयाजगरी बुधै ॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता । सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते ॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां । द्व्यरत्निमात्रां जानीयाद् गोनसीं गोनसाकृतिं ॥ सक्षीरां रोमशां मृद्वीं रसे नेक्षुसमोपमां । एवं रूपरसाञ्चापि कृष्णकापोतिमादिशेत् ॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा । एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे । जरामृत्यु

—ऊर्णायु आविक रल्लक । ई । मेषे । इ च । क्लो । मेषमांसे । भाडार मा॑स । म मडी करमांस । गुणा—मधुरं शीतल गुरु विष्टम्भि बृंहणञ्च । मेषसमूहे । ऊर्णावस्त्रे । रा नि व १०।

**औरिणम्** । क्ली । कृत्तिकालवण । यवक्षारे । सोरा । वै निघ ।

**औरुवुकम्** । क्ली । एरण्डतैल । च द ।

**और्व्वम्** । क्ली । कृत्तिकालवण । यवक्षार । पांशुलवणे । रा नि व ६ ।

**औलम्** । क्ली । श्वेतशूरणे । वै निघ ।

**औलूकम्** । क्ली । उलूकसमूहे । जटा ।

**औशीरम्** । क्ली, प । बालके । वाला । चामर दण्डे । आसने । त्रि । उशीरजे । मे रविक ।

**औषणम्** । क्ली । कटुरसे ।

**औषधम्** । क्ली । गण्डाम् । रा मा र औषध मारणगणे । रोगघ्नद्रव्ये । ऊषध । तत्पर्याय, —भिषज भेषज्य अगद जायु (अ) जैव आयु योग गदाराति अमृत आयुद्रव्य (वै) । 'वैद्यो व्याधि हरेद्येन तद्द्रव्य प्रोक्तमौषधम्" । अपि । औषध पञ्चविधम् । यथा—रसचूर्णकषायावलेह कल्का । "तत पञ्चविध प्रोक्त स्वसयोगविभेदत । रसचूर्णे कषायश्चावलेह कल्क इत्यपि ॥' तच्च पुन द्विविध शोधनशमनलक्षण । तयो शोधनरूप वस्तिविरेकवमनम् । कुपितदोषान् वहिर्निःसार्य्य रोगोपशमन करोति । शमनरूप तैलघृतमधु प्र भृत्यानस्थितानामेव साम्यहेतु । वा टी अरुण । तत्र वातस्य वस्ति (गुदप्रणिधयस्नेहादि) । पित्तस्य विरेक (मुखपीत गुदमार्गेणाव स्थितस्य नि सा रणम्) । कफस्य वमन (मुखेन पीत तस्यैव दोषस्य निःसारणम्) । शमन—वातस्य तैल, पित्तस्य घृत, कफस्य च मधु । विन्ध्यशैलजानि औषधानि क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि, वल्मीकश्मशानादिजानि न ग्राह्याणि । औषधाह रणमन्त्रोऽप्यस्ति स्थानाभावान्नोक्त । औषधद्रव्याद ग्रहण यथा—खदिरादीना सार, निम्बादीना त्वक्, दाडिमादीनां फल, पटोलादेश्च छद ग्राह्य । सार स्यात् खदिरादीनामित्यादि । शार्ङ्गधरमते न्यग्रोधाद त्वक् बीजकाद सार तालीशादे पत्र त्रिफलादेश्च फल ग्राह्यमिति । काश्यपमते मूलानां वल्कल क्षुद्रमूलानां सर्व्वशो ग्राह्यमिति । अतिस्थूलजटाधास्त्वच तथा सूक्ष्ममूलानि सर्व्वशो ग्राह्याणि । यत्र द्रव्याङ्गावयवो यादृशो निर्दिष्ट, तत्र तादृश एव ग्राह्य । यथामृतादिकषाये अमृतादीनां पत्रमेव ग्राह्यम् । अङ्गसामान्योक्तौ मूलवल्कलानाम् 'अङ्गेऽप्ययुक्ते विहितन्तु मूल" मिति वचनात् । विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि सर्व्वमौषधं सर्व्वकार्य्यार्थं, विरेकवमनार्थं वसन्ते । शिशिरे मूल, ग्रीष्मे पत्र, वर्षावसन्तयो त्वक्कन्दौ, शरदि क्षीरं यथर्त्तुपुष्प फलञ्च हेमन्ते सारञ्च ग्राह्यम् । सामान्योक्तौ—मल्पात्र, त्वपत्रे नीलो त्पल, शर्करायां शीमयरस, चन्दने रक्तचन्दनं, सर्षपे सिद्धार्थं, लवणे सैन्धव मूत्रे गोमूत्र, घृत दुग्धेषु गव्यमेव, चतुष्पदे स्त्री, पक्षिणि पुमान्, वयस्थलाङ्गलानां चर्म्मादि हित्वा ग्राह्यम् । मांसे कथित्र श्वाज्ञ क्लीवञ्च गृह्णीयात् । अनुक्ते ग्रहण यथा—कालेऽनुक्ते प्रभात, अङ्गेऽनुक्ते जटा, भागे ऽनुक्ते साम्य, द्रवेऽनुक्ते जल । प म १ख । चूर्ण लेहासवकार्य्ये तु श्वेतचन्दनं क्वाथप्रपो रक्तचन्दनं ग्राह्यम् । भचर्णौषधविधाने—अजमोदीको यमानी, काथप्रपे तु वचा ग्राह्या । भा ।

**औषधकाल.** । पु । औषधसेवनस्य समये । स च दशविध —"निर्भक्त प्राग्भक्त मधोभक्त मध्ये भक्तमन्तराभक्त सभक्त सामुद्ग मुहुर्मुहुर्ग्रास ग्रासा न्तरश्चेति । तत्र निर्भक्त केवलमौषधमुपयुज्यते । प्राग्भक्त तत्तु प्राग्भक्तस्योपयुज्यते । अधोभक्त यद्भक्तान्ते पायते । मध्येभक्त यन्मध्ये भक्तस्य पीयते । अन्तराभक्त नाम यदन्तरा पीयते पूर्व्वा परयोर्भक्तयो । सभक्त औषधेषु यत्साध्यते भक्तम् । सामुद्ग नाम यद्भक्तस्यादावन्ते च पीयते । मुहुर्मुहु र्ग्रासे सभक्तमभक्त वा यदौषध मुहुर्मुहुरुपयुज्यते । ग्रासान्तरं यत्पिण्डव्यामिश्रम् ।" तत्र निर्भक्तगुणा —"वीर्य्याधिक भवति भेषजमन्नहीन" मित्यादि । प्राग्भक्तस्य यथा—'शीघ्र विपाकमुपयाति बलं न ।हिंस्यादित्यादि ।" अधोभक्तस्य यथा—"पीत यदन्नमुपभुज्य तदूर्द्ध्वकाये हन्याद्गदान् बहुविधांश्च ददाति ।' मध्येभक्तस्य यथा—"मध्य तु पीतमुपहन्त्यविसारि भावाद् ये मध्यदेहमभिभूय भवन्ति रोगा ।" अन्तराभक्तस्य यथा—"हृद्य मनोबलकरन्त्वग्निदीपनीयम् ।' सभक्तस्य यथा— 'पथ्य सभक्तमबलायवलीयाहि नित्यमित्यादि ।" सु उ ६४ अ ।

**औषधालय.** । पु । औषधगृह । ऊषधस्य घर ।

कट्फल काल मरिचे। गुणा—"कक्कोल कटुकं हृद्य सुगन्धि कफवातजित्।" राज चन्दनिवे। कटुतिक्तोष्ण मुखजाड्यहर दीपनं पाचनं रुच्यञ्च। रा नि व १२। "कक्कोल कोलक प्रोक्त तथा कोपफल स्मृतं। कक्कोल लघु तीक्ष्णोष्ण तिक्त हृद्य रुचिप्रदं। आस्यदौर्गन्ध्यहृद्रोगकफवातामयापहृत्।" भा म। च द यक्ष्म चि लवङ्गादौ, मात्रा १ रति। गन्धम्रा। च द वा व्या एकादशशतिकप्रसारणीतैले।

कक्खट। त्रि। कठिने। पु। खटिकायाम्। खडीमाटी, फुलखडि। अम।

कक्खटपत्रक। पु। (Corchorus olitorius) वृक्षविशेष। পাট গাছ, কোষ্টা। तत्पर्याय,—पट्ट राजशण ब्राह्मि चिमि। शब्दमा। तच्छाकगुणा—मधुरं दुर्जरं गुरुपाकि च। राज श्रा व।

कक्खटी। स्त्री। खटिकायाम्। खडि। चिका शैलज।

कगिस्थ। पु। कपित्थके। श टी।

कङ्कः। पु। महाराजचूते। रा नि व ११। चन्दने। पक्षिविशेषे। কাঁক পাখি, হাড়গেলা। म कङ्किक। हारा। तत्पर्याय,—लौहपृष्ठ (अ), सन्दंशवदन खर रणालङ्करण क्रूर आमिषप्रिय (रा) अरिष्ट कालपृष्ठ किमारु लोहपृष्ठक (त्रि) दीर्घपाद दार्घपात् (शब्दर) कमलच्छद कीलपुच्छ (ह) महाराजचूत (रा)। गुणा—वृष्यो वीर्यविवर्द्धन कफहर कङ्कस्तथा भासक। अत्रि २२ अ।

कङ्कट (क)। पु। कवचे। श्रनिव। हारा।

कङ्कटेरी। स्त्री। हरिद्रायाम्। वै निघ।

कङ्कणम्। क्ली। हस्तभूषणे। तत्पर्याय,—करभूषण (अ), कौतुक (शब्दर), हस्तसूत्र मण्डन शेखर (त्रि)। वै निघ।

कङ्कत। पु। वृक्षविशेष। শেয়াকুল, বৈঁচী। व निघ २भ अतिसार पथ्ये। क्ली। केशमार्ज्जने। কাঁকুই। हला। तत्पर्याय,—प्रसाधनी (अ), कङ्कती कङ्कत प्रसाधन (अ टी) केशमार्जक (ज) फणि फणिका (शब्दर)। गुणा—धूलीजन्तुमलकण्डूशिरोरोगघ्नम्। "कङ्कती कान्तिजननी कण्डूघ्नी मूर्द्धरोगजित्। केशप्रसादनी केश्या रजोजन्यमलापहा॥" राज।

कङ्कति(ती)का। स्त्री। केशप्रसाधनार्थद्रव्ये। চিরুণি। কাঁকুই। अम। अतिबलायाम्। नागबलायां। গোরক্ষচাকুলিয়া। भा पू १भ गु व।

कङ्कत्रोट (टि)। पु। स्वनामख्यातमत्स्ये। কাঁকিলা মাছ। त्रिका। हारा। जटा। खलिशमत्स्ये। খলিশা মাছ। श र। तत्पर्याय, जलव्याध (चि) जलसूचि। (ज)

कङ्कदम्। क्ली। सुवर्णे। वै निघ।

कङ्कपुरीषम्। क्ली। कङ्कविष्ठायां। इद व्रण दारणम्। सु सू ३६ अ।

कङ्कभोजन। पु। अजुनवृक्षे।

कङ्कमुख। पु, क्ली। सन्दंशे। শাঁড়াশী। हे च। 'शल्य प्रगृह्योद्धरते च यस्मात् यन्त्रेष्वतः कङ्कमुखं प्रधानम्।' सु सू ७अ।

कङ्करम्। क्ली। कञ्जरे। তক্রবিশেষ। हे च। त्रि। कुत्सिते।

कङ्कराल। पु। पिस्ता इति प्रसिद्धे वृक्षे। পেস্তা গাছ। वै निघ।

कङ्कोल। पु। (Alangium hexapetalum) निकोचकवृक्षे। আঁকোড় গাছ। अ च। लताविशेषे। কাঁকরোল।

कङ्कलोद्यम्। क्ली। चिञ्चोटकमूले। চেঁচ্কো, চিক্কোড়মূল। राज।

कङ्कशत्रु। पु। पृश्निपर्ण्याम्। श च।

कङ्कशाय। पु। कुक्कुरे। श मा।

कङ्का। स्त्री। गोशीर्षचन्दने, पद्मगन्धे। "गोशीर्षचन्दन लघ्वताम्रमुत्पलगन्धिकम्। कङ्का श मा।

कङ्काल। पु। शरीरास्थिनि। समुदितशरीरास्थिसङ्घात तथांसरहिते। अ टी भ। तत्पर्याय—करङ्क अस्थिपञ्जर। (त्रि)।

कङ्कावीजम्। क्ली। गोशीर्षचन्दनबीजे। योगरत्न उ ख केशरपाके।

कङ्किरातम्। क्ली। कुरुवटके। রক্তঝাঁটী। हला।

कङ्कु। पु। कङ्गुतृण। त्रिरूपकोष।

**कङ्कुष्ठ(क)म्** । क्ली । हिमवत्पादशिखरजे हरितालवत्पाषाणविशेषे । चपिम इति । र मा स । पार्व्वतीयमृत्तिकाविशेषे । तत्पर्य्याय,— कालकुष्ठ विरङ्ग रङ्गदायक रेचक पुलक शोधिक कालपालक । अस्य गुणा —"कङ्कुष्ठस्य द्विधा प्रोक्तो तारहेमाभकस्तथा । कटूष्ण कफवातघ्न रेचक व्रणशूलहृत् ॥" रा नि व १३ । तथा हिम वत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैक रक्तकाल स्यात्तदन्यदण्डक स्मृतम् ॥ पीतप्रभ गुरु स्निग्ध श्रेष्ठ कङ्कुष्ठमादिशेत । श्याम पीत लघु त्यक्तसत्त्व नेष्ट तथाण्डक ।" शोधनं शङ्खशब्दे द्रष्टव्यम् । भा पू १भ ।

**कङ्केरु** । पु । काकविशेषे । वकपक्षिणि त्रिका ।

**कङ्केल. (लिः)(लि )** । पु । अशोके । हला । रा नि व १० । त्रिका ।

**कङ्केशः** । पु । वास्तूकशाके । श मा ।

**कङ्केलि** । पु । अशोकवृक्षे । हे च ।

**कङ्कोल(क)म्** । क्ली । स्वनामख्यातसुगन्धपण्य द्रव्ये । शीतलचिनीति लोके । भा । गुणा — कटुतिक्तोष्ण मुखजाड्यहर दीपन पाचन रुच्य कफवातघ्न । रा नि व १२ । लघु तीक्ष्ण हृद्य हृद्रोगान्ध्यताहरञ्च । भा पू १भ । "कङ्कोलकफल युक्ता" । अभावे जातीपुष्प, तदभावे लवङ्गम । भा म ४भ कर्णरोगचि सामान्याञ्जने । "गुण्डी कङ्कोलकास्य ।"

**कङ्कोलकी (लिका)** । स्त्री । कङ्कोलवृक्ष । कङ्कवी कङ्कोलीति पश्चिमदेशे । गुणा — तिक्त कङ्कोलकी ग्राहिणुणा रुचिकरी मता । मलाव ष्टम्भकरणी पित्तला चाग्निदीपनी । कफ प्रमेह कुष्ठञ्च जन्तूंश्चैव विनाशयेत । वै निघ ।

**कङ्गः (क.)** । पु । कीर्त्ति । हे च ।

**कङ्गु** । पु, स्त्री । (Panicum Italicum) प्रियङ्गुपरनामधेये तृणधान्यविशेषे । काङ्गनि धान वा दाना । इ फॅकणयुचेड्, कौड्रतु । प सु । तत्पर्य्याय,—प्रियङ्गु (श) कङ्गु प्रियङ्गु (श टी ) । श्वेतपीतकृष्णरक्तभेदाच्चतुर्धा । भग्नसन्धानी द्रवणी गुरुश्च । श टी म धान्यव । धातुशोधनी पित्तघ्नी मधुरा रूक्षा वातवर्द्धकपुष्टिकरी गुरु भग्नसन्धानकरी च । राज । मधुर रुच्य कषाय स्वादु शीतल वातकृत्पित्तदाहघ्न रुच्य भग्नसन्धान कृत् । रा नि व १६ । "कङ्गुधान्य धातुवृद्धि करं वातकर गुरु । अस्थिसन्धानकृद्गर्भस्थानाय हितावहम् । कफघ्नश्च गुणाधिका पीत सुनिभि रीरितम् ॥" वै निघ । "स्त्रियां कङ्गु प्रियङ्गु द्व कृष्णा रक्ता सिता तथा । पीता चतुर्विधा कङ्गुस्तासां पीता वरा स्मृता । कङ्गुस्तु भग्नसन्धान वातकृद्बृंहणी गुरु । रूक्षा श्लेष्महरातीव वाजीनां गुणकृद्भृशम् ॥" भा ।

**कङ्गुका** । स्त्री । कङ्गौ । प्रियङ्गौ । रत्ना ।

**कङ्गुणिका (णी)** । स्त्री । महाज्योतिष्मती लतायां । रा नि व ३ । कङ्गुणीनामतृणधान्ये । काङ्गनी धान । रा नि व १६ ।

**कङ्गुणीपत्र (त्रा)** । पु, स्त्री । पण्यन्धानाम तृणविशेष । रा नि व ८ ।

**कङ्गुनी** । स्त्री । प्रियङ्गौ । कङ्गुणीधान्ये । रा नि व १६ ।

**कङ्गुनीका** । स्त्री । कङ्गुनीधान्ये । चक्र ।

**कङ्गुल** । पु । हस्ते । श च ।

**कङ्गूः** । स्त्री । कङ्गुधान्ये । श टी ।

**कच** । पु । बालके । वाला । भा म १भ तन्द्रि क ज्व चि । 'मरिचकचपचम्पचावचारुक ।" रा नि व १८ । केशे । अम । शुष्कव्रणे । मे चद्रिक । वस्त्र । जटा ।

**कचङ्गल** । पु । समुद्र । त्रिका ।

**कचटम्** । क्ली । कचटशाके । भा पु १भ । तृणे । पर्ण । उणा ।

**कचदम्बिका** । स्त्री । अलाबुम् । लाउ ।

**कचद्रावी** । पु । अम्लवेतसे । प सु ।

**कचपत्त** । पु । केशसमूह । अम ।

**कचमाल** । पु । धूमे । हारा ।

**कचरिपुफला** । स्त्री । महाशमीवृक्षे । वड शाँइ गाछ । रा नि व ८ ।

**कचहस्त** । पु । केशसमूहे । अम ।

**कचा** । स्त्री । हस्तिन्याम् । मे चद्रिक ।

**कचाकु** । पु । विलेशये । सर्पे । मे कमिक ।

**कचाटुर** । पु । पक्षिविशेषे । डाहुक । दात्यूह पक्षिणि । त्रिका ।

**कचामोदम्** । क्ली । ह्रीवेरे । वाला । रा नि व १० ।

**कची** । स्त्री । कृष्णविबीजे । रस र बाल चि ।

**कचु** । स्त्री । An esculent root, (Arum colocasia and other kinds) स्वनामख्यातवृक्षे । कचु गाछ ।

**कचूरकम्** । क्ली । कचूरे । दचू । व निघ २भ भग चि पिपीलिकातले ।

**कचेरुक** । पु । कसेरौ । केशुर । र मा ।

**कचोर** । पु । कर्चूरे । व निघ २भ भग चि भल्लातक हरीतक्या ।

**कचोरा** । स्त्री । शालिधान्यविशेषे । मा पित्तघ्नी । भति १५ भ ।

**कच्चटम्** । क्ली । जलपिप्पल्याम् । वाँचडा ।

**कच्चरम्** । क्ली । तक्रे । मे रतिक । वि । मलिने ।

**कच्चूर** । पु । कचुनामककन्दशाके । कचुगाछ ।

**कच्चोरम्** । क्ली । शट्याम् । प मु ।

**कच्चोरक** । पु । गन्धशट्याम् । चक्र ।

**कच्छ (क)** । पु । जलप्रायदेशे । काछाड़ । See अनूप । तुन्नकवृक्षे । तुन् गाछ । म छदिक । नन्दीवृक्षे । परिधानाञ्चले । काछा । ह च । जलप्रान्ते । भम ।

**कच्छकाण्डन** । पु । अश्वत्थभेदे । गया अश्वथ ।

**कच्छ(च्छा,च्छो)टिका** । स्त्री । कच्छे । काछा, कोचा । श र ।

**कच्छप** । पु । स्वनामख्यातजन्तुविशेष । काछिम कच्छि, काठा, वानकोल । म कामव । तत्पर्य्याय,—कूर्म्म कमठ (अ क्रोडपाद चतुर्गति दौलेय (ह), गूढाङ्ग धरणीधर कच्छेष्ट पल्वलावास कठिनपृष्ठक (रा) माषाद पञ्चगुप्त क्रोडाङ्ग (शब्दर), जलबिल्व (च), उद्दट (मे) क्रोडाङ्घि पञ्चाङ्गगुप्त (वि) पञ्चनख गुह्य पीवर जलगुल्म (ज) । एतन्मांसगुणा —वातहर वृष्य चक्षुष्य बल्य मेधास्मृतिकर पथ्य शोषघ्न । तदण्ड पित्तहर । तत्पाद कफघ्न । तदण्ड स्वादु वाजीकरश्च । रा नि व १९ । "कच्छपो मधुर स्वादु शुक्रवृद्धिकारी मत । वातघ्न पवनश्रमघ्नो हृद्यो कफवर्धनश्च । भति २२भ । नन्दीवृक्षे । तुन् गाछ । रा नि व १२ । मदिरायन्त्रे । श च । श्लेष्मजन्यतालुरोगविशेषे । तत्र कूर्म्मवदुन्नतोऽवेदन नातिशोथोऽतिशीघ्र जायते । "कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रोगो ज्ञेय कच्छप श्लेष्मणा स्यात् ।' भा म ख ४भ मुखरो चि ।

**कच्छपयन्त्रम्** । क्ली । औषधपाकयन्त्रविशेषे । लक्षण—'जलपूर्णपात्रमध्ये दत्त्वा खर्परन्तु विस्तीर्णं । तदुपरि रसविह्नि स्थाप्य सूतो मद कुण्डाम् ॥ लघुलौहकीटरिकया कृतपटुमल्लमिलिप्रमाच्छाय । देया तदुपरि सिकता चैकाङ्गुलिपरिमाणापि ॥ तत् खर्पर पूर्ण चाङ्गारकवनोपलैनोपचितम् ॥' अपि । "जलपूर्णपात्रमध्ये कृत्वा पुटकर्पर सुविस्तीर्णं । तदुपरि विडमध्यगत सूत स्थाप्य कोष्ठा ॥ लघुलौहकटोरिकया कृतपटुमल्लभिमाच्छाद्य । पूर्णान्तरपुटखर्परमध्ये अङ्गारै खदिरकाष्ठभव ॥ स्वदनतो मर्द्दनत कच्छपयन्त्रस्थितो रसो जयति ।' इदमेव कच्छपयन्त्र आकण्ठभूमिवेष्टित जलपूर्णनिकामुखस्थितशरावे दत्त्वा रस सर्न्येन प्रकीर्णवदनेन सम्यमाच्छाद्य उपरि सिकताभिरङ्गुलिमानेनाच्छाद्य भूमिभागे कुक्कुटपुटादध कच्छपयन्त्रोऽयमीरिता ।

**कच्छपि** । पु । क्षुद्ररोगे । तालुरोगे ।

**कच्छपिका** । स्त्री । विषमुष्टी । महानिम्बे । रा नि व ४ । कृष्णनिर्गुण्ड्याम् । वै निघ । वातश्लेष्मजन्य प्रमेहपिटकानाम क्षुद्ररोगविशेषे । यथाय पञ्च वा षड् वा दारुणा कच्छपोन्नता । कफानिलाभ्यां पिडका ज्ञेया कच्छपिका बुधै ॥" इति । निदा ।

**कच्छपी** । स्त्री । क्षुद्ररोगे । मे पविक । कच्छपिकायाम् । मादि काछिम् । भम ।

**कच्छपोलि (का)** । स्त्री । जलवेतसे । वै निघ ।

**कच्छरा** । स्त्री । दुरालभायाम् । हे ।

**कच्छरुहा** । स्त्री । दूर्व्वायाम् । जटा । नागरमुस्तायां । "नागरोत्था कच्छरुहा ।" रा नि व १३ ।

**कच्छलवारक** । पु । कासमर्दे ।

**कच्छा** । स्त्री । भद्रमुस्तायाम् श्वेतदूर्व्वायाम् । चीरि (डि) कायां । झिँझि पोका । वाराहीकन्दे । मे छदिक ।

**कच्छाटिका** । स्त्री । परिधानाञ्चले । काछा ।

**कच्छान्तरुहा** । स्त्री । श्वेतदूर्व्वायाम् । श्वेत दूर्व्वा । रा नि व ८ ।

**कच्छारुहा** । स्त्री । स्वर्णकेतक्याम् । वै निघ ।

**कच्छालङ्कारकः** । पुं । कामठवृक्षे ।

**कच्छु(च्छू)** । स्त्री । खर्ज्जूरोगे । चुलकोना । तल्लक्षण—"सूक्ष्मा बह्वः पिड़का स्रावबत्य पामेत्युक्ता कण्डुमत्य सदाहाः । सैव स्फोटैस्तीव्र दाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च ।" मा नि ।

**कच्छुकान्तनः** । पुं । अङ्गिरसाय । गया अश्वत्थे । के ।

**कच्छु(च्छू)घ्ना (घ्नी)** । स्त्री । पटोल । हवुषा फलवृक्षे । रा नि व ४ ।

**कच्छु(च्छू)मती** । स्त्री । शूकशिम्ब्याम् । श च ।

**कच्छु(च्छू)रः** । त्रि । कच्छूरोगयुक्ते । खोस रोगी । पुंश्चले । मे रत्रिक ।

**कच्छु(च्छू)रा** । स्त्री । कपिकच्छ्वाम् । आलकुशी । रा नि व ३ । रक्तदुरालभायां । दुरालभा विशेष । कर्पूरहरिद्रायाम् । आम्रहरिद्रायाम् । महाश्रावणिकायाम् ।

**कच्छुराल.** । पु । शालुकवृक्षे ।

**कच्छुरो** । स्त्री । धातक्याम् । धाईफुल ।

**कच्छेष्टः** । पु । कच्छपे । रा नि व १९ । स्त्री । भद्रमुस्तायाम् ।

**कच्छाटिका** । स्त्री । परिधानाञ्चल ।

**कच्छोत्था** । स्त्री । मुस्तायां । रा नि व ६ ।

**कच्छोरम्** । क्ली । शट्याम् । र मा ।

**कचूट** । क्ली । जलपिप्पल्याम् । वै ।

**कचूर** । क्ली । ताम्रे । मे ।

**कचूी** । स्त्री । स्वनामख्यात कन्दविशेषे । कचु ।

**कजम्** । क्ली । कमले । अमृते । मे जटिव ।

**कज्जलम्** । क्ली । नीलकमले । अञ्जने । काजल । मेघे च । त्रिका सि यो कामला पुं । चि । कज्जल्याम् । अमि ।

**कज** । क्ली । पद्मे । रा ।

**कज्जलं** । क्ली । अञ्जने । काजल । पु । मेघे । शब्दमा ।

**कज्जलध्वजः** । पु । दीपाधारे । पिलसुज । तत्पर्याय,—कज्जलरोचक कोहलीहच दीपवृक्ष शिखातरु दीपध्वज (ज) ज्योतिश्चाहृच (त्रि)।

**कज्जला (लिः) (लिका) (ली)** । स्त्री । सीसविशेष । Sulphuret of mercury (Aethiop's mineral) मर्द्दितरसगन्धके कज्जलीति लोके । श र । "एषा कज्जलिका ख्याता ह हृष्यो वीर्य्यवर्द्धनी । नानानुपानयोगेन सर्व्वव्याधि विनाशिनी ॥ वै निघ १भ । "जपापत्ररसेनाथ वहमानरसेन च । रस सशोधयेत्तेन ततस्तं शोधयेद्दलि ॥ भृङ्गराजरसे पिष्टा शोधयेदर्करश्मिभि । सप्तधा वा त्रिधा वापि पश्चात्तूर्ण्णं कारयेत । चूर्णयित्वा सम तेन रसेन मध्ये मर्द्दयेत् । तदसूत यदा चूर्णं भवेत्कज्जलसन्निभम् ॥ भा म १भ । 'गन्धसत गन्धकश्च सम समर्द्दयेदिम । निश्चन्द्र कज्जलाभूत तती योगेषु योजयेत् ॥ पृथग्योगेषु यन्तोक्ता समौ पारदगन्धकौ । तत्र भागद्वय योज्य कज्जलस्येति निश्चय ॥ यावान् स्यादधिक सूतात तावन्त गन्धक पुन । त्रिदोषेगे विधानज्ञौ नात्र कार्य्या विचारणा ॥ यत्र सूतोऽधिको योगे गन्ध पापाणतो भवेत् । तत्र तन्मानत कुर्य्यादादावेव हि कज्जल ॥" अमि ।

**कञ्चटः (ड.)** । पु क्ली । गजपिप्पल्याम् । वै निघ । जलतण्डुलीयापरनाम स्वनामख्यात शाके । काँचड़ा शाक । र मा । हि चवडाइभेद । कालोटियाशाके । च द, सि यो कञ्चटादि । चौराइशाकभेदे । भा म १भ अ मा चि । तत्पर्याय,—जलभू लाङ्गली लाङ्गली (श), शारदी तोयपिप्पली शकुलादनी (र), जल तण्डुलीय । गुणा—धारकत्व हिमत्व पित्तरक्तनाशित्व लघुत्वञ्च । राज । वातहरत्व तिक्तत्वञ्च । भा पु १भ शा व । कञ्चडी हि कञ्चटभेदे ।

**कञ्चटपत्रकम्** । क्ली । कञ्चटच्छदे । काँचड़ा पाता । र र यहणीकपाटरसे ।

**कञ्चटपल्लव** । पु । कञ्चटे । सि यो यह वि जम्ब्वादि ।

**कञ्चटादि** । पु । अतिसारे कषायविशेषे ।

**कटितटम्**। क्ली। नितम्बे।

**कटित्रम्**। क्ली। रसनायाम। म रत्निक। कटीवस्त्रे। क्षुद्रघण्टिकायां। घुँघुर। क।

**कटिदेश**। पु। कट्याम। कँकाल।

**कटि(टी)प्रोथ**। पु। स्फिचि। रा नि व १८। कटिस्थमांसपिण्डे। पाछाव पेलो। अम।

**कटिरोहक**। पु। रिपन्नाद्यागारोहके। श मा।

**कटिल्लम्**। क्ली। कारवेल्लफले। भा पू १भ।

**कटिल्लक**। पु। कारवेल्लके। करला। प मु। रक्तपुनर्नवायाम। मे कचतुष्क।

**कटिशीर्षक**। पु। कटिदेश। कँकाल। हला।

**कटिशूल**। पु। कटिदेशस्थे शूलरोगे। कुमरी इति भाषा।

**कटिशृङ्खला**। स्त्री। कटिकिङ्किन्याम। कोमरेर घुँघुर। हाग।

**कटिसूत्रम्**। क्ली। कटिभूषणविशेषे।

**कटि (टिन्)**। पु। हस्तिनि। खदिरवृक्षे। रा नि व ८। स्त्री। शीम्बिफलके। कँकाल। अम। पिप्पल्याम्। म टदिक। स्फिक्प्रदेशे। रत्ना।

**कटीकतरुणम्**। क्ली। नितम्बगत सन्धिमर्मणि। तत्स्थान पृष्ठदण्डोभयत जघनपार्श्वबहिर्भाग ईषन्नीचे। पृष्ठवंशोभयत प्रतिश्रोणीकाण्ड अस्थिनी। अम। म शा ६भ।

**कटीकपालम्**। क्ली। कटीफलके। विज र।

**कटीग्रह**। पु। कटीगतवातरोग। कोमरेर बात। लक्षण—"वायु कट्याश्रित स्तम्भ सामो वा जनयेद्रुजम्। कटिग्रह स एवोक्त पङ्गु सक्थ्योर्योर्वधात॥" भा म १भ।

**कटीर**। पु क्ली। जघनस्थले। जटा। कटि देशे। कांकाल। हे च। कटिपार्श्वे। अ टी।

**कटीरक**। नितम्बस्थल। रा नि व १८।

**कटु**। स्त्री। लतायाम। राजिकायाम्। म टदिक। कटुक्याम्। कट्की। रा नि व ६। कटुवल्ल्या। लताविशेष। रा नि व ३। प्रियङ्गुवृक्षे। हे च। कटुपटोले। तिक्तपर्णता। वै निघ भ जन्मा चि। चम्पकवृक्षे। अर्कवृक्षे। श च। जलजतृणविशेषे। कवकविषे। छत्ताविषे। श र। कुटजतरौ। राजसर्षपे। हारा। चीनकर्पूरे। रा नि व १२। वायुग्निगुणभूयिष्ठे षड्रसान्तर्गतरसे। झालरस। म तिक्त्। म मरिचादौ। व्या। रा नि व २०। तस्य लक्षण —"यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीत नासिकाञ्च स्रावयति स कटुक।" सु सू ४२ अ। अपिच "संवेदयेद्यो रसना निपाते तुदन्निवं च। विदहन्मुखनासाक्षि संस्रावि स कटु स्मृत॥" चर। गुणा—उष्णलघुकच मुख शोधन घ्राणाक्षिविरेचन कृमिहरश्च। तद्विपाकोऽपि कटु तद्विपाकगुणाश्च वातला कफपित्तघ्ना वायग्निगुणभूयिष्ठाश्च। सु सू २ अ। कफकण्ठ दोष शोफ मन्दानिल श्वित्ररोगघ्न। अतिसेवितश्चेन चयवीर्यबलक्षयञ्च करोति। रा नि व २०। कटुकश्च तीक्ष्णश्च विशदो वातपित्तकृत्। श्लेष्मकृमिघ्न राशेय कृमिकण्डूविषापह। कफस्तन्यहरश्चापि मेद स्थौल्यापकर्षण। अग्नेर्नासिकायाश्चि जिह्वायोहितकी मत। दीपन पाचनो रुच्य नासिकाशोषणो भृशम्। क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषण इति मतान्तरम्। सोऽतियुक्तो भ्रान्तिदाहसुखतान्वोष्ठशोषकृत॥" भा म १भ। त्रि। कटनि तिक्तरसे। रत्ना। सुगन्धे। मे। दुर्गन्धे। तीव्रे। अ टी स्वा।

**कटुक**। पु। तन्नामकरसपाके। सु सू ४० अ। कटुरस। कटुपटोले। वै निघ २भ ज्व चि। कटुफलादौ। सगन्धद्रव्ये। श र। कुटजवृक्षे। अर्कवृक्षे। श च। आर्द्रक। राजसर्षपे। हारा। लशुने। मे। क्ली। त्रिकटौ। मे कत्रिक। मरिचे। रा नि व ६। भा म १भ अग्रिकृत्न स ज्व चि। "कटुकटफलाभोधरै। कटुक्या। च द कफज्व चि। "कटुक चित्रक निम्बस।

**कटुकण्टक**। शाल्मलीवृक्षे। रा नि व ८।

**कटुकत्रयम्**। क्ली। त्रिकटौ। च द ज्व चि कवलधारणे। 'सैन्धव कटुकत्रयम्।"

**कटुकन्द**। पु। शिग्रुवृक्षे। सजिना गाछ। आर्द्रके। आदा। लशुने। म दचतुष्क। क्ली। मूलके। मूला। प मु।

চিতার মূল দেবদারু, তেউড়ীমূল, গজপিপুল, সমুদায় সমান ভাগ। সর্ব্বদ্বিগুণ লৌহচূর্ণ।

**कटुकापाली।** स्त्री। कण्टकपालीवृक्षे। কাঁটাগুড়কাঁউলী। रत्ना। प मु।

**कटुकारोहिणी।** स्त्री। कटुका। रा नि व ६। च द पित्त ज्व चि महौकादौ। "कटुका रोहिणी समा।"

**कटुकालावु।** पु। तिक्ततुम्बाम्। তিৎলাউ। र मा।

**कटुकी।** स्त्री। कटुकायाम्।

**कटुकीट (क)।** पु। मशके। মশা। जटा।

**कटुक्काण।** पु। टिट्टिभे। তিতির পাখী। हे च।

**कटुग्रन्थि।** क्ली। पिप्पलीमूले। शुण्ठ्याम्। रा नि व ६। लगने। वै निघ।

**कटुच्छता।** स्त्री। निन्द्यकर्म्मसमाचारनिष्ठुरत्वे। हारा।

**कटुचातुर्जातकम्।** क्ली। समभागलवङ्गेला पत्रमरिचेषु। "एलात्वक्‌पत्रकैस्तुल्यैर्मरिचेन सम न्वितैः। कटुपूर्व्वमिदं चातुर्जातकमुच्यते॥" रा नि व २२।

**कटुच्छद।** पु। तगरवृक्षे। श र। सुगन्धा र्जके। गन्धतुलसी। वै निघ।

**कटुजीरक।** पु। जीरके। रा नि व ५।

**कटुता (त्वम्)।** स्त्री, (क्ली)। तीक्ष्णतायाम्। झाल। दीरगन्धे।

**कटुतिक्त (क)।** पु। किराततिक्तके। চিরেতা। भा पू १भ। महाशणवृक्षे। বড শণ। शणघ्रे। रा नि व ४।

**कटुतिक्त(क्ति)का।** स्त्री। महाशणे। प मु। कटुतुम्ब्याम्। তিৎলাউ। श र।

**कटुतिक्ता।** स्त्री। कटुतुम्बी। তিৎলাউ। कटुतुम्ब्याम्। কটুতরুই বা তিৎপল্তা। रा नि व ३।

**कटुतिन्दुक।** पु। कुचेलके। কুঁচিলা। श च।

**कटुतुण्डिका (ण्डी)।** स्त्री। तिक्ततुण्ड्यां। কটুতরাই, তিৎপল্তা, টেঁড় কুন্দুরকী। म क कडुतोंडली, कडितोंडे, तीतकुंदरु, वन टिंडुराकडुआ। गुणा —कटु तिक्ता वाफवान्ति विषघ्नी अरोचककफपित्तघ्नी रोचनी च। रा नि व ३। विम्बाम्। তেলাকুচা।

**कटुतुम्बि(म्बी)का।** स्त्री। Wild variety of lagenaria vulgaris तिक्तालाबुम्। তিৎলাউ। हि कडुटुम्बिया, तुम्बी, तीतलौकी। म क कडूभोपला कडुदुधी, कडिसौरे। ते चेति आनव। तत्पर्य्याय,—फलिनी चर पिण्डफला (ज), तुम्बा (मे), इक्ष्वाकु (अ), तिक्ततुम्बी कटुकालावु नृपात्मजा (र) तिक्तका कटुतिक्तिका वृहत्फला राजपुत्री तिक्तबीजा तुम्बिका। गुणा — पाण्डुक्रिमिकफवातनाशित्व लवपाकित्वञ्च। राज। 'कटुतुम्बी रसे पाके कटुरुष्या च शीतला। तिक्ता वान्तिकरी श्वास कास हृच्छोधनी मता। वातश्लेष्मव्रणविषशूलपित्तज्वरापहा। पर्णे पाके तु मधुर मूत्रशोधनमुत्तमम्। पित्तशान्तिकर ज्ञेयं फले पत्रसमा गुणा॥" वै निघ।

**कटुतुम्बिनी।** स्त्री। तिक्तालावुः। रा नि व ३।

**कटुतैलम्।** क्ली। सार्षपतैले। সরিষার তৈল। हि कडुयातेल। म शिरशेल। गुणा —कटु तिक्त तथा ग्राहि उष्णं स्यात्कफवातनुत्। क्रिमिपाण्डु शोधन स्यात्पित्तकृत्सार्षप सुतम्। कर्णरोगे क्रिमि रोगे तथा वातामयेषु च। कण्डूकुष्ठामये चैव कफ मेदोगुणेषु च। प्रशस्तं सार्षपञ्चैव रोगाणाञ्च विभावयेत। वस्तिकर्म्मणि नो शस्त पित्तदाहकर महत्।" अत्रि मू १४ अ। कटूष्ण तीक्ष्ण लघु कफशुक्रानिलहरं पित्तास्रकीटकुष्ठार्शोव्रणजन्तु जित्। वा टी हेमा तैलव। "सार्षपं तिक्त कटूष्ण वातकफविकारघ्नम्। पित्तास्रदोषदं क्रिमि कुष्ठघ्न तिलजवञ्च चक्षुष्यम्॥" रा नि व १५।

**कटुतैलमूर्च्छा।** क्ली। सर्षपतैलामतादिदोष नाशायमामतैलस्य पाकेन निष्फेनीकरणान्तरं तत्राद्य मञ्जिष्ठाहरिद्रादिवाग्विपेषु शनैः शनैः शीतलीकरणे। तेन पाककाले फेनोद्गमोऽपगतो न जायते। मूर्च्छा द्रव्याणि यथा—आमलकी हरिद्रा मुस्ता बिल्वत्वक् दाडिमत्वक् नागकेशर कृष्णजीरक वालकं नलिका बिभीतकञ्च। यथा "रजनीमुस्तबिल्वानि दाडिम केशरे। कृष्णजीरकहीवेरनलिके सविभीतके। एतैः समांशै प्रस्थे च कटुतैलस्य पचेत्तैलम्।"

**कूपजलम्** । क्ली । कूपसलिले । কোঁয়ার জল । निर्झरजले । M Williams

**कूपदर्दुरः**
**कूपमण्डूकः** } पु । कूपस्थभेके । কো'র বেঙ ।

**कूपाङ्गः (ङ्गाः)** । पु । रोमाञ्चे । श र ।

**कूपिका** । स्त्री । नदीजलगतोपले । मे ।

**कूपी** । स्त्री । पामविशेषे । कपिकच्छ्वाम् । आल-कुशी । वै निघ ।

**कूपोदकाम्** । क्ली । कूपजले ।

**कूप्यम्** । क्ली । रौप्ये । माणिक्ये ।

**कूभ(म)म्** । क्ली । अल्पसरोवरे । लटा ।

**कूरः** । पु । अन्ने, भक्ते । रा नि व २० ।

**कूर्चम्** । क्ली, पु । केशादिकृतमार्जन्यां । कूँचि । मे । इन्द्रलुप्तादिरोगेषु प्रयोज्ये यन्त्रविशेष, यद्वर्त्तमाने कुरुष इति भण्यते । 'कूर्चं वर्त्तकपृष्ठस्था सूचय ता सुबन्धना । स्रयोज्य नौलिकाव्यङ्ग केशशातेषु कुट्टने ॥' अचि । मस्तके । भुवो मध्ये नासिकोपरिभागे । श्मश्रुणि । म । "कूर्चाय शिरास्नायुस्थिमांससम्भवा ज्ञेया ।" भा । तन्नामक वैकल्यकरस्नायुमर्म्मषट्के । तस्य च स्थान अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे । हे च । क्षिप्रोपय्युभय पार्श्वे वा । 'क्षिप्रस्योपरिष्टात् उभयत कूर्चो नाम । कूर्चा हस्तपादग्रीवामेढ्रेषु षट्, हस्तयोद्वा ग्रीवामेढ्रयोरेकैक ।'' सु शा ६अ । अश्वस्य पादहस्तयोरग्रत पश्चाद्भागे । ज द २अ ।

**कूर्चकः** । पु । जीवके । लाङ्गलपच्चिविशेषे । अति २० अ । सूच्यादिदन्तरोगेषु । क्ली । दन्तधावनकूर्च्चिकायाम् । वै निघ ।

**कूर्चपर्णी** । स्त्री । मेषशृङ्ग्याम् । মেড়াশিঙে । वै निघ ।

**कूर्चभाक्** । क्ली । मूर्द्धपर्वे । वै निघ ।

**कूर्चमर्म्म** । क्ली । तन्नामकस्नायुमर्मषट्के । See कूर्चम् ।

**कूर्चलः** । पु । प्राणिनां पुनर्त्तीर्थे दकान ।

**कूर्चशिर** । क्ली । अङ्गुष्ठस्कन्धे । গুড়মুড়া । तन्नामकरुजाकरस्नायुमर्म्मचतुष्टये । तस्य च स्थान गुल्फसन्धेरधोभागे उभयपार्श्वत । सु शा ६ अ ।

**कूर्चशीर्षः (कः)** । पु । जीवकौषधौ । र मा । ज द १२ अ । नारिकेलवृक्षे । मा ।

**कूर्चशेखरः** । पु । नारिकेलवृक्षे । रा नि व १० ।

**कूर्चिकः (का)** । पु, स्त्री । क्षीरविकृतौ । স্ফীরসা । अम । "दध्ना तक्रेण वा सह पाकात् पृथग्भूतघनद्रवभागक्षीर कूर्च्चिकेत्युच्यते ।" वाटी रैमा । च सू ५ अ । सा द्विविधा—"दध्ना सह च यत् पक्व क्षीर सा दधिकूर्च्चिका । तक्रेण पक्व यत् क्षीर सा भवेत्तक्रकूर्च्चिका ॥' भरत । सूचिकायाम् । সুঁচ । वै निघ । कुड्मले । কুঁড়ি । तूलिकायाम् । কুঁচি । हे च । मे ।

**कूर्च्चिकापिण्ड** । पु । किलाटे । छाना । र मा ।

**कूर्द्दनम्** । क्ली । शिशुक्रीडायाम् । अम ।

**कूर्पम्** । क्ली । भ्रुवोर्मध्यभागे । हे च ।

**कूर्परः (रा)** । पु, क्ली । भुजमध्यभागे । कफोणि । रा नि व १८ । कफोणी, जानुदेशे । मे ।

**कूर्परमर्म्म** । क्ली । तत्स्थानस्थिते तन्नामकमर्म्म द्वे । सु शा ६ अ ।

**कूर्पासः (कः)** । पु, क्ली । अर्द्धोलुके । चोली । स्त्रीणां कञ्चुलिकायाम् । Bodice हे च ।

**कूर्म्म** । पु । उन्मीलननिमीलनकरे शरीरस्थ वायुविशेषे । श चि । कच्छपे । रत्ना । स्त्री (र्म्मी) । कच्छप्याम् ।

**कूर्म्मपित्तम्** । क्ली । कच्छपपित्ते ।

**कूर्म्मपृष्ठ** । पु । अन्नानवृक्षे । আঁতা । श च । क्ली । कमठपृष्ठदेशे ।

**कूर्म्मपृष्ठकम्** । क्ली । शरावे । शरा । हि सकोरा । श च ।

**कूर्म्मपृष्ठकास्थि** । क्ली । कच्छपास्थनि । কাছিমের খোলা । एतत्खेद वातव्याधिहर ।

**कूर्म्ममांसम्** । क्ली । कच्छपमांसे । See मझ ।

**कूर्म्मशीर्षक** । पु । जीवकवृक्षे । रा नि व ५ ।

**कूलम्** । क्ली । तीरे, तटे । अम । जलाशये ।

**कूलकम्** । क्ली, पु । पटोलपत्रे । "निम्बकूलक

कृन्तनम्। क्ली। छेदने।
कृन्तनिका। स्त्री। छुरिकायाम्।
कृपण। पु। कृमौ। "कृपणस्तु कृमौ पुंसि। मे।
कृपणा। स्त्री। सविषकीटविशेषे। सु कल्प ८ अ।
कृपाण'। पु। खड्गे। अ।
कृपाणिका(णी)। स्त्री। कर्त्त्याम्। कातारि। छुरिकायाम्। मे।
कृपीटम्। क्ली। उदरे। तोये। म। वने। काष्ठे। अ र।
कृपीटपाल। पु। वायौ। श र।
कृपीटयोनि। पु। अग्नौ। ई च।
कृमि। पु। कीटे। केंचो, पोका। अम। तत्पर्य्याय —नीलाङ्ग (अ), नीलाङ्ग क्रिमि (अ टी) पुण्ड, (ज)। पतङ्गमात्रे। पिपीलिकायाम्। कीटाम‍्ची लाक्षायाम्। कृमिर्ना कृमिवत्कीटे लाक्षायां कृमिलं खरे।' मे। उर्ण नाभे। ईच।
कृमिकम्। क्ली। पूगफल। पु। क्षुद्रकृमौ।
कृमिकण्टकम्। क्ली। विडङ्ग। उदुम्बरे। यज्ञडुमुर। मे। चित्रायाम्। ईन्दुरकाणी। ई च।
कृमिकर। पु। सविषकीटभेदे।
कृमिकर्ण' (क)। पु। कीटविशेषे। कार्ण कोटारि। कर्णरोगविशेषे। काणे काण कोटार। 'यदा तु मूर्च्छन्त्यथवापि जन्तव सजन्त्यपत्यान्यथवापि मक्षिका। तदञ्जनत्वाच्छ्रवणी निरुच्यते, भिषग्भिराद्यै कृमिकर्णकस्तु सः॥" सु उ २० अ। वा उ १७ अ।
कृमिका। स्त्री। ग्रन्थिपर्ण्याम्। राजिकायाम्। राई वा कालं सरिषा। श्रीये। वै निघ।
कृमिकालानलरस। पु। कृमिघ्नौषधे। विडङ्ग २ प विषचूर्ण १ प लौह ४ तो पारद २ तो गन्धक २ तो छागदुग्धे मर्द्दन। र सा स।
कृमिकुम्भा। स्त्री। महाकालतायाम्।
कृमिकोश (ष)। पु। फलविशेषे। नाजूक्‌न। तत्पर्य्याय,—मयाट्टी, पुराफल पचफल, जयाया, अमरीषक। तच सयाढ्य तिक्त रक्तरोधनं ज्वरार्श प्रदरातीसारघ्न कण्ठरोगघ्नञ्च। वै चन्द्रिका।
कृमिकोषोत्थम्। क्ली। कौषये। रेशमी कापड़।
कृमिकोष्ठक। पु। अन्यस्य रोगविशेषे। लक्षण यथा—"क्रमस्य यस्य वाहस्य जन्तुभि परिवेष्टितम्। पुरीष जायते भिन्न न विद्यात् कृमिकोष्ठकम्॥' ज द ४६ अ।
कृमिगुहा। स्त्री। इन्द्रवारुणीलतायाम्। मद व १।
कृमिग्रन्थि। पु। नेत्रसन्धिगतरोगे। लक्षण —"कृमिग्रन्थिवर्त्मन पक्ष्मनश्च कण्डूं कुर्य्यु कृमय सन्धिजाता। नानारूपा वर्त्मशुक्लस्य सन्धौ चरन्तो ऽन्तर्नयन दूषयन्ति॥" सु उ २अ।
कृमिघातिनी (गुडी)। स्त्री। कृमिघ्ने रसे। पाठ— रसगन्धाजमोदानां कृमिघ्नब्रह्मबीजयो। एक द्वि त्रि चतु-पञ्च तिन्दोर्बीजस्य षट् क्रमात्। सञ्चूर्ण्य मधुना सर्व्वं गुडिकाङ्कृमिघातिनीं। खादन् पिपासुस्तोयञ्च सुस्तानाङ्कृमिशान्तये। आखुपर्णी कषायञ्च पिबेत्तान् सशर्करम्॥" पारा १ भ गन्धक २ भ वनयमानी ३ भ विडङ्ग ४ भ पलाशपापड़ा ५ भ तेंदबीज ७ भ। र चि।
कृमिघाती। पु। विडङ्गे। त्रि। कृमिनाशकी।
कृमिघ्न। पु। पारिभद्रवृक्षे। पान्‍दे मान्दार। रा नि व ८। कटनिम्बे। पलाण्डौ। कोल कन्दे। बदरमूल। रा नि व ७। भल्लातकवृक्षे। रा नि व ११। विडङ्गे। प सु। हरिद्रायाम्। भा। त्रि। कृमिनाशके।
कृमिघ्नरस। पु। कृम्यधिकारे रस। विडङ्ग पलाशबीज निम्बबीज रससिन्दूर, एषां चूर्ण सम। र सा स।
कृमिघ्ना (घ्नी)। स्त्री। हरिद्रायाम्। लाक्षायाम्। विडङ्गायाम्। वै निघ। धूम्रपत्रायाम्। तामाक। रा नि व ५। सोमराज्याम्। श च।
कृमिज(ग्ध)म्। क्ली। अगुरुकाष्ठे। अम। लाक्षायाम। त्रि। कृमिजात।
कृमिजलज। पु। कृमिशङ्खे। रा नि व १३।
कृमिजा (जग्धा)। स्त्री। लाक्षायाम्। लाहा, आलता। र मा।

"तण्डुला दालिसमिश्रा लवणार्द्रकहिङ्गुभिः। संयुक्ता सलिले सिद्धा कृशरा कथिता बुधैः॥" भा। गुणा —"कृशरा शुक्रला बल्या गुरुः पित्त कफप्रदा दुर्जरा बुद्धिविष्टम्भमलमूत्रकरी मता॥" वै निघ। यवागूपाकविधिना पाक कार्य्य।

**कृशरोमा**। स्त्री। शूकशिम्ब्याम्। वै निघ।

**कृशला**। स्त्री। शिर केशे। श च।

**कृशशाक (ख)**। पु। पर्पटके। क्षेत्पापड़ा। रा नि व ५।

**कृशाकु**। पु। तृणकरणे। वै निघ।

**कृशाङ्ग**। पु। लूतायाम्।

**कृशाङ्गी**। स्त्री। प्रियङ्गुलतायाम्। श च।

**कृशाणु (नु)**। पु। चित्रकक्षुपे। रा नि व ६।

**कृशाक्ष**। पु। ऊर्णनाभौ। वै निघ।

**कृशि(षि)का**। स्त्री। आखुकर्णीलतायाम्। इन्दुरकाणी। रा नि व ३।

**कृशीवल**। पु। काकजङ्घागुल्मे। केउआ ठेङा। र मा

**कृशोदरी**। स्त्री। श्वेतसारिवायाम्। भा पू १ भ। See अनन्ता।

**कृष**। पु। श्ररण्ये। हे च।

**कृषक**। पु। फालकर्षक। विका। हले। श च।

**कृषिविष्ट**। पु। गर्हनिर्माणपटु पक्षिविशेषे। बावुई। रा।

**कृषिलौहम्**। क्ली। मुण्डलौहे। रा नि व १०।

**कृषीवल**। पु। काकजङ्घावृक्षे।

**कृष्टपच्य**। त्रि। व्रीहिधान्ये।

**कृष्टपाक्यम्**। क्ली। व्रीहिधान्ये।

**कृष्णम्**। क्ली। सौवीराञ्जने। रा नि व १३। मरिचे। प सु। यवनाले। काल जनार। सौतोऽञ्जने। कुलाञ्जन। र मा। लौहे। जटा। नीलाञ्जने। रा नि व २३। कृष्णागुरुणि। रा नि व ६। भा। अगुरुणि। रत्ना। लौहकिट्टे। विडङ्गलवणे। औसबे। सौवर्चललवणे। तुत्थके। वै निघ। नेत्रतारके। पु। राजसर्षपे। काल सरिषा। रा नि व १६। कृष्णसारमृगे। रत्ना। वायसे। स। मन्दविषवृश्चिके। मण्डूकाख्यकीट भेदे। सु कल्प ८ अ। कोकिले। विश्व। कर मर्द्दके। श र. "कृष्णे प्रवरवासन्त हरिमल्लिन शिम्बिका।" हे च।

**कृष्णक**। पु। कृष्णमुद्गे। कृष्णतण्डुलायाम्। वै निघ।

**कृष्णकञ्चुक**। पु। कृष्णचणके। वै निघ।

**कृष्णकदली**। स्त्री। महाराष्ट्रप्रसिद्धे कदली विशेषे। गुणा —"कृष्णा तु कदली रुच्या तुवरा मधुरा लघुः। वायोर्धातोर्वृद्धिकरी मेहपित्तहृषा हरा॥" वै निघ।

**कृष्णकन्दम्**। क्ली। रक्तोत्पले। रक्तकमल। विका।

**कृष्णकरवीर**। पु। कृष्णपुष्पकरवीरवृक्षे। काल करवीर गाछ। गुणैः करवीरतुल्य। रा नि व १०।

**कृष्णकर्कटक**। पु। कृष्णवर्णकर्कटविशेषे। काल काँकडा। गुणा —"कृष्णकर्कटकस्तेषां बल्य कोष्णोऽनिलापहः। शुक्ल सन्धानकृत् सृष्ट विण्मूत्रोऽनिलपित्तहः॥" सु सू ४६ अ।

**कृष्णकर्म्म**। क्ली। शुक्लस्य व्रणरोपणस्यानस्य कृष्णीकरणे। सु चि १अ।

**कृष्णक(के)लि**। पु। (Mirabilis Jalapa) स्वनामख्यातपुष्पवृक्षे। कृष्णकलि, सन्ध्यामणि। गुलालफुल इति गौडीया। तस्य शाखा रक्त तण्डुलीयमालवत् ग्रन्थियुक्ता च। पत्र ताम्बूलवत् पर क्षुद्र भवति, तत्पुष्प श्वेतरक्तपाटलपीताभ युक्तपञ्चदल षट्केसरमध्यमोषद्गन्ध सायाह्ने विकसति प्रायेण सुलभ। बीजञ्च तस्य कृष्ण मरिचा भञ्च। वै निघ।

**कृष्णका**। स्त्री। राजिकायाम्। राईसरिषा। प सु।

**कृष्णकाक**। पु। द्रोणकाके। हला।

**कृष्णकातरा**। स्त्री। रक्तगुञ्जायाम्। वै निघ।

**कृष्णकापो(ति)ती**। स्त्री। महौषधिविशेषे। सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमां। एवं रूपरसाञ्चापि कृष्णकापोतीमादिशेत्॥" सु चि ३० अ। See औषधि।

**कृष्णकायः** । पु । महिषे । वै निघ ।

**कृष्णकाष्ठ(क)म्** । क्ली । कृष्णागुरुणि । रा नि व १२ ।

**कृष्णकुटजः** । पु । कृष्णपुष्पकुटजवृक्षे । वै निघ अतिसारे चि कुटजपुटपाके ।

**कृष्णकुठेरकः** । पु । कृष्णतुलस्याम् । के ।

**कृष्णकुलत्थः (कः)** । पु । कुलत्थभेदे । काल कुलिकलाइ । गुणाः —"कृष्णकुलत्थको ग्राही रक्तपित्तकरो मतः । रसे च तुवरः पाके कटुः कफहरो मतः । वातगुल्माश्मरीगुल्मपीनसश्वासकासजित् । आनाहगुदकीलार्शोमेदधातुविनाशकः ॥" वै निघ ।

**कृष्णकुलत्थिका** । स्त्री । वनकुलत्थके । वै निघ ।

**कृष्णकुसुमः** । पु । कृष्णकरवीरे । रा नि व १० ।

**कृष्णकेलिः** । स्त्री । कलिकदम्बेति प्रसिद्धे पुष्पवृक्षे । कै ।

**कृष्णगन्धः (न्धा)** । पु, स्त्री । शोभाञ्जनवृक्षे । सजिना गाछ । र मा । मद । च सु १, ३८ । वा चि ५ अ ।

**कृष्णगर्भः** । पु । कट्फलवृक्षे । रा नि व ९ ।

**कृष्णगलः** । पु । कुकुभपक्षिणि । कुको पाखी । वै निघ ।

**कृष्णगोकर्णी** । स्त्री । Black kind of Murvá ( Sansevieria Zeylanica ) कृष्णकुसुममूर्वालतायाम् । काल मुर्गा । हि काला मुरहरा । म मुरलो । गुणाः —"कृष्णा गोकर्णिका तिक्ता रसे स्निग्धा त्रिदोषहा । शीतवीर्या वातपित्तज्वरदाहभ्रमापहा । पिशाचबाधारक्तातिसारोन्मादमदापहा । अतिकासश्वासकफकुष्ठवान्त्यापहा । अन्ये गुणास्तु शुभ्रे तगोकर्णीसदृशा मताः ॥" वै निघ ।

**कृष्णगोधा** । स्त्री । सविषसौम्यकीटभेदे । तद्दंष्ट्रस्य शोथज्वरोगा जायन्ते । सु कल्प ८ अ ।

**कृष्णचणकः** । पु । कृष्णवर्णचणकक्षुपे । काल छोला । म करियाचण्या । कं करियकडले । गुणाः—मधुरः कासपित्तघ्नः पित्तातिसारकासघ्नः बल्यः रसायनश्च । रा नि व १६ ।

**कृष्णचञ्चुकः** । पु । चणकवृक्षे । छोला गाछ । रा नि व १६ ।

**कृष्णचटकः** । पु । श्यामाकपक्षिणि । शामा पाखी ।

**कृष्णचन्दनम्** । क्ली । पीतचन्दने । हरिचन्दने । काल चन्दन । च सु ।

**कृष्णचूडा** । स्त्री । The plant Caesalpinia Pulcherrima स्वनामप्रसिद्धपुष्पवृक्षे । कृष्णचूड़ गाछ । गुल्तुरा इति यवनाः । तत्पुष्प पीतरक्तवर्णं दीर्घवृन्तं दशदलमीषद्गन्धं वर्षासु मधुरं भवति । काञ्चननिम्बसौतुल्यमिति । कल्पद्रुम । रक्तगुञ्जायाम् । रा नि व ३ ।

**कृष्णचूडिका** । स्त्री । गुञ्जालतायाम् । रा नि व ३ ।

**कृष्णचूरकः** । पु । चणकवृक्षे । छोला गाछ । प सु ।

**कृष्णचूर्णम्** । क्ली । लौहमले । मण्डूरे । रा नि व १३ ।

**कृष्णजरधम्** । क्ली । कृष्णागुरुणि । वै निघ ।

**कृष्णजटा** । स्त्री । सुगन्धजटामांस्याम् । जटामांसी । रत्ना । वा अञ्जनादिव ।

**कृष्णजयन्ती** । स्त्री । कृष्णवर्णजयन्तीक्षुपे । काल जयन्ती । सा रसायनी । रा नि व ४ ।

**कृष्णजिह्व** । पु । अश्वभाण्डे । ज द २४ ।

**कृष्णजीर.(क)** । पु । (Nigella sativa or Indica) स्वनामप्रसिद्धे जीरकवृक्षे । काल कालजीरे । हि मङ्गरइल । म कालेजीरे । ते नल्लजीरे । तत्पर्य्याय,—सुषवी, कारवी, पृथ्वी, पृथु, काला, उपकुञ्चिका (अ), कुञ्चिका (अ), पतिस्वरा (अ), सुषवी, सुचिका (अ टी), उपकुञ्चि (र), सुसवी, पृथुका, पृथिवी, भेषज (शब्द) कृष्णा, जरणा, शाली, बहुगन्धा । तद्विविधं स्थूलसूक्ष्मभेदम । गुणाः —"कृष्णजीरश्च चक्षुष्यश्च शीत सुगन्धिकं । ग्राहकं कटुकं गर्भं दीपकं जीर्णज्वरजितं । कफ शोथ निरोधिर्गारुक्षचैव विनाशयेत् ॥" वै निघ । "जरणा कटुकणा च कफशोषनिकृन्तनी । रुच्या जीर्णज्वरघ्नी च चक्षुष्या ध्मानिघ्नी परा ॥" रा नि व ६ । तैल गुलक

काले यत्न दिनैक पातयेत्। एतत्प्रणाली र सा स दृश्या।

**कृष्णभूकुष्माण्डः।** पु। कृष्णवर्णभूमि कुष्माण्डे। श चि।

**कृष्णभूभवा।** स्त्री। कारवेल्लिकायाम्। वै निघ।

**कृष्णभूम (मि)।** पु, स्त्री। कृष्णवर्णभूमि देशे। हे,च। रा नि व २।

**कृष्णभूमिजा।** स्त्री। गोमूत्रिकातृणे। रा नि व ८।

**कृष्णभूषणम्।** क्ली। मरिचे। वै निघ।

**कृष्णभेदा (दी)।** स्त्री। कटुकायाम्। रा नि व ६।

**कृष्णमणिः।** पु। राजावर्त्तमणौ। वै निघ।

**कृष्णमत्स्य।** पु। कण्टकयुक्तमत्स्यभेदे। सु सू ४६ अ।

**कृष्णमदनः।** पु। कृष्णवर्णमदनवृक्षे। काल मयना गाछ। गुणा—"कृष्ण श्वेतन्तु मदन शीतली मधुर स्मृत। कटतिक्तश्च तुवर वान्ति कृत् कफनाशन। पक्वामाशयशुद्धेश्च कारक पित्तनाशक॥" वै निघ।

**कृष्णमधुरज्वर।** पु। मधुरज्वरभेदे। वै निघ।

**कृष्णमल्लिका (ली)।** स्त्री। कृष्णार्ज्जकवृक्षे। कृष्णपत्र शुभ्र तुलसी। रा नि व १०। See अर्ज्जक। पर्णासे। काल बाबुई। भा पू १भ। See बबरी। वनवर्व्वर्य्याम्। काल तुलसी वै निघ।

**कृष्णमक्षिका।** स्त्री। मक्षिकाविशेषे। काल माछि। वै निघ।

**कृष्णमालुक।** पुं। कृष्णार्ज्जके। कृष्णपत्र शुभ्र तुलसी। रा नि व १०।

**कृष्णमाष।** पु। कृष्णकलाये। कालकलाय। गुणा—"कृष्णमाषो बलकरो रुचो दोषचयापह।" वै निघ।

**कृष्णमुख।** पुं। मानरे। । रा नि व १९।

**कृष्णमुखा।** स्त्री। कृष्णमारिचायां। व निघ।

**कृष्णमुखी।** स्त्री। अलगर्दजलौकायाम्। सु सू १३ अ।

**कृष्णमुद्गः।** पु। ( Phaseolus max ) स्वनामख्यातशिम्बीधान्ये, मुद्गविशेषे। वम्बइ काल मुग। म करियामुग। कं करियहेसरु। तत्पर्य्याय,—वासन्त, माधव, सुराह्न। गुणा—विदोषघ्न मधुर वातघ्न लघु दीपन पथ्य बलवीर्य्याङ्गपुष्टिदश्च। रा नि व १६।

**कृष्णमुष्कः।** पु। कृष्णघण्टापाटलिकायाम्। काल घण्टापारुल। गुणा—"कटुयामो रुचि कृत्पाचक स्मृत। यकृद्गुल्मोदरहरो गुणाश्चान्ये च श्वेतवत्॥" वै निघ।

**कृष्णमूला (ली)।** स्त्री। कृष्णमूलशारिवा विशेषे। रा नि व १२।

**कृष्णमूषिक।** पु। मूषिकभेदे। "कृष्णेन छक् छर्द्दयति दुर्दिनेषु विशेषत। शिरीषफल कुष्ठन्तु पिबेल्लिह शुकमश्मना॥" सु कल्प ६अ।

**कृष्णमृग।** पु। कृष्णहरिणे। कालसार हरिण। वै निघ।

**कृष्णमृत् (त्तिका) (त्स्ना)।** स्त्री। कृष्णवर्ण सुरभिमृत्तिकायाम्। सुगन्ध काल माटि। हि करियामाटी। म कालीमाती। गुणा—"कृष्ण मृत्स्ना रक्तदोषप्रदरक्षतदाहहा। मूत्रकृच्छ्रकफ म्पित्त नाशयेदिति कीर्त्तितम्॥" वै निघ। "कृष्णमृत्क्षतदाहासृग्प्रदरश्लेष्मपित्तनुत्।" रा नि व २। च चि १अ। वा चि ८अ। कृष्ण भूमौ। वै निघ।

**कृष्णमृत्तिक।** पु। कृष्णभूमौ। हे च।

**कृष्णमेह।** पुं। सप्रमेहप्रमेहरोगे। "काल मेहो मसीनिभम्।" भा। मा नि।

**कृष्णरङ्गम्।** क्ली। शौसधातौ। वै निघ

**कृष्णरम्भा।** स्त्री। रम्भाविशेषे। काल कला। वै निघ।

**कृष्णरस।** पु। पारदस्य कृष्णीकरणे। तत्प्रकरणं—"लौहपात्रेऽथवा ताम्रे पलैक शुद्धसूतक। मर्द्दयित्वा द्रुते तस्मिन् गुडट्टुत पलत्रयं। दिव्या च चालयेत्किञ्चिल्लोहदर्व्व्या पुन पुन। शोभते कदलीपत्रं तस्योपरि च ढालयेत्। हस्तेनैव मर्द्दयेत् मर्दयेत् मलवदीषद वीजयेत्॥" चचि।

कृष्णराजः । पु । कृष्णशिग्रुवृक्षे । काल सजना गाछ ।

कृष्णराजिका । स्त्री । कृष्णसर्षपे । काल सरिषा । वै निघ ।

कृष्णरुहा । स्त्री । जतुकालतायाम् । रा नि व ३ ।

कृष्णल (क) । पु । रक्तिकायाम् । रति । घुघुटा, चिरमुटी इति च भाषायां । गुञ्जायाम् । कुँच । कृष्णगुञ्जायाम् । वै निघ ।

कृष्णलवणम् । क्ली । Muriate of soda with a proportion of sulphur and iron काचलवणे । सौवर्च लवणे । सचल लवण । रा नि व ६ ।

कृष्णला । स्त्री । श्वेतगुञ्जालतायाम् । भा पू १भ । गुञ्जालतायाम् । रा नि व ३ । भुजाढक्याम् । टोंडोव कलाय । प सु । कृष्णगुञ्जायाम् । वै निघ ।

कृष्णलो(लो)हम् । क्ली । काललोहे । रा नि व १३ । तीक्ष्णलोहे । सु सू ३८ भ ।

कृष्णवक्त्र । पु । श्याममुखे वानरे । हला ।

कृष्णवनालुकम् । क्ली । वनजकृष्णालुकविशेषे । बुनो काल आलू । गुणा —"कृष्ण वनालुक कृष्य महासिद्धिकर परं । सुखजाड्यहरमीक्त मुनिभिस्तत्वदर्शिभि ॥" वै निघ ।

कृष्णवर्ण । पु । राजमदनवृक्षे । काल मयना गाछ । रा नि व ८ । कस्तूरिकायाम् । मुस्तायाम् । रौहाकरक्षे । कालशान । मध्यसदे । क्ली । कली । लवङ्गे । कृष्णागुरुणि । वै निघ । स्त्री (र्णा) । असाध्यविषलूताविशेषे । सु कल्प ८ भ ।

कृष्णवर्त्मा । पु । वह्नौ । चित्रकवृक्षे । चिते गाछ । यम । भल्लातकवृक्षे । वै निघ ।

कृष्णवर्व्वरक । पु । बर्बरवृक्षे । रा । काल बाबुई तुलसी ।

कृष्णवल्मीक । पु, क्ली । कृष्णवर्णवल्मीके । सु कल्प ८भ ।

कृष्णवल्लिका । स्त्री । जतुकालतायाम् । रा नि व ३ ।

कृष्णवल्ली । स्त्री । (Ocymum pilosum) कृष्णतुलस्याम् । काल बाबुई । प सु । कृष्णसारिवायाम् । रा नि व १२ ।

कृष्णवानरः । पु । गोलाङ्गूले वानरे । मुख पोड़ा वानर । रा नि व १९ ।

कृष्णवार्त्ताकु । पु । कृष्णवर्णवार्त्ताकौ । काल बेगुन । रस र ज्वरादि यष्ट कवाटरसे ।

कृष्णवीज । पु । रक्तशिग्रौ । लाल सजना गाछ । जटा । क्ली । कालिङ्गे । तरमुज । रा नि व ७ ।

कृष्णवृन्ता (न्तिका) । स्त्री । पाटलावृक्षे । गाम्भारीवृक्षे । रा नि व २३ । माषपर्णीलतायाम् । प सु । कुवेराक्षीवृक्षे । पेटारि गाछ । र मा ।

कृष्णवेत्र । पु । कैलिलता इति प्रसिद्धलतायाम् । भैष महाभल्लातकगुडे । "कृष्णवेत्रोघटाफलम् ।" रस र वसकवृते ।

कृष्णवोल । पु । कृष्णच्छविवोलभेदे । मुशब्बर, काल गन्धबोल । गुणा —"कृष्णवोल कटु शीत भेदकौ रसशोधन । शूलाध्मानकफान्वात कृमिगुल्मौ च नाशयेत् ॥" वै निघ ।

कृष्णव्रीहि । पु । कृष्णवर्णतुषतण्डुले व्रीहि धान्यविशेषे । काल धान आउशकेले । स च सर्व्वव्रीहिश्रेष्ठ इति । सु । "कृष्णव्रीहि स विज्ञेयो य कृष्णतुषतण्डुल" इति । भा पू १भ ।

कृष्णशठ । पु । दुर्लभनामे । ल द ।

कृष्णशण । पु । कृष्णपुष्पशणवृक्षे । काल शन । भैष क्षुद्र रो चि महानीलतैले । च चि २०भ ।

कृष्णसार । पु । Black antilope स्वनाम प्रसिद्धे मृगे । कालसार हरिण । श टो र ।

कृष्णशारिवा । स्त्री । कृष्णसारिवायाम् । श्यामा लता । See कृष्णसारिवा ।

कृष्णशालि । पु । स्वनामख्यातशालिधान्ये, कृष्णधान्य । काल हेमन्त धान । तत्पर्याय,— श्यामशालि, कालशालि, सितेतर । गुणा — मधुर बलकृत् पुष्टिवीर्य्यवर्द्धन नयद कान्तिद त्रिदोषघ्न । रा नि व १६ ।

कृष्णशिंशपा । स्त्री । कालागुरुपरनामशिंशपा वृक्षे । काल शिशु गाछ । ल कालाशिंशपा । भं

१२८ श ष्ठि १६ श काञ्जिक १६ श यथाविधि तैल पचत। तैलमिदमकल्कत्वात् तुल्येन क्वाथेन तुषोदके साध्य भवति। च द वा व्या चि।

**केतनम्**। क्लौ। चिह्ने। स्थाने। हे च।

**केतु**। पु। अग्निमन्थे। र मा। रोगे। पीडायाम्। उत्पाते। चिह्ने। मे।

**केतुग्रहवल्लभम्**। क्लौ। वैदूर्यरत्ने। भा पु १ भ।

**केतुतारा**। स्त्री। धूमकेतौ।

**केतुभ**। पु। मेघे। शब्दमा।

**केतुरत्नम्**। क्लौ। वैदूर्यमणौ। प मु।

**केतुवसन**। पु। पताकायाम्।

**केदर**। वि। काणे। टेरके। श र। पु। वनस्पतिविशेषे। चम।

**केदार**। पु। अद्रौ। क्षेत्रे। চষা ক্ষেত। शालभूमिविशेषे। आलवाले। मे। केदारशाली। आमन। वै निघ।

**केदारक**। पु। केदारजातषष्टिकधान्यजातिभेदे। सु सू ४६ च। गुणा—कङ्कुकवत। See केदारशालि।

**केदारकटुका**। स्त्री। कटुका। रा नि व ६।

**केदारखण्डम्**। पु। क्षुद्रालवालविशेष। वौध।

**केदारजम्**। क्लौ। पद्मकाष्ठे। रा नि व १२।

**केदारजलम्**। क्लौ। तद्गतशस्यजले। गुणा—विपाके स्वादु गुरु दोषदञ्च। तदेव बहमूत्र विशेषेण दोषद भवेत्। रा नि व १४।

**केदारभूमि**। स्त्री। शालक्षेत्रे।

**केदारशालि**। पु। केदारक्षेत्रजशालिधान्ये। উন্নতভূমিজ শালিধান্য, আমন ধান, হেটে ধান। गुणा—मधुरा हृद्या बल्या पित्तवर्द्धना ईषत्कषाया अल्पमला गुरव कफप्रदाय। रा नि व १६। धान्य—मधुर शीतल रुचिकर स्तन्यवर्द्धनम्। वै निघ। "केदारप्रभवा रुच्या वात पित्तविनाशिन। रक्तपित्तविकारघ्ना बातला कफकारका।" चकि १५ च।

**केना (नो)**। स्त्री। पत्रशाकविशेष। गुणा—मधुरा शीता रुच्या स्तन्यवर्द्धनी च। वै निघ।

**केनार**। पु। शिर कपोलसन्धिषु। मे।

**केनिपात' (क')**। पु। अरित्रे। शब्दर।

**केन्दु (क) (र')**। पु। (Diospyros Glutinosa) तिन्दुके। তেঁদ গাব। श र। श च।

**केमुक (का)**। वि। केवुककन्दे उत्तरदेश ख्याते। কেঁউ গাছ। हि कोवी केमुवा। तत्पर्याय,—पेचुक, पेचुनी, पेचु, पेचिका, दलसारिणी, केचुक। र। प्र त्रिकट्वाद्यमोदके। गुणा—मधुरा हृद्या कटुपाका तिक्ता शीता लघु पाचिका दीपनी ग्राहिणी हृद्या वातला कफपित्त ज्वरघ्नी प्रमेहकुष्ठकासघ्नी रक्तरोगघ्नी पित्तश्रम पिपासाश्च नाशयेत्। वै निघ। मूल—केमुक कटुक पाके तिक्त ग्राहि हिम लघु। दीपन पाचन हृद्य कफपित्तज्वरापह। कुष्ठकास प्रमेहासनाशन वातलङ्कटु।' भा पू १भ कफ पित्तघ्न रोचन अग्निदीपनश्च। राज। मधुर रुचकच्च शीतल भेदन ग्राहक रुच्य गुरुपित्त कफघ्न वातघ्नश्च। वै निघ।

**केम्बुकम्**। क्लौ। पूगे। भा म ७भ मू क्र चि।

**केयूरम्**। क्लौ। अलङ्कारविशेषे। तत्पर्याय—अङ्गदम् (च)। তাড, তাগা, অনন্ত।

**केलटम्**। क्लौ। कुसुम्भवीजे। वै निघ।

**केलटक**। पु। केमुककन्दे। वै निघ।

**केलास**। पु। स्फटिकमणौ। वै निघ।

**केलि**। स्त्री। पृथिव्याम्। शब्दर।

**केलिक (किल')**। पु। अशोकवृक्षे। वै निघ।

**केलिकदम्ब**। पु। कदम्बविशेष। क। See कदम्ब।

**केलिकिण' (कीर्ण:)**। पु। उष्ट्रे। वै निघ। हे च।

**केलिपिक**। पु। कोकिले।

**केलिवृक्ष**। पु। केलिकदम्बे। কেলিকদম্ব। श र।

**केलुट(क)म्**। क्लौ, पु। कन्दशाकविशेषे। কেমুককন্দ। अलीदुम्बरे। वै निघ।

**केवलद्रव्यम्**। क्लौ। मरिचे। श र।

**केवा (विका)** । स्त्री । केवार् इति कोङ्कणदेशे ख्याते पुष्पवृक्षविशेषे । तत्पर्य्याय,—कविका, कैवी, भृङ्गार नृपवल्लभा, भृङ्गमारी, महागन्धा, राजकन्या, अलिवाहिनी । गुणा —मधुराशीतला दाहपित्तश्रमघ्नी वातघ्नी कफघ्नी छर्द्दिघ्नी च । रा नि व १० ।

**केवु(वू)कः (का)** । पु,स्त्री । पत्तरे । शाकिके । सि यो क्रमि चि । कन्दुके । कँाउ, কেউতারা । च सू ४अ क्रमिघ्नगणे ।

**केशः** । पु । ह्रीवेरे । वाला । प सु कुन्तले । मे । वाले । চুল । रा नि व १८ । स तु गर्भस्थ शिशोरष्टाभिर्मासै र्जायते । सुखबोध ।

**केशकार'** । पु । इक्षुविशेषे । हि कुशियार । गुणा —गुरु शीत रक्तपित्तक्षयघ्न । भा ।

**केशकारी** । स्त्री । शौहिण्याम् । वै निघ ।

**केशकीट'** । पु । Louse उकुणे ।

**केशगर्भकः** । पु । कवर्य्याम् । चिका । श्योणाक वृक्षे । छागे । उत्कुणे ।

**केशघ्नम्** । क्लो । इन्द्रलुप्तरोगे । টাক পোকা । रा नि व २० ।

**केशच्छित्** । पु । नापिते । श च ।

**केशटः** । पु । उकुणे । छागे । मे । श्योणाक वृक्षे । चिका ।

**केशधारिणी** । स्त्री । दुर्गपुष्प्याम् । श । কেশপুষ্পী ।

**केशधृत्** । पु । मस्तके । भूतकेश । श च ।

**केशनाम** । क्लो । ह्रीवेर । वाला । अम ।

**केशपक्ष** । पु । केशसमूह । अम ।

**केशपर्णी** । स्त्री । अपामार्गवृक्षे, रक्तापामार्गे । भा पू १भ ।

**केशपाश** । पु । केशभारे । अम ।

**केशपाशी** । स्त्री । शिरोमध्यस्थशिखायाम् । চূড়া । अम ।

**केशफला** । स्त्री । कोषफलायाम् । क । दाबकोयाउको ।

**केशभु' (भूत्)** । स्त्री, पु । मस्तके । रा नि व १८ ।

**केशमथनी** । स्त्री । शमीवृक्षे । शाइ शाइ । रा नि व ८ ।

**केशमार्ज्जक(न)म्** । क्लो । कङ्कतिकायाम् । কাঁকুই, চিরুণী । हला ।

**केशमुष्टिः (क)** । पु । विषमुष्टिनामकवृक्षाख्य क्षुपे, महानिम्बे । ঘোড়ানিম্ । मं यवानीनिव । रा नि व ४।८ ।

**केशयन्त्रम्** । क्लो । उपविषादिशोधनार्थे यन्त्र विशेषे । लक्षण यथा—"धान्यपूरितमुख्याल्या सुगुप्तायां सुखोपरि । सुदुग्धैर्नारिकेलस्य खर्पर विसमद्दयेत् । केशी दुग्धे मृतो यस्मात् केशयन्त्र तथा स्मृतम् ॥" वे चन्द्रिका ।

**केशर** । पु, क्लो । नागकेशरवृक्षे । मे । च द ५ अ । बकुलवृक्षे । सु सू ३८ अ एलादि । पुन्नागवृक्षे । हारा । किञ्जल्के । भा पू १भ । सिंहकेशे । मे । हिङ्गुवृक्षे । च टी भ ।

**केशरञ्ज'** । पु । केशराजे । भृङ्गराजे ।

**केशरञ्जिनी** । स्त्री । महदर्द्दवीलतायाम् ।

**केशरञ्जन.** । पु । भृङ्गराजे । ভীমরাজ । रा नि व ४ । नीलभिण्ट्याम् । वै निघ ।

**केशरपाक** । पु । वाजीकरणपाकविशेषे ।

**केशरा** । स्त्री । नागरमुस्तायाम् । रा नि व६ ।

**केशराग'** । पु । भृङ्गराजवृक्षे । भा गण्डमालि ।

**केशराज** । पु । स्वनामख्याते शाकविशेष । কেশুরে । हि भेंगरिया । उत् कालाकेशुरा । सा को । तत्पर्य्याय,—भृङ्गराज, भृङ्ग, पतङ्ग, मार्कर, मार्क (र), मार्कव (ब), मार्गमार, परक, भृङ्गसीटर (वि), केशरञ्जन, कीरा, कुन्तलवर्द्धन (वै), अङ्गारक, एकरज, करञ्जक, भृङ्गरज, भृङ्गार (ज), अञ्जाभर, नद्दराग, मर्कर (ग-र) भङ्गाह, पितृप्रिय । गुणा— तिक्तोष्ण चक्षुष्य केशरञ्जन कफामशोथविषघ्न । तत्र नीली रसायन । रा नि व ४ । भाग्य केश वर्द्धन पाण्डुकफघ्न रसायनञ्च । राज । भृङ्ग राजे । ভীমরাজ । र मा ।

**केश(स)राम्ल'** । पु । मातुलुङ्गवृक्षे । जटा ।

**केशराश्रयम्** । क्लो । बालके । वाला । द नि ८ अ ।

**केसरोच्छटा** । स्त्री । मुस्तायां । नागरमुस्तायाम् । वै निघ ।

**केसूरः** । पुं । कशेरौ । केशुर । केसूर' स्यात् पीतरसो गोमौ हय कशेरुक । इत्यभि ।

**कोङ्कक'** । पुं । गरगरु इति ख्यात वृक्षे । गुरगश्री । सु सू ३६ च ।

**कोटजः** । पु । कुटजवृक्षे । कुड़चि गाछ । भा पू १भ ।

**कोट(ड)र्य्य'** । पु । समामप्रसिद्धे महानिम्ब विशेषे । फलित महानिम्बविशेष, घोडानीम । म फलितमहानिव, गीरानिम्ब । क कयाईवेप्प वै निघ अपरमा चि वक्ष्यामहते । गुणा — कटु-तिक्तकषाय शीतलो लघ तापघ्न शोषकुष्ठरक्त कृमिमूत्रविषघ्नय । रा नि व ९ । शीतलस्तिक्त कटु तुवर लघ दाहार्श कृमिशूलघ्न सन्ताप विषघ्नय । श्वेतपाटलवृक्षे । वै निघ । कट्फलवृक्षे । रा नि व ९ । च सू ४ध । भा म बाल चि । मदनवृक्षे । रा नि व ८ महाभल्लातकगुल्मे । पूतीकरञ्जे । कृष्णकटभीवृक्षे रा नि व ९ । घृतकरञ्जे । कामुकै । लघकाश्मर्य्याम् । रा नि व २३ ।

**कैतकम्** । क्ली । केतकीपुष्पे । राज । श्रृगाल कोल्याम् । शेयाकुल ।

**कैतवम्** । क्ली । कुमुदे । वैदूर्य्यमणौ । रा नि व १३ । राजिकायाम् । राई । तिका ।

**कैदार** । पु । केदारशालिधान्ये । आमन धान । षष्टिकधान्ये । षेटो धान । गुणा —केदारा मधुरा वृष्या बल्या पित्तनिवर्हणा । ईषत्कषाया स्वरसा गुरव' कफशुक्रला ॥ सु सू ४६ अ । क्ली । पद्मकाष्ठ । प मु ।

**कैपोला** । स्त्री । कृष्णपिप्पलायाम् । वै निघ ।

**कैरली** । स्त्री । विडङ्गायाम् । रा नि व ६ ।

**कैरवम्** । क्ली । विडङ्गे । कुमुदे । हेला फूल, शालूक फूल । रवा । श्वेतपद्मे । इ च । श्वेतकुमुदे । श्वेत सुन्दि । भा पू १भ । रा नि व १० ।

**कैरविका** । स्त्री । कुमुदिन्याम् । छोटसुन्दीर झाड़ । भा पू १भ ।

**कैरविणी** । स्त्री । उत्पलिन्याम् । सुन्दीर कुमुदफुलेर झाड़ । रा नि व १० ।

**कैरविणीफलम्** । क्ली । कुमुदबीजे । ढेलो बीचि, भेट । हि भेट । भा ।

**कैरवी** । स्त्री । मेथिकायाम् । मेथि । प मु । चन्द्रिकायाम् । म । (विन्) पु । चन्द्रे ।

**कैरवोकन्दः** । पुं । तैलकन्दे । रा नि व ७ ।

**कैराटः (क')** । पु । करवीरवृक्षे, स्थावरविष भेदे । इ च ।

**कैरात. (क')** । पु । शलपक्षिविशेषे । च सू २७अ । भूनिम्बे । चिरेता । रा नि व ९ । बलवति पुरुषे । हारा । क्ली श्वेतचन्दने । रा नि व १२ ।

**कैरातचन्दनम्** । क्ली, पु । नातिपीतचन्दने कोडय ख्याते । श्वेतचन्दन । गुणा —"शीतलः तिक्त कान्तिकरो मत । विचर्च्चिकाकुष्ठकण्डूकफ दद्रुविषापह । रक्तपित्तकृमिव्यङ्ग पित्तदाहज्वर दाहह ॥" वै निघ । See श्वेतचन्दनम् ।

**कैरालम्** । क्ली । विडङ्गे । वै निघ ।

**कैराली** । स्त्री । भूनिम्बे । विडङ्गायाम् । रा नि व ६ ।

**कैवर्त्त** । पु । महानिम्बे । वै निघ ।

**कैवर्त्तम(मु)स्त(क)म्** । क्ली । कैवर्त्तिकायाम्, जलजमुस्ताभेदे । केओटमूता, केउरमूता । श र । ततपर्य्याय,—वन्य, सितपुष्प (र्क्ली), कैवर्त्तीमुस्तक, कैवर्त्तमुस्तक (शब्दर), कुटन्नट, दशपुर, वानेय, परिपेलव, प्लव, गोपुर, गोनर्द (च), कैवर्त्ती (वै), दाशपुर, दासपुर, परिपेल पारिपेल, कैवर्त्तिमुस्तक, मनसमाव (र), धान्य, शीतपुष्प, जीर्णबुध्न । गुणा —हिमं तिक्त कषाय कटु कान्तिकर कफघ्न पित्तास्र रक्तदोषवीसर्पकुष्ठ कण्डू घ्नय । इदन्तु वितुन्नकनाम्नी इचय लघू मुस्तकाकृति । "मुस्तावत्पेलवपुट युक्ताभ स्वादि तुन्नकमिति ।" भा पू १भ ।

**कैवर्त्तिका (र्त्ती)** । स्त्री । (Cyperus rotundus) A kind of fragrant grass मालव स्वनामख्यातजलजमुस्तायाम् । केओटमूता केउरमूता । षटी भ । गुणा—लघ वृष्या

वह्निमन्थ, मथन (र), जय (आ), गिरिकर्णिका (द्रव्याभि), पावकारणि (शुल्मा), अग्निमथन, तर्कारी, वैजयन्तिका अरणीकेतु, श्रीपर्णी, कर्णिका, नादेयी, विजया, अनन्ता, नदीजा। गुणा —कटूष्णतिक्तवातकफशोफघ्नाग्निमान्द्यार्शी मलविष्टम्भमर्हरी। रा नि व ९। See अग्नि मन्थ। गणिकारीपुष्पवृक्षे। वै निघ।

**गणिकारी**। स्त्री। पुष्पवृक्षविशेषे, कोङ्कण देशे स्वनाम्ना प्रसिद्धे। বাসন্তীফুলের গাছ। म गनेरी। तत्पर्य्याय,—काञ्चनिका, काञ्चन पुष्पी, गन्धकुसुमा, अधिमोदा, वसन्तदूती, वासन्ती, मदनमादिनी। गुणा—अतिसुरभि त्रिदोषघ्नी दाहशोषहरा कामोद्दीपनी च। रा नि व १०। गणिकारिकायाम्।

**गणेरु**। पु। कर्णिकारवृक्षे। কর্ণিকারের গাছ। पारिभद्रवृक्षे। वै निघ। स्त्री। हस्तिन्याम्। मे।

**गणेरुक. (का)**। पु, स्त्री। गणिकारिपुष्प वृक्षे। वै निघ।

**गणेशः (कुसुम)**। पु। रक्तकरवीरवृक्षे। रा नि व १०।

**गणेशप्रिय**। पु। रक्तकरवीरे। "गणेशप्रिय-मूलानि।" अर्कप्रकाश।

**गणेशभूषणम्**। क्ली। सिन्दूरे। रा नि व१३।

**गणोत्साह**। पु। गण्डके। গণ্ডার। त्रिका।

**गण्ड (क)**। पु। खड्गिनि। গণ্ডার। मे। कपोलदेशे। গাল। रा नि व १८। रोगविशेषे। "निबद्धं श्वयथुर्यस्य मुष्कवल्लम्बते गले। महान्वा यदि वा ह्रस्वस्तं गण्डमिति निर्द्दिशेत्॥" सु नि ११ अ। करिकपोले। अम। ग्रन्थौ। चिह्ने। पिटके। मे।

**गण्डकर्ण**। पु। बाह्यदीर्घैकपालिकर्णे। सु सू १६ अ।

**गण्डकारी**। स्त्री। वराहक्रान्तायाम्। वराह-क्रान्ता। श्वेतलज्जालुकायाम्। लज्जावती। र मा। खदिरोवृक्षे। अम। श च।

**गण्डकाली**। स्त्री। खदिरावृक्षे। अम। काक जङ्घायाम्। কেওয়াঠেঙা। मत्स्याक्षीवृक्षे। वै निघ।

**गण्डकी**। स्त्री। खड्गमृगे। श्राध। नकुल १९ अ। स्वनामख्यातनदीविशेषे। मे।

**गण्डकुसुमम्**। क्ली। गजमदे। धारा।

**गण्डगात्रम्**। क्ली। (Annona squamosa) आतावृक्षफले। আতা, নোনা। हि शरीफा। म शीताफल। गुणा—"गण्डगात्र हिम वृष्य वातपित्तनिषूदन। श्लेष्मल तर्षशमन वान्त्युत्क्लेश निपीडनम्॥" अत्रि। श च।

**गण्डगोपालिका**। स्त्री। आम्रवाटिकाश्रय-कीटविशेषे। আমপোকা। हि गण्डगुयारि। भा।

**गण्डदूर्वा**। स्त्री। जलोपरिजायमानदूर्वा विशेषे। দূর্বাবিশেষ, গেঁটে দূর্বা। हि गाण्डरि दुविभाव। म गण्डदूर्वा गाढीहरियाली। क मीनगस। तत्पर्य्याय,—गण्डाली, अतितीव्रा, मत्स्याक्षी, ग्रन्थिला, ग्रन्थिपर्णी, वारुणी, मीननेत्रा, श्यामग्रन्थि सूचिपत्रा, श्यामकान्ता, जलस्था, शकुलाक्षी, कषाया, चित्रा। गुणा—मधुरा शीतला वातपित्तज्वरघ्नी द्वन्द्वदोषघ्नी श्रमहरा श्रमघ्नी च। रा नि व ८। "गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघु। तिक्ता कषाया मधुरा वातकृत्कटुपाकिनी। दाहतृष्णाबलासास्र कुष्ठपित्तज्वरापहा॥" भा।

**गण्डपोलिका**। स्त्री। कीटभेदे। গণ্ডক্ষা।

**गण्डप्रपाली**। स्त्री। कीटविशेषे।

**गण्डफलक**। पु। प्रशस्तगण्डस्थले। প্রশস্ত গাল। वै निघ।

**गण्डमाला**। स्त्री। Inflamation of the glands of the necks &c स्वनामख्यात गलरोगविशेषे। গণ্ডমালা। तस्य सम्प्राप्तिरूपे— "कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु। मेदः कफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः॥" मा नि। "मेदस्था कण्ठ मन्याक्षकक्षावङ्क्षणगा मलाः। सवर्णान् कठिनान् स्निग्धान्वार्त्ताकामलकाकृतीन्। अवगाढान् बहून् गण्डान् चिरपाकांश्च कुर्वते। पच्यन्ते ऽल्परुजस्त्वन्ये स्रवन्त्यन्येऽतिकण्डुराः। नश्यन्त्यन्ये भवन्त्यन्ये दीर्घ कालानुबन्धिनः। गण्डमालापची चैव दूर्व्वेव क्षय वृद्धिभाक्। तां त्यजेत् सज्वरच्छर्द्दिपार्श्वरुक्कास पीनसाम्॥" वा उ २९ अ। "छर्द्दिर्विरेचन स्वेदो नस्य धूम शिराव्यध। अग्निकर्म क्षारयोग प्रलेपो व्रणमानि च। पुराणघृतपानञ्च शीर्षणोहित मालय॥" इति पथ्यापथ्यम्।

**गण्डमालिका।** स्त्री। गण्डमालायाम्। लज्जालुकायाम्। रा नि व ५।

**गण्डरोगः।** पु। श्वयथु मुखरोगभेदे। गण्डा भ्यन्तरगो गण्ड गण्डरोग इति स्मृत।" ज द २९ श।

**गण्डशैलः।** पु। ललाटे। हे च।

**गण्डस्थलम्।** क्ली। कपोलदेशे। वै निघ।

**गण्डाङ्गः।** पु। खड्गिनि। गण्डार। श च।

**गण्डारिः।** पु। कोविदारवृक्षे। रक्तकाञ्चन गाछ। भा। मत्स्यविशेषे। वै निघ।

**गण्डारी।** स्त्री। मञ्जिष्ठायाम्। मे।

**गण्डालजी।** स्त्री। गण्डरोगे। लक्षण— "गण्डालजी स्थिर शोफ गण्डे दाहज्वरान्वित॥" या उ २१ श।

**गण्डालिनी (ली)।** स्त्री। गण्डदूर्व्वायाम्। रा नि व ८। श्वेतदूर्व्वायाम्। श्रम। सर्पाक्ष्याम्। सुगन्ध वाला। भा।

**गण्डास्थि।** क्ली। कपोलास्थिद्वये। च शा ७ श। सु शा ५ श।

**गण्डि** । पु। वपुषि। कण्ठमणौ। तरुशाखायाम्। वै निघ। तरुकाण्डे। हे च।

**गण्डिरिका।** स्त्री। स्नुहीवृक्षे। चक्र।

**गण्डीर.।** पु। शाकविशेषे। गण्डिनी, शालिञ्च, समठ शाक, शुनठिया। श टी भ। च सू ४ श। मञ्जिष्ठायाम्। स्नुहीवृक्षे। रा नि व ८। कटुसूरणे। वै निघ।

**गण्डीराद्यतैलम्।** क्ली। मण्डलकिटिमादि कुष्ठरोगेषु हितम्। "गण्डीरिकाचित्रकमार्कवार्क कुष्ठद्रुमत्वग्लवणे समूत्रे। तैलम्पचेत्" तैल ८ श गोमूत्र १६ श। कल्क—स्नुही क्षीर वा मञ्जिष्ठा, चित्रकमूल, भृङ्गराज, आकन्द-आटा, कुड़, दूटसदन्दे वा सोणालु-छाल एवं सैन्धव लवण मिलित १ श। चद।

**गण्डीरिका (री)।** स्त्री। स्नुहीवृक्षे। पनसा सिजु, तेकाँटा सिजु। रा नि व ८। च द गण्डीराद्यतैले। मञ्जिष्ठायाम्। प नु। शाक वि। पे। भा म प्रमाद चि। स्त्री। रक्तकाण्ड वृक्षे। वै निघ मञ्जिष्ठा चि शार्ङ्गदेवे।

**गण्डुः।** पु, स्त्री। ग्रन्थौ। वै निघ। उपधाने। जटा।

**गण्डूपदः।** पु। किञ्चुलुके। केँचो। श्रम।

**गण्डूपदभवम्।** क्ली। शीसके। हे च।

**गण्डूपदाद्यतैलम्।** क्ली। नासारोगे हितम्। कटुतैल ४ श पाकार्थजल १६ श कल्कार्थगण्डूपद (केँचो) १ श। अथवा कटुतैल १ श कल्कार्थगण्डूपदद्शक (केँचो १०टा) च द।

**गण्डूपदी।** स्त्री। जलपिप्पल्याम्। वै निघ। क्षुद्रकिञ्चुलुकायाम्। श्रम। तत्पर्य्याय,—शिली (श), सिली (श टी भ)।

**गण्डूली।** स्त्री। गण्डदूर्व्वायाम्। वै निघ।

**गण्डूष. (धारण)।** पु, क्ली। चुलुके। गण्डुष। स्नेहक्षीरकषायादिद्रवैर्मुखापूरण गण्डूष। आपूर्य च मुखेन धारण गण्डूषधारणमुच्यते। तस्य द्रव्य मात्रा द्रवद्रव्य पलमात्र सूक्ष्मचूर्णस्य च कोलपरिमाणम्। तद्धारणमात्रा—"आसञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता।" च द। तत्र गण्डूषधारण तावत्कार्य्यं यावत्कफपूर्णास्यता दोष च्छेद नेत्रघ्राणस्रुतिश्च भवेत्। गण्डूषश्चतुर्विध स्नेहनशमनशोधनरोपणभेदेन। "स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादन। पित्ते कटूम्ललवणैरुष्णैः संशोधन कफे। कषायतिक्तमधुरै कटूष्णो रोपणो व्रणे। इति। दद्याद्द्रवेषु चूर्णञ्च गण्डूषे कोल मात्रकम्। कर्षप्रमाण कल्कञ्च कवले दीयते बुधैः। धार्य्यन्ते पञ्चमाद्वर्षाद्गण्डूषा कवलादय। व्याधेरपचयस्तुष्टिर्वैशद्य वक्त्रलाघव। इन्द्रियाणां प्रसादश्च गण्डूषे विधृते भवेत्॥" भा। आसञ्चारी मुखे पूर्णे गण्डूष कवलोऽन्यथा। द्रवेषु दद्याच्चूर्णं हि गण्डूषे कर्षमात्रकम्॥ पलमात्र द्रवं सम्यग् गण्डूषे दापयेद्बुध। द्रवेण कार्य्यो गण्डूष कल्केन कवल स्मृत। कल्क शकलरूप स्यान्न तु सूक्ष्म प्रदापयेत्॥ एकद्वित्रिचतुःपञ्चवारान् कुर्य्याद्दिनान्तस। कवित्रयस्याद्यभागे। प्रकृतिपरिमिते। शा।

**गण्डूषा।** स्त्री। गण्डूषे। श।

**गण्डोल'।** पु, क्ली। गुड़े। सिका। शर्करायाम्। ग्रासे। वै निघ।

**गतशोक।** पु। अशोकवृक्षे। धा सु १५ श रोपादि।

**गतमज्जक** । पु । निमद दर्प्पिनि । श ।

**गतार्त्तवा** । स्त्री । निवृत्तरजस्कायां वृद्धायां स्त्रियाम् । रा नि व १८ ।

**गतासू** । त्रि । मृते ।

**गति (क)** । स्त्री, पु । नाडीभेदे । नाली नाडीव्रण । ना । अश्वस्य गतिविशेषे । घोड़ार चाल, दमन । अ । तद्यथा—"गडौधा विकट मदान्धका सौष्ठववर्जिता । अप्लुता वलिता चैव वाजिनां निन्दिता गति ॥ पीड़यन्वीटिकाभिस्तु कवेष्टितजानुभि । ग्रते द्विगुणितद्रुत्वा इस्तात्तां पुनरेति य । स धौरगतिरित्युक्तो वाजी धन्य सपीधन । दश हीना भवन्त्येते मध्यमाधमगा ह्यया ॥ दूरमुत्क्षिप्य य पादांस्त्वाग्रपाद्भाराम् स्पृश न्निव । पुनर्याति सुसंहृष्टो वाजी भद्रगतिस्तु स ॥ पूजिता वृषमातङ्गसिंहशार्दूलगामिन । अतोऽन्य गतयो नेष्टा मत्स्यदव तुरङ्गमा ॥" ख द ७प । "गतय षड विधा धारा स्कन्दित रेचित प्लुतम् । धौरितक वल्गितञ्च तासां लक्ष्म पृथक पृथक् ॥" इति श्रुक । "धारित वलित प्लुत्युत्तेजितोत्तेजितानि च । गतय पञ्च धाराख्यास्तुरङ्गाणां क्रमादिमा ॥" इ च । "गति प्लुता चतुष्का च [illegible]इन्मध्यजवापरा । पूर्णवेगा तथा चान्या पञ्च [ध]ारा प्रकीर्त्तिता ॥ "गतिरेका प्लुता चास्य [च]तुरीया द्वितीयका । वेगसन्निभतृतीया च धारा [ज]वती तुरी ॥ धारा तु पञ्चमी प्रोक्ता न शृणोति [न] पश्यति । सम्यक्कमहतो वाजी तस्यास्ता परि[व]र्ज्जयेत् ॥" नकुल ।

**[गद]तिला** । स्त्री । नदीविशेषे । ह ।

**[ग]दम्** । स्त्री, पु । विषे । कुष्ठौषधौ । कूड़ । [रा] नि व ६।१२ । दै निघ अन्तकसन्निपात चि । [र]ोगे । रा नि व २० ।

**[गदा]ढ्य** । पु । मन्दीवचे । दै निघ ।

**[गदनिश्चय]** । पु । माधवीय रोगनिश्चयग्रन्थे ।

**[गद]सुरारि** । पु । शीताङ्गज्वरे रस । "रस [इ]ल्लिमिलवीरव्योषताम्राणि तुल्यान्यथ मदरदनाग [र]सैतत् प्रदिष्ट, भवति गदसुरारिर्यासस गुञ्जाद्वय " [पा]र, गन्धक, मनःशिल लौह, त्रिकटु [ता]म्र हिङ्गुल, सीसा प्रत्येक समभाग । [र] सा स ।

**गदविनोदनिघण्टु:** । पु । वैद्यकनिघण्टु भेदे ।

**गदहर (री (इन्))** । पु । वैद्ये । वै निघ ।

**गदा** । स्त्री । पाटलावृक्षे । श च ।

**गदाख्यम्** । क्ली । कुष्ठ । कूड । र मा ।

**गदागदौ** । पु द्वि । अश्विनीकुमारौ । त्रिका ।

**गदाग्रणी** । पु । यक्ष्मरोगे । रा नि व २० ।

**गदाम्बर** । पु । मेघे ।

**गदायुध** । पु । लगुडे । लाठि ।

**गदाराति** । पु । औषधे । रा नि व २० ।

**गदार्त्तिका** । स्त्री । गोजिह्वायाम् । पा [ल]ङ्ग शूचि । वै निघ ।

**गदाह्व(य)म्** । क्ली । कुष्ठे । कूड़ । श र ।

**गदी (इन्)** । त्रि । रोगिणि । वै निघ ।

**गद्गद** । पु । वातव्याधिविशेषे । তোৎলা । सु सू १७ । See मिन्मिन ।

**गद्याण** । पु । षटमाषके । कलिङ्ग ।

**गद्यान(ल)कम्** । क्ली । षट्चत्वारिंशद् गुञ्जा माने । लीला । षत्षष्टिक गुञ्जामाने । की ।

**गन्ता** । त्रि । सञ्चरणशीले । सु शा ३ अ ।

**गन्त्री** । स्त्री । गोशकटे । अ । गरुर गाड़ी ।

**गन्धम्** । क्ली । अगुरुणि । कृष्णागुरुणि । रा नि व १२ ।

**गन्ध (क)** । पु । (Sulphur) स्वनामख्यात खनिजोपधातौ । गन्धक । हि गन्धक । फार्सि गोगिर्द । तत्पर्य्याय —गन्धाश्म, सौगन्धिक (अ), गन्धिक, सुगन्धिक (अ टी), गन्ध पाषाण, पामाघ्न (र), पामारि शुल्वारि (हे,) गन्धी (शब्द), गन्धमोदन, पूतिगन्ध, वर, सुगन्ध, दिव्यगन्ध, गन्ध, रसगन्धक कुष्ठारि, क्रूरगन्ध, कीटघ्न, शरभूमिज । "श्वेतद्वीपे पुरा देव्या क्रीडन्त्या रजसाप्लुत । दुकूल तेन वस्त्रेण स्नातायाम् क्षीरनीरधौ । प्रसृत यद्रजस्तस्माद्गन्धक समजायत ॥" भा । स च रक्तपीतश्वेतकृष्ण त्वात् चतुर्विध । पीत औषधेषु, श्वेत चर्म्म रोगेषु बाह्यप्रयोगेषु च व्यवहार्य्य । र सा स । "चतुर्धा गन्धक प्रोक्तो रक्त पीत सितोऽसित । रक्तो हेमक्रियासूक्त पीतश्चैतो रसायने । कृष्णादि

लेपने श्वेत कुष्ठ च्चेत दुर्दुर्लभ ॥ गुणा—कटुक वीर्य्योष्णमुष्ण सर'। विपाक कटुक पाके कण्डू वीसर्पजन्तुजित्। हन्ति कुष्ठक्षयप्लीह कफवातान् रसायन ॥ अमोघित्री गन्धक एव कुष्ठ करोति ताप विपत्र शरीरे। शोधन रुपत्त बल तथोज शुक्र निहन्त्येव करोति चाशम् ॥" भा पु १भ। तच्छुद्धि—"लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्। तप्ते तस्य समानञ्च नि क्षिपेद् गान्धक रज। विद्रुतङ्गन्धक ज्ञात्वा दुग्ध मध्ये निधापयेत्। एव गन्धकशुद्धि स्यात्सर्व्व कार्य्येषु योजयेत् ॥" एष विफलाजलभृङ्गराज स्वरसादौ निक्षिपेदिति मतान्तरम्। सा को। शुद्धगन्धकगुणा—"शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्यु ज्वरादिकान्। अग्निकारी महानुष्णो वीर्य्यवृद्धि करोति च॥" र सा स पू ख। आमीरे। विश्व। कुष्ठरोगे। वै निघ। शोभाञ्जनवृक्षे। श र। गन्धरसे। वै निघ।

**गन्धककज्जलिः**। पु। सन्निपातज्वरे देय। पाठ—"कण्टकारी सिन्धुवारस्तथा नाटकरञ्जक। अमीषां रसमादाय ज्ञात्वा खर्परखण्डके। प्रक्षिप्य गन्धक तत्र ज्वालां शनैर्विना दहेत्। गन्धके सैव तापन्ने पारद तत्समक्षिपेत्। मिश्रीकृत्य ततो हाभ्यां द्रव समवतारयेत्। आमर्द्दयेत्तया तन्तु यथा स्यात् कज्जलप्रभम्। ततस्तु रक्तिकामस्य जीरकस्य च माषक। माषैक लवणस्यापि पर्णे ज्ञात्वा प्रदापयेत्। ज्वरे त्रिदोषजे घोरे सन्निपाते विनिर्दिशेत् ॥" रस र।

**गन्धकतैलम्**। क्ली। कर्णनाड्यां हितम्। 'निशागन्धपलेन तु कटुतैलं पलाष्टकं। धूस्तूरपत्र रसे सिद्धं कर्णनाडीजिदुत्तमम् ॥" कटुतैल ८ प धुस्तूरपत्ररस ८ प। कल्क—हरिद्रा १ प गन्धक १ प एकत्र पचेत्। रस र।

**गन्धकद्रावकम्**। अकीकृतगन्धकविशेषे। आ। See गन्धद्रावम्।

**गन्धकन्दकः**। पु। कशेरौ। रा नि व ८।

**गन्धकाली**। स्त्री। प्रियङ्गौ। च द विष चि। चम्पककलिकायाम्।

**गन्धकस्तुरिका**। स्त्री। ख्यातिनामख्यात गन्ध द्रव्यविशेषे।

**गन्धकारी**। स्त्री। श्वेतलज्जालुके। शल्लकी वृक्षे। वै निघ।

**गन्धकाष्ठम्**। क्ली। अगुरुकाष्ठ। विश्व। शवरचन्दने, पीतचन्दने। रा नि व १२। दारुहरिद्रा। वै निघ।

**गन्धकी**। स्त्री। सहदेव्याम्। भालुई। च द बा व्या एकादशघृती प्र सेवे।

**गन्धकुटी**। स्त्री। मुरामांस्याम्। रा नि व १२।

**गन्धकुसुमा**। स्त्री। कोडपुष्पी ख्याति गणि कारीपुष्पवृक्षे। रा नि व १०।

**गन्धकेलिका**। स्त्री। कस्तूर्य्याम्। रा नि व १२। गन्धमार्जार्याम्। वै निघ।

**गन्धकोलिका**। स्त्री। गन्धमार्जारवीर्ये गन्ध द्रव्यविशेषे। गुणा "स्निग्धोष्णा कफहृद्धिका सुगन्धा गन्धकोलिका। गन्धकोलिकया तुल्या विज्ञेया गन्धमालती ॥" भा क व।

**गन्धखेड(क)म्**। क्ली। गन्धवीरणे। गन्ध वेणा। तत्पर्य्याय,—गन्धवीरण, भूतृण, रौहिष, गोमयप्रियं (२), शष्पतृण, सुगन्धभूतृण, सुरभ, सुरभि, सुगन्धि, सुखवास। एतत् सुगन्धि डपित्तघ्न रसायन स्निग्ध मधुर शीतल कफपित्त श्रमहरञ्च। रा नि व ८।

**गन्धगर्भः**। पु। बिल्ववृक्षे। वै निघ।

**गन्धजटा**। स्त्री। मुरामांस्याम्। वै निघ।

**गन्धग्राही**। स्त्री। नासिकायाम्। वै निघ।

**गन्धचन्दनम्**। क्ली। सुन्दरचन्दने। श्वेत चन्दने।

**गन्धचेलिका (ली)**। स्त्री। लताकस्तूर्य्याम्। प सु। कस्तूर्य्याम्। मृगनाभि। विका। जवादि कस्तूर्य्याम्। थाटोशी। वै निघ।

**गन्धजातम्**। क्ली। तेजपत्रे। श र।

**गन्धज्ञा**। स्त्री। नासायाम्। हे च।

**गन्धतण्डुल**। पु। सुगन्धशालौ। रा नि व १६।

**गन्धतिरियः**। पु। तिरियनाम शालिधान्य विशेषे।

**गन्धतुलसी**। स्त्री। सुगन्धतुलसीक्षुपे। दुलाल तुलसी, गोलापतुलसी। प सु।

**गन्धतूर्य्यम्**। क्ली। वाद्यविशेषे। तत्पर्य्याय,—रणतूर्य्य, महास्वन (अमर)।

**गन्धतृणम्**। क्लौ। Andropogon schoenanthus ) स्वनामख्याततृणे सुगन्धभूतृणे च। गन्धतृण, सुगन्धि तृण। गुणा—सुगन्धि तृंष तिक्त रसायन मधुरशीतं कफपित्तशमनञ्च। रा नि व ८। बालके। वै निघ।

**गन्धतैलम्**। क्लौ। पक्वतैलविशेषे। आवर्त्तमान दुग्धे गन्धकरजो दत्वा तज्जातदधिज इत गन्ध तैलमुच्यते। इद भग्नत्वक्‌ष्ठे भिषग्भसणाङ्गितम्। "आवर्त्तमाने पयसि दत्वा गन्धकज रजः। तज्जातदधिज सर्पिर्गन्धतैल वदन्ति हि। गन्धतैल भग्नत्वक्‌ष्ठ हन्ति निपातु भक्षणात्॥" अपि। मतान्तर यथा—"अर्कक्षीरे स्नुहीक्षीरैर्वस्त्र लेपयेत् सप्तधा। गन्धक नवनीतेन पिष्टा वस्त्र प्रलेपयेत्। तद्वर्त्तिर्ज्वालिता दण्डे धृता धार्य्या लधीमुखी। तैल पतत्यध पात्रे ग्राह्य योगेषु योजयेत्॥" भैष। अपत् भग्नरोगे हितम्। सु चि ३ अध्याय। अपर सप्तधमरधाधिकारे। चतु शरावो चितकृष्णतिलान् गृहीत्वा वस्त्रेण पोट्टलीबद्धान् कृत्वा स्रोतोजले निमज्ज्य रात्रौ स्थापयेत। ततो दिवसे आतपे शोषयेद्दिनसप्तक यावत्। तत्तिल तुल्यपरिमाणे गव्यदुग्धे रात्रौ तिलान् प्रक्षिप्य दिवा प्रक्षाल्य आतपे शोषयेत्। तदनुभाव्यद्रव्य समष्टिमधुकक्वाथेन तत्‌ पुन क्षीरेण विभाव्य शोषयित्वा चूर्णयेत। अथ काकोल्यादिचूर्ण तिलचूर्ण चतुर्थांश वा सम वा गृहीत्वा तिलचूर्णेन मेलयेत्। तत एलादिगन्धद्रव्यस्य क्षीर तावन्मात्र ग्राह्य यावता पीडनार्थं समस्त तिलादिचूर्णम् आर्द्र भवेत। ( इति क्षीरपदेश।) एवविध निष्पीडित तैल काकोल्यादिशतपुष्पाकल्केनथा एलादिशृङ्गाटकाम्ल कल्काभ्य तैलचतुर्गुणजलेन यथाविधि पाच्य। क्षीरशुक्ला क्षीरविदारी, अनन्ता दूर्वा, मधूलिक मर्कटहस्ततृणम्। च द।

**गन्धत्वक्**। स्त्री। एलबालुके। रा नि व ४।

**गन्धदला**। स्त्री। अजमोदायाम्। वनयमानी। रा नि व ६।

**गन्धद्रव्यम्**। क्लौ। पक्वतैलसुवासनद्रव्ये। गन्धमसला। तानि यथा—"एलाचन्दनकुङ्कुमा गुरुमुराकक्कोलमांसी शटीश्रीवासच्छदशिपर्वकश्रम धनुषीलीश्वकीक्षीरकम्। कस्तूरीनखपूतिगन्धजन मुस्तचोलवचादिक गन्धद्रव्यमिद प्रदेयमखिल भौतिकतैलादिषु॥" च द। अन्यत्र यथा—कुष्ठञ्च नालिका पूतिरशीर श्वेतचन्दन। जटा मांसी तेजपत्र नखी मृगमद फल। कक्कोर कुङ्कुमश्रीवेष्ट सताकस्तूरिका तथा। सूक्ष्मैला गुरुसूक्ष्म कर्पूर ग्रन्थिपर्णकम्। श्रीवास कुन्दुरु दवकुसुमङ्गन्धमातृका। सिह्लकी मिसिका मेथी भद्रमुस्त तथा शटी। जातीकोष शैलजञ्च देव दारु सजीवकम्। एतानि गन्धद्रव्याणि॥" तच्छुद्धादिक पञ्चपल्लवतोयेन भवति। "आम्र जम्बूकपित्थानां बीजपूरकबिल्वयो। गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम्॥" भैष। गुणा—रुच्य दीपन पाचन मुखदौर्गन्ध्यहर मेदःशमनञ्च। रा नि व।

**गन्धद्रावकम्**। क्लौ। अर्कीकृतौषधविशेषे। द्रावकविशेष। साधनविधि यथा—"काशीष गन्धक चापि सन्देहद यत्नयोगत। क्षीरकञ्चापि (सोरा) सन्देह द्वयोर्धूम विनिःसयेत्। शीश पात्रे स्वबाष्पेण द्रावक तेन जायते॥ निर्जल तम्र सेवेत पर दाहकर हि तत्। चतुर्दशगुणे तोयेयुत बिन्दुमित पिबेत्॥" अपि।

**गन्धधूमज**। पु। आदिनि अगुरुसारे। स्वाङ्ग अगुरु। रा नि व १२।

**गन्धधूलि (ली)**। स्त्री। कस्तूर्याम्। इ च।

**गन्धनकुल**। पु। कुच्छुन्दर्याम्। छूँचो। इरा।

**गन्धनाकुली**। स्त्री। रास्नायाम। अम। (Ophioxylon serpentinum) नाकुली नामकन्दशाकभेदे, गन्धरास्नायाम्। सुगन्ध नाकुली, गरुडाक्ष। हि नाइ। तत्पर्य्याय,— महासुगन्धा, सुवहा, सर्पाची, फणिहन्त्री, नकुलाख्या, अहिभुक्, विषमर्द्दिनिका, अहिमर्द्दनी, विषमर्द्दनी, महाहिगन्धा अहिलता। गुणा— 'नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूताहश्चिकाखुविषज्वरकृमिव्रणान्॥" भा। कटुतिक्तोष्णा त्रिदोषघ्नी नकुल्या इष्वङ्गेहा च। रा नि व ६।

**गन्धनामा (म्नी)**। पु। रक्तपुष्पतुलस्याम्। म सुवासिक औषधिविशेष। र मा। स्त्री (म्नी)। सम्राटक क्षुद्ररोगभेदे। दगुगळ फोड़ा। "ताम्रमी महती लेश्या गन्धनामेति कीर्त्तिता। वा उ १ अ। अन्यत्र यथा—"एकामताम्रां तथा विरुक्ता

फूलमय गन्धबोल। विक्रा। तत्पर्य्याय,— बोल, प्राण, पिण्ड, पिण्डल, गोप, रस (थ), रसगन्ध, गोस, विटगोस, शश, गोसशश (थ स्त्री), गान्धार, नसिवद्धन (त्रि) गोपरस, बोलज, गोपज, गोपक (शब्दर)। खट्टासि कायाम्। थाटाशी। थ द था थ्या प गादि तेवे। (सा) स्त्री। सुरामांदाम्। ० निघ।

**गन्धरसाङ्कः।** पु। श्रीवेष्टनाम गन्धद्रव्ये। रा।

**गन्धराजः (क)।** पु, क्ली। सुन्दरपुष्पवृक्ष। गन्धराय फूलेर गाछ रा नि व १०। स्वनाम ख्यातद्रव्ये। थाटाशी गन्धराज। See जवादि। कणगुग्गुली। श्रीखण्डचन्दने। श्वेत चन्दन। कृष्णागुरुणि। रा नि व १२। नवीनामगन्धद्रव्य। वै निघ।

**गन्धराजतैलम्।** क्ली। वातव्याधी तैल। पाठ —"तिलतैलाढके त्रिया तक्रं तत्परिमाणकम्। वचाचतुष्पल दत्त्वा गुण तच चतुर्गुणम्॥ त्रिफलाया पलायष्टौ मञ्जिष्टायास्तथैव च। पुनरष्ट पलान्यस्या अर्द्धदग्धानि दापयेत्॥ पूगचैलशटीपत्र शरणाम्बुदरारुण। पलाष्टौ विनिक्षिप्य घृतस्य तु पलद्वयम्॥ आद्ये पाके पचेदित्य तैल याव चतुर्गुण। नालिकापरद्भुव्यास्तत पाकमथरमुध। चण्डादलमसन्तचालक्पचीकोलशैलज। त्रिपाक्ष बोरणग्रन्थिदेवताकुसुमानि च॥ प्रत्यकर्मधाचत्वारि पलान्यादाय गान्धिक। पाकं द्वितीय तैलस्य कारयेत् क्रमयोगत॥ पृक्का मांसी मुरा लाक्ष मदन छत्रिकामलो। न गुरु काष्टखोटी च चम्पकाट प्रियङ्गव॥ एषां खट्टासिकायाय प्रत्येकस्य पल द्वयम्। आदाय कारयेत्पाक तृतीयगन्धमीदिद॥ फलिलावलताकोलफलैलागुरुसिल्हके। लङ्कोपा कैर्हिपलिकैरिति पाकश्चतुर्थक॥ वेध पलपुरीने न्दीर्मदश्च त्वष्टमि पले। गन्धराजाख्य तैलमिद नृपमनोहरम्॥" তিলতৈল ১৬ শ তক্র ১৬ শ কাঞ্জি ৬০ শ কল্কার্থ—যথাবিধি বচ ৪ প ত্রিফলা, মঞ্জিষ্ঠা, অর্দ্ধভৃষ্ট মঞ্জিষ্ঠা প্রত্যেক ৮ প গুবাকপুষ্পত্বক্, তেজপত্র, শটী, সরল কাষ্ঠ, মুতা, দেবদারু মিলিত ৮ প কুক্কুর-খোটী ২ প ইহাদের দ্বারা প্রথম গন্ধপাক করিবে। শোধিত চোরহুলী, তেজপত্র নল বা মৌরী, গুড়ত্বক্ নলা, শিলারস এলা, কুড়, দেবহুলী, গেঁঠেলা, উশীর প্রত্যেক ৪ প পূর্ব্ববৎ ছাঁকিয়া ইহাদ্বারা ২য় গন্ধ পাক করিবে। শুক্ত পিডিং, জটামাংসী, মুরামাংসী, বালা, লবঙ্গ, ছত্রীপুষ্প (ছলনা), ভৃষ্ট আমলা, অগুরু, নবগখোটী, চম্পক পুষ্প, নাগপুষ্প, প্রিয়ঙ্গু, খাটাশী প্রত্যেক ২ প ৩য় গন্ধপাক। শ্বেত চন্দন, নবদ্বশটী, বচুলী, কঙ্কোল, জায়ফল, এলাচ, অগুরু, শিলারস, গুড়ত্বক্, জয়িত্রী, কুঙ্কুম প্রত্যেক ২ প ৪র্থ গন্ধপাক। ছাঁকিয়া কর্পূর ১৮তো মৃগনাভি ৬৪ তো মিশাইবে। রস র।

**गन्धराजी।** स्त्री। नद्याम्। नदी। प्र प।

**गन्धराट् (ज)।** पु। धूनके। धूना।

**गन्धरुहा।** स्त्री। वनमल्लिकायाम्।

**गन्धर्व्वः।** पु। श्वेतकरवीरे। श्वेतैरण्डे। च द वा रक्त चि अमरतायएते। कस्तूरीमृगे। अश्वे। अश्व। कोकिले। रा नि व २१। क्ली। कैरवे।

**गन्धर्व्वगन्धः (न्धा)।** पु, स्त्री। अश्वगन्धायाम्। भा म ४ भ वायुरोगे। च ख वाजी।

**गन्धर्व्वग्रह।** पु। उन्मादविशेषे। "हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचार प्रियगीतगन्धमाल्य। नृत्यन् वै प्रहसति चारु चाल्पशब्द गन्धर्व्वग्रहपरि पीडितो मनुष्य।" मा नि।

**गन्धर्व्वतैलम्।** क्ली। एरण्डतैले। भा।

**गन्धर्व्वभूषणम्।** क्ली। सिन्दूरे। वै निघ।

**गन्धर्व्वशाका।** स्त्री। भाग्याम्। वामनहाटी। र भा।

**गन्धर्व्वहस्तः (क)।** पु। एरण्डवृक्षे। हारा।

**गन्धर्व्वहस्तकतैलम्।** क्ली। प्रवाहणाधिकारे तैलम्। पाठ —"शतमेरण्डमूलस्य पलं मुख्या यवाढकम्। जलद्रोणे विपक्तव्य यावत्पादावशेषितम्। तेन पादावशेषेण पयसा तत्समेन च। प्रस्थमेरण्ड तैलस्य तन्मूलाच्च चतुष्पलम्। त्रिपल शृङ्गवेरस्य सर्व्वं दत्त्वा विपाचयेत्॥" रस र।

**गन्धर्व्वी।** स्त्री। नीलिकिनायाम्। वै निघ।

**गन्धल।** पु। सुगन्धि व्रीहिभेदे।

**गन्धलता।** स्त्री। प्रियङ्गौ। भा म १भ रक्तपित्ते चि।

**गन्धला** । स्त्री । प्रियङ्गौ ।

**गन्धलोलुपा** । स्त्री । मक्षिकायाम् । श र ।

**गन्धवती** । स्त्री । त्रिपुरमल्लिकायाम् । प सु । वनमल्लिकायाम् । सेउति । र मा । सुरामांस्याम् । रा नि व १२ । सुरायाम् । नी । वालीशपत्रे । वनयमान्याम् । वै निघ ।

**गन्धवर्णा** । स्त्री । महाबलायाम् । वै निघ ।

**गन्धवल्कलम्** । क्ली । गुडलङ्गाभगन्धद्रव्ये । दारुचिनि । रा नि व ६ ।

**गन्धवल्लरी (वल्ली)** । स्त्री । महाबलायाम् । प सु । पीतपुष्पदण्डोत्पलायाम् । डानिपोला । र मा ।

**गन्धवह, (वाह, का)** । पु । कस्तूरीमृगे ।

**गन्धव(वा)हा** । स्त्री । नासिकायाम् । रा नि व १८ । हे च ।

**गन्धवाकुची** । स्त्री । लताकस्तूर्याम् ।

**गन्धवासिनी** । स्त्री । सुरामांस्याम् । वै निघ ।

**गन्धवाही** (हन्) । पु । वायौ । रा नि व २१ ।

**गन्धविह्वल** । पु । गोधूमे । वै निघ ।

**गन्धवीज** । पु । कुलिञ्जनवृक्षे । वै निघ । (जा) स्त्री । मथिकायाम् । रा नि व ६ ।

**गन्धवीरा** । स्त्री । सल्लकीवृक्षे । वै निघ ।

**गन्धवृक्ष (क)** । पु । शालवृक्षे । सर्जवृक्षे । रा नि व ९ । शाकतरौ । वरुणवृक्षे । वै निघ ।

**गन्धवे (बो) धिका** । स्त्री । कस्तूर्याम् । वै निघ ।

**गन्धवेष्ट** । पु । धूनके । धुना ।

**गन्धव्याकुलम्** । क्ली । कक्कोले । श च ।

**गन्धशटी** । स्त्री । स्वनामख्यातौषधौ । गन्धपलाश्याम् । गन्धशटी, गन्धपलाशी । श र । See गन्धपलाशी ।

**गन्धशाकम्** । क्ली । गौरसुवर्णशाके । रा नि व ७ ।

**गन्धशालि** । पु । सुगन्धशालिधान्यविशेष । सुगन्ध धान, कनकशालि । प सु । तत्पर्याय, —कलाप, गन्धालु, कलमोत्तम, सुगन्धि, गन्धबहल, सुरभि गन्धतण्डुल, सुगन्धिशालि । गुणा—मधुर. अतिहृद्य पित्तदाहादिविरमण शान्तिकर सन्तर्पक गर्भस्थिरतादायक दृष्यदात कर पुष्टिकर ईषत्कफकर बलदश्च । रा नि व १६ ।

**गन्धशुण्डिनी** । स्त्री । छुच्छुन्दर्याम् । रा नि व १९ ।

**गन्धशेखर.** । पु । कस्तूर्याम् । मृगनाभि । हारा ।

**गन्धसम्भवा** । स्त्री । सुगन्धशालौ । रा नि व १६ ।

**गन्धसार** । पु । चन्दनसामान्ये । प सु । श्रीखण्डचन्दने । श्वेत चन्दन । रा नि व १२ । "घनसारो गन्धसार ।" सा कौ । गन्धशट्याम् । रा नि व ६ । मुद्गरपुष्पवृक्षे । रा नि व १० । गन्धजे । वै निघ ।

**गन्धसारण** । पु । वृक्षभल्ल्याम् । र मा ।

**गन्धसूची** । स्त्री । आम्रातके । म आमाडी । वै निघ ।

**गन्धसूयी** । स्त्री । छुच्छुन्दर्याम् । वै निघ ।

**गन्धसेवि** । क्ली । रोहिषतृणे । भीमकर्पूर । वै निघ ।

**गन्धसोमम्** । क्ली । कुमुदे । नालफुल । श्वेत कमल । त्रिका ।

**गन्धसोमजम्** । क्ली । रक्तकैरवे । रक्तकमल ।

**गन्धहारिणी** । स्त्री । तुलस्याम् । भ ।

**गन्धा** । स्त्री । मङ्गल्यागुरुणि । शट्याम् । रा नि व १२ । अजमोदायाम् । रा नि व ६ । शालपर्ण्याम् । च टी भ । वनतुलस्याम् । वचालोचनाभेदे । छुच्छुन्दर्याम् । प्रियङ्गौ । वै निघ । सुवर्णचम्पककलिकायाम् । श र ।

**गन्धाखु** । पु । छुच्छुन्दर्याम् । छुँचो । हारा ।

**गन्धागुरु** । क्ली । मङ्गल्यागुरुणि । वै निघ ।

**गन्धाजीव** । पु । गन्धवणिजि । जटा ।

**गन्धाघ्राता** । स्त्री । गन्धानुभवे । वै निघ ।

**गन्धाढ्यम्** । क्ली । चन्दने । श्रीखण्डचन्दने । श्वेत चन्दन । गन्धराजे । थाटोनी । रा नि व १२ । बकुलपुष्पे । वै निघ । पुं । नागरङ्गे । रा नि व ११ ।

**गन्धाढ्या** । स्त्री । स्वर्णयूथिकायाम् । तरण्यौ

पुष्पवृक्षे । आरामशीतलायाम् । पत्रशाकविशेष । रा नि व १० । वनबीजपूरवृक्षे । बुनो लेबू । मुरामांस्याम् । रा नि व ११।१२ । सुगन्धशाली । रा नि व १६ । गन्धाढ्याम् । गीधालि । श च । कस्तूर्याम् । मृगनाभि । जवादिकस्तूर्याम् । अरण्य शेफाल्याम् । कृष्णविशेष । जातीपत्राम् । वै निघ । गन्धपत्रायाम् ।

**गन्धादि** । क्ली । तृणकुसुरे । वै निघ ।

**गन्धाधिकम्** । क्ली । तृणकुङ्कुमे । रा नि व १२ ।

**गन्धाधि(रि)का** । स्त्री । महाशतावर्याम् । वृषका, वड़िशोप । रा नि व ४ ।

**गन्धाली** । स्त्री । सुगन्धशाली । धूम्रपत्रायाम् । रा नि व १६।२३ ।

**गन्धालु** । पु । सुगन्धशाली । रा । दण्डाली । द्रव्याभि ।

**गन्धान्न:** । पु । गन्धशाली । प सु ।

**गन्धामृतरस.** । पु । वाजीकरणोक्त रसविशेषे । "भजसत त्रिधा गन्धं अपवर्त्तां विमर्दयेत् । कुडा लघुपुटे पच्याल्लेहयेन्मधुसर्पिषा । निष्कमात्र जरा मृत्युं हन्ति गन्धामृतो रस ॥" रस र ।

**गन्धाम्बु** । क्ली । गन्धोदके । चक्र ।

**गन्धारि. (री)** । स्त्री । दुरालभायाम् । रक्त दुरालभायाम् । गन्धपलाश्याम् । आम्रहरिद्रायाम् । वै निघ ।

**गन्धरिका** । स्त्री । शटीभेदे । भा ।

**गन्धाल (लु)** । पु । गन्धशाली । रा नि व १६ । दण्डालुके ।

**गन्धाला** । स्त्री । अग्निमन्थक्षुपे । वै निघ ।

**गन्धालि. (लिका) (ली)** । स्त्री । गन्धश ट्याम् । प सु । (ली) प्रसारण्याम् । गन्धभादाल । तत्पर्याय,—प्रसारणी, भद्रपर्णी, कटम्भरा (र), सरणा, सरणी (शब्दर), गन्धाल्या, गन्धभद्रा (श), सरणा, राजबला, भद्रबला (च), गन्धोली, मारणी (ज), मारणी (उ), सरणी (अ टी) सा कौ । जातीफलायाम् । कीटविशेषे । [illegible] पोका । वै निघ ।

**गन्धाश्लोगर्भ:** । पु । मूर्च्छायाम् । गा नि व १२ ।

**गन्धाश्मा** । पु । गन्धके । गन्धक । रा नि व १० । यक्ष्मीकवाटरस । ध द रसमञ्जरी ।

**गन्धाम्ल.** । पु । अपगन्धायाम् । भैप कृत वि ।

**गन्धाष्टकम्** । क्ली । सुगन्धाष्टद्रव्यगणे । तच्च नानाविधम् । तत्र मांसादिपूयसुगन्धीकरणार्थं यथा—जातीपत्र लवङ्गत्वगेला नागकेसर मरिचमग नाभय । रावण । देवतादितुष्ट्यर्थं यथा—चन्दन कर्पूर नागकेशर चालक नागरमुस्ता देवदारु गौरी चना कुसुमानि । तथा चन्दनागुरुकर्पूररोचना कुङ्कुममृगमदचन्दनह्रीबेरादि गणपतिप्रीत्यर्थम् । चन्दनागुरुकर्पूर तमालह्रीबेर कुङ्कुमकुशीदकुष्ठानि शिवस्य । 'चन्दनागुरुकर्पूरचोरकुङ्कुमरोचना । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदु ॥" "चन्दनागुरुह्रीबेरकुष्ठकुङ्कुमसेव्यका । जटामांसी मुरा चेति विष्णोर्गन्धाष्टकं विदु ॥"

**गन्धाढ्या** । स्त्री । प्रियङ्गौ । सु चि ८ अ ।

**गन्धि** । क्ली । तृणकुङ्कुमे । रा नि व १२ ।

**गन्धिक** । पु । गन्धके । भा ।

**गन्धिका** । स्त्री । अजमोदायाम् ।

**गन्धिनी** । स्त्री । मुरामांस्याम् । चम । पीत मूल्याम् । रेउचिनीति केचित् । हमीमस्तुरीति च अन्य ।

**गन्धिपर्ण** । पु । सप्तपर्णवृक्षे । रा नि व १२ ।

**गन्धिरस:** । पु । गोपके । निघण्टु ।

**गन्धिला** । स्त्री । मुस्तायाम् । रा नि व ६ ।

**गन्धी (न्)** । पु । कस्तूरीमृगे । व निघ । गन्धक । शब्दर । कीटविशेषे । छारपोका ।

**गन्धोग्रा** । स्त्री । वचायाम् । च द वा चि ।

**गन्धोतु** । पु । सुगन्धमार्जारे । गन्ध गोकुल । बिका ।

**गन्धोत्कट: (टा)** । पु, स्त्री । दमनकवृक्षे । दमनगाछ । रा नि व १० । मुरामांस्याम् ।

पु । चम ।

निघ ।

**गन्धोलि' (ली)** । स्त्री । गन्धाम् । श र । वरटायाम् । বোলতা । অম । মক্ষিকাবিশেষে । कुमौरा माछि । कतटीभेदे । वै निघ ।

**गन्धोलिका** । पु । मसूरे ।

**गन्धोषधम् (धि')** । क्ली, पु । सुगन्धिद्रव्यरूपौषधौ अगुरुकुष्ठादौ । सि यो वा व्या चि । च सू ३अ ।

**गभस्ति** । पु । किरणे । म । सूर्ये ।

**गभोलिका** । पु । मसूरे ।

**गम्भूर्च्छा** । स्त्री । मदया इति ख्यातद्रव्ये । र मा ।

**गम्भारिका (री)** । स्त्री । वृक्षविशेषे । गामार गाछ । तत्पर्याय,—सर्व्वतोभद्रा, काश्मरी, मधुपर्णिका, श्रीपर्णी, भद्रपर्णी, काश्मर्य्य, काश्मर्य्यौ, काश्मरी (अ) कृष्णवृन्ता, कम्भारिका (के), भद्रा, गोपभद्रिका, कु[illegible]हाभद्रा, क्षणफला, कट्फला, कृष्णवृन्तिका, क्षणवृन्ता पीता, सर्व्वतोभद्रिका, स्निग्धपर्णी, सुभद्रा, कम्भारी, गोपभद्रा, चौरिणी, विदारिणी, महाभद्रा, मधुभद्रा, स्वरूभद्रा, कृष्णा, अश्वेता, रोहिणी, श्रेष्ठ, स्थूलत्वचा, मधुमती, सुफला, मोदिनी, महाकुसुमा, सुदृढत्वचा । गुणा —कटुत्व तिक्तत्व उष्णत्व गुरुत्व भ्रमशोथज्वरतृष्णाविषदाहनाशित्वञ्च । रा नि व ९ । तुवरा तिक्ता वीर्य्योष्णा मधुरा गुरु दीपनी पाचनी मेध्या भेदिनी भ्रमशोषघ्नी तृष्णाम शूलार्शोविषदाहज्वरघ्नी च । भा । फलगुणा — तिक्त गुरु मधुरं ग्राहि केश्य रसायन मेध्य शीतल पित्तदाहघ्न । राज । बृंहण वृष्य गुरु केश्य रसायनं वातपित्ततृष्णारक्तक्षयमूत्रविबन्धहर स्वादु पाक हिम स्निग्ध तुवराम्ल दाहतृष्णावातरक्तपित्त क्षतक्षयघ्नञ्च । तद्धोजलल—मधुर कषाय कफपित्त घ्नञ्च । सु सू ४५ अ । मूल—अत्युष्ण पित्त रोग हितञ्च । राज ।

**गम्भीर'** । पु । पद्मगम्भीरे । तथा । आकुञ्चन रूथ । मासुगन्धरूथ । मिरीपाइब । वै निघ । क्ली । पङ्कजे । वज्राभविन्त ।

**गम्भीरक** । पु । अक्षिगतकवर्त्मे । वै निघ ।

**गम्भीरस्वर** । पु । अनन्तामलप्रसूतज्वरे । "गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया । आनद्धेन दोषाणां श्वासकासोद्गमेन च ॥ निदान ।

**गम्भीरदृष्टिः** । पु । नेत्ररोगविशेषे । वै निघ । See गम्भीरिका ।

**गम्भीरपाकः** । पु । अन्त पाके । वै निघ ।

**गम्भीरवेदी(न्)** । पु । दुर्द्दान्तहस्तिनि । त्रि ।

**गम्भीरा** । स्त्री । तन्नामकहिक्कायाम् । "नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी । शुष्कास्य कण्ठजिह्वा स्याच्छ्वासकासरुजाकरी । अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥' निदान ।

**गम्भीरिका** । स्त्री । वातजन्यनेत्ररोगभेदे । लक्षण यथा—"दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरत प्रयाति । रुजावगाढा च तमक्षि रोग गम्भीरिकेति प्रवदन्ति धीरा ॥' भा ।

**गर** । पु । उपविषे । कृत्रिमविषे । रोगे । हे च । विषघ्नौषधे । निर्विषद्रव्ययोगजे कृत्रिमविषे । तेनात्र पाण्डु क्षयोऽग्निमान्द्य कासश्वासज्वरादिर्न्तश्च भवति । वा । यथा—"संयोगजन्तु द्विविध तृतीय विषमुच्यते । गर स्यादविषस्तत्र सविष कृत्रिम मत ॥" वृद्धकाश्यप । "दूषीविषे मूलविषे सगरे कृत्रिमे विषे ।" च । 'नानाप्राण्यङ्गसमलविरुद्धौषधभस्मनाम् । विषाणाञ्चाल्पवीर्य्याणा योगो गर इति स्मृत ॥" वा उ ३५ अ ।

**गरघ्न** । पु । कृष्णार्जके । इस्कपत्र कृष्ण तुलसी । कृष्णपर्णवर्व्वरे । काल बाबुई । रा नि व १० । टङ्कणक्षारे । वैजयन्तीतुलस्याम् । वै निघ ।

**गरघ्नी** । स्त्री । मत्स्यविशेषे । गरुई माछ । गुणा —मधुरा कषाया वातपित्तकफघ्नी रुचिवर्णबोध्यकारी दीपनी लघुश्च । भा ।

**गरजध्वजम्** । क्ली । अभ्रके । वाचस्पति ।

**गरणम्** । क्ली । निगरणे, वमने ।

**गरदम्** । क्ली । विषे, गरले । रा नि व ९ । त्रि । विषदायिनि ।

**गरदिग्ध** । त्रि । कृत्रिमविषलिप्ते । च सि स्था ९ अ ।

**गरद्रुम** । पु । कारस्करवृक्षे । कुँचिला गाछ । रा नि व ९ ।

**गरध्वजम्** । क्ली । अभ्रे । अभ्र ।

**गरनाशिनी** । स्त्री । दुग्धपालिकायाम् । (दुधी घाड़ । म दुधघरी । वै निघ

**गरभ'** । पु । [illegible] । ९ प ।

र्दति लोचनाविलता तथा। सगर्भा ताड़येदश्व गर्भस्य परिलक्षणम्॥ काचिन्मूका जड़ीभूता निर्विकारा त्यजेदृषम्। काचिज्जम्भृषमानाश्वा गर्भिण्यपि प्रहर्षति॥ काचिद्रागवशाद्यपि समुत्वा ताड़येत्तृषम्। क्वचिद्वि मदवा काचित् अथवा पुच्छेन योनिकाम्॥ विन्यस्तकर्णी क्रोधान्ता हप दुष्टाप सर्पिणी। घनाधीयोनिभागा च सदा कान्तिविषा रिणी॥ प्रम्रस्तम्भा स्निग्धाङ्गी निविड़ीदरबन्धना। गभापलिप्तपार्श्वा च वडवा गर्भिणी मता॥ ज द ९ अ।

**गर्भक्षम्।** क्ली। रजना। चुई ग्रन्थि। ई च। पु। कीशमध्यस्थितमाल्ये।

**गर्भकण्टक।** पु। पनसवृक्षे। ई निघ।

**गर्भकार।** पु। पुत्रजीववृक्षे। भा।

**गर्भकोशः (ष)।** पु गर्भाशये। वै निघ।

**गर्भग्रहम्।** क्ली गर्भाशयेहे।

**गर्भघातिनी।** लाङ्गलीनामक्षुपे। ईश लाङ्गलि। रा नि व ७

**गर्भचिन्तामणि।** पु। गर्भाधिकारे रस। स चतुर्विध। १म—सूतिकाविनोदरसे तुल्य स्थाने सण्डाम्बेन चिन्तामणिर्भवति। रु सा स। २य—नारीफल टङ्गण (সোহাগা, विकटु हिङ्गुल प्र समभाग। जम्बीररसेन वटी कार्य्या समभाग। ३य—रस रौप्य लौह प्र २ तो अभ्र ६ तो (मतान्तरे ४ तो) कर्पूर वङ्ग ताम्र जाती फल जयित्री गोक्षुरबीज शतावरी बला (श्वेत-बला) गोरक्षतण्डुला (গোরক্ষচাকুলিয়া) प्र १ तो जलेन वटी कार्य्या। भा २२। ४थ—रस गन्धक स्वर्ण लौह रौप्यमाक्षिकहरिताल वङ्ग अभ्र प्र समभाग। ब्राह्मी वासा भृङ्गराज निम्बपटी दशमूलानां प्रत्येक रसेन ७ भावना देया। वटी १ र। इहच्चिन्तामणि।

**गर्भचर्य्या।** स्त्री। गर्भोदिचारकर्माणि।

**गर्भच्युति।** स्त्री। गर्भस्रावे।

**गर्भजरोग।** पु। स्त्रीरोगे। विका।

**गर्भण्ड।** पु। नाभिगुडके। নাড়ের গোঁড। विका।

**गर्भद (दा)।** पु, स्त्री। पुत्रजीववृक्षे। रा नि व ९। श्वेतकण्टकार्य्याम्। भा।

**गर्भदात्री (त्रिका)।** स्त्री। पुष्पदात्रीक्षुपे। तत्पर्य्याय,—पुत्रदा, प्रजादा, अपत्यदा, दृष्टि प्रदा, प्राणिमाता, तापसद्रुमसन्निभा, प्राणदाता। के। गुणा—मधुरा शीता स्त्रीपुष्पदोषपित्त दाहश्रमघ्नी गर्भदा च। रा नि व ४।

**गर्भद्रुति।** स्त्री। वह्निव्यतिरेकेऽपि रसग्रासी कृतानां लौहानां द्रवत्वे। গ্রাসানন্তর পারার সহিত স্বর্ণাদির দ্রবত্ব। "जम्बीरबीजपूरक चाङ्गेरीवेतसाम्लसयोगात्। चारा भवन्ति सुतरा गर्भद्रुतिकारणे शस्ता॥" र चि ३अ।

**गर्भधारिणी।** स्त्री। मातरि।

**गर्भधृक्।** त्रि। गर्भधारिण्याम्। वै निघ।

**गर्भनाडी।** स्त्री। (Umbilical cord) गर्भप्रणाल्याम्। वै निघ।

**गर्भनाश।** पु। गर्भपात।

**गर्भनाशना।** स्त्री। अरिष्टकवृक्षे। रिटा गाछ। वै निघ।

**गर्भनुत्।** पु। लाङ्गलिकायाम्। विषलाङ्गुलि। म कललावी। भा।

**गर्भपरिस्रव।** पु। (Secondines) गर्भ वेष्टने। ফুল। वै निघ।

**गर्भपाकी (इन्)।** पु। षष्टिकव्रीहौ। যেটে धान। ई च।

**गर्भपात।** पु। गर्भजरोगविशेषे। येन पञ्चम षष्ठमासिकगर्भस्य पतन भवेत्। "मत स्थिर शरीरस्य पात पञ्चमषष्ठयो। सु नि ८ अ। See गर्भस्राव।

**गर्भपातक।** पु। रक्तशोभाञ्जनवृक्षे। जटा।

**गर्भपातन।** पु। रीठाकरञ्जे। রিটা। भा।

**गर्भपात(ति)नी।** स्त्री। कलिकारीवृक्षे। विषलाङ्गुलिया। रा नि व ४।

**गर्भपीयूषवल्लीरस।** पु। स्त्रीरोगाधिकारे रस। "सूतो गन्ध तथा स्वर्ण लौह रजत माक्षिके। हरिताल वङ्गमभ्रश्चाप्यथक समभागिक। भावना खल्लदातव्या रसैरेषा पृथक् पृथक्। ब्राह्मी वासा भृङ्गराजपर्पट दशमूलक। सप्तधा भावयेद्वैद्य गुञ्जामाना वटीश्चरेत्॥' रौप्य स्वर्णमाक्षिकश्च। भैष। See इहद्गर्भचिन्तामणि।

**गर्भपोषणम्।** त्रि। गर्भपुष्टिकरणे।

**गर्भभारुण्डकः** । पु । प्रयवचे । मद म ४ ।

**गर्भरूपः** । वि । तरुणे ।

**गर्भवती** । स्त्री । सगर्भायां स्त्रियाम् । পোয়াতি স্ত্রী । तत्पर्याय,—अन्तर्वत्नी, गुर्विणी, गर्भिणी, ससत्त्वा, आपन्नसत्त्वा, दौहृदवती (अमर), दोहदान्विता । हे । पुत्रगर्भवतीलक्षण—पुत्रगर्भयुक्ताया नार्या द्वितीये मासि गर्भाशयमध्ये गर्भं पिण्डाकारो लक्ष्यते, दक्षिणाक्षिमहत्त्व प्राग्दक्षिणस्तने स्तन्य प्रसन्नमुखवर्णता दक्षिणोरो पुष्टि, स्त्रियाः पुन्नामधेयद्रव्येष्वभिलाप आस्वादिफललाभ इति । कन्यागर्भलक्षण उक्तविपरीतलक्षण ज्ञेयम् । नपुंसकगर्भे गर्भोऽन्तुदरेऽन्त पार्श्वद्वयसुन्नत पुरस्ताच्च महदिति । भा । See गर्भिणी ।

**गर्भविच्युति** । स्त्री । रोगादिना गर्भस्य अकालपतने, गर्भस्रावादौ । "क्रमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् । पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युति ॥" सु नि ८ अ ।

**गर्भविनोदरसः** । पु । सूतिकाधिकारे रस । त्रिकटु ३ तो हिङ्गुल ४ तो जयित्री लवङ्गश्च प्र ३ तो स्वर्णमाक्षिक २ तो जम्बीर चणकाकारा वटी कार्या । र सा स ।

**गर्भविलासतैलम्** । क्ली । गर्भाधिकारे गर्भस्थापनतैलं । तिलतैल मूर्च्छित १ श कल्कार्थं —भूकुष्माण्ड दाडिमपत्रं आम्रहरिद्रा (আম হলুদ) शृङ्गाटकपत्र त्रिफला जातीपुष्प शतावरी नीलोत्पल पद्मपुष्पञ्च प्र १४० तो (वा मिलित १६ तो) पाकार्थं वारि ८ श । भैष ।

**गर्भविलासरसः** । पु । गर्भिणीज्वरे रस । रसगन्धकतुल्यकानां प्र सम जम्बीरत्रिकटुरसाभ्या प्र दिनत्रय भावयेत् । পারা, গন্ধক, তূঁতেভস্ম প্রত্যেক সমান । জম্বীররসে (গোঁড়া লেবু) ৩ দিন ও ত্রিকটুরসে ৩ দিন ভাবনা দিবে । र चि ९ अ ।

**गर्भविस्राविणी** । स्त्री । एलायाम् । वै निघ ।

**गर्भशङ्कु (क)** । पु । मृतगर्भनिःसारणास्त्रे । वै निघ । तल्लक्षणं यथा,—नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरितिस्मृत । अष्टाङ्गुलायतश्चेत मूढगर्भं हरेत् स्त्रियाम् ।

**गर्भशय्या** । स्त्री । Uterus पक्वाशयमध्यवर्त्तिगर्भोत्पत्त्याशये । यथा चेटिसी गर्भ कुक्षौ तिष्ठति । गर्भाशय । तस्य रूपम्—"शङ्खनाभ्याकृतिर्योनि स्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिता । यथा रोहितमत्स्यस्य मुख भवति रूपत । तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधा ॥" भा ।

**गर्भशल्यम्** । क्ली । गर्भवेदनायाम्, गर्भशूले । च शा ८ अ ।

**गर्भशातनम्** । क्ली । भेषजेन गर्भपातने । পেট খসান । शातनप्रभृतिभि विशेषै अभ्यनान् सूच्यते गर्भ ।" सु नि ८ अ ।

**गर्भशोषः** । पु । गर्भस्य शुष्कतारोगे ।

**गर्भसम्भवा** । स्त्री । स्थूलैलायाम् । वै निघ ।

**गर्भस्थली** । स्त्री । गर्भाशये ।

**गर्भस्थानम्** । क्ली । गर्भाशये । अन्तःपुरे । वै निघ ।

**गर्भ(र्भा)स्थापनम्** । गर्भरक्षण । गर्भरक्षणयोगे । च शा ।

**गर्भस्फुरणम्** । क्ली । गर्भस्पन्दने । सु शा १० अ ।

**गर्भस्रावः** । पु । Abortion गर्भच्युतौ । चतुर्थमासपर्यन्त शोणितरूपस्य गर्भस्य विच्युतौ । গা খসা, পেট খসা । स च भयाभिघाततीक्ष्णोष्णपानाशनसेवनादिभिर्भवति । गर्भस्रावनिदानलक्षणे यथा—' भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् । गर्भे पतति रक्तस्य सशूल दर्शनम्भवेत् । यानयानाध्वगमनयानायासप्रपीडनै । ज्वरोपवासपतनप्रहाराजीर्णधावनै । वमनाच्च विरेकाच्च कुत्सनाद्गर्भपातनात । तीक्ष्णक्षारोष्णकटुकतिक्तरूक्षनिषेवणात् । वेगाभिघाताद्विषमादासनाच्छयनाद्भयात् । आव तुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रव ॥' भा ।

**गर्भस्रावी (इन्)** । पु । हिन्तालवृक्षे । হাতাল গাছ । रा नि व ९ ।

**गर्भागारम्** । क्ली, पु । शयनगृहे । अन्तर्गृहे । गर्भाशये । रा नि व १८ ।

**गर्भाधानम्** । क्ली । प्रथमऋतुस्नानादूर्ध्वमनुष्ठेये दशसंस्कारान्तर्गतप्रथमसंस्कारे । तत्क्रम—"अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्मार्थकामप्रजा प्राप्स्यतीति । ऊनषोडशवर्षायां अप्राप्त पञ्चविंशतिम् । यद्याधत्ते पुमान् गर्भं

कुक्षिस्थ स विपद्यते ॥ जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्बलेन्द्रिय । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥" सु शा १० अ ।

**गर्भाम्भ.** । पु । गर्भस्थजले । पानखृष्टि । वा उ १४ ।

**गर्भारि.** । पु । सूक्ष्मैलायाम् । रा नि व ६ ।

**गर्भावक्रान्तिः** । स्त्री । गर्भावतरणक्रियायाम् । सु शा ३ अ । See गर्भ ।

**गर्भाशय** । पु । गर्भशय्यायाम् । जरायौ । See गर्भशय्या ।

**गर्भाष्टम** । पु । गर्भजननमासादष्टममासे । त्रिका ।

**गर्भिणी** । स्त्री । चीराबीजवे । क्षीरुई गाछ । श च । गर्भवत्याम् । लिङ्ग यथा—"स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः । अकस्मादुद्विजते गर्भात् । ....... सद्यःगृहीतगर्भाया लिङ्गमुच्यते ॥" भा । See गर्भ । तत्कृत्य यथा—"गर्भिणी प्रथमदिवसात् प्रभृति नित्यमुद्युक्ता शुचिरलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेत्मलिनविकृतहीनगात्राणि, न स्पृशेत् दुर्गन्धदुर्दर्शनानि, परिहरेदुद्वेजनीयाश्च कथा, शुष्कं पर्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत । बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्कराश्च भावानुच्चैर्भाष्यादिकं परिहरेत् यानि च गर्भं व्यापादयन्ति । न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत । न चायासयेच्छरीरं पूर्वोक्तानि च परिहरेत् । शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात् । हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् । सामान्यमेतदाप्रसवात् । विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्, पञ्चमे क्षीरसर्पिःसंसृष्टं, षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेत् यवागूं वा, सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धमेवमाप्यायते गर्भं, अष्टमे बदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेण स्थापयेत् पुराणपुरीषशुद्ध्यर्थम् अनुलोमनार्थञ्च वायो, ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखमनुपद्रवा प्रसूयते, नवमे मासि सूतिकागारमेनां प्रवेशयेत् । प्राग्प्रसवाल्लक्षणं—'जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने । सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥ ततोपस्थितप्रसवाया कटीपृष्ठम्प्रति समन्ताद्वेदना भवन्त्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च ।" सु शा १० अ ।

**गर्भिणीवेक्षणम्** । क्ली । कुमारभृत्यायाम् । Midwifery गर्भिणीपरिचर्यायाम् । त्रिका ।

**गर्भी (इन्)** । पु । पुत्रजीववृक्षे । वै निघ ।

**गर्भपाकधिक** । पु । षष्टिकधान्ये । रा नि व १६ ।

**गर्मु(र्मो)टिका (टी)** । स्त्री । तृणधान्य विशेषे । झाड़ुआ घासविशेष वा धान । हिन्दि । म गोंडालतृणधान्य । तत्पर्याय —गर्मुच्छद । र । गुणा —मधुरा शीता सारणी दाहघ्नी रक्तदोषघ्नी रुच्या पथ्या दुग्धदायिनी । रा नि व ८ । र मा ।

**गर्मुत्** । स्त्री । तृणधान्यविशेषे । गड़गड़, मस्रना । अम । सुवर्णे । नले । मे ।

**गर्व्वालावू** । स्त्री । पातालगरुडीनाम लता विशेषे ।

**गल** । पु । कण्ठे । गला । रा नि व १८ । सर्ज्जरसे । धूने । मे । गडकमीने । श र ।

**गलक** । पु । गडकमत्स्ये । श र ।

**गलकम्बल** । पु । सास्नायाम् । गरुर गलस्थित कम्बलाकृति मांस । अम ।

**गलकोलः** । पु । गलशुण्डीनामरोगे । वै निघ ।

**गलगण्ड** । पु । Goitre गलरोगविशेषे । गलगण्ड । तस्य निदानं— वात कफश्चापि गले प्रदुष्टौ मन्ये तु संसृत्य तथैव मेद । कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥ लक्षणं—निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥' मा नि । पक्षिविशेषे । हाडगिले ।

**गलगोडि(लि)का (ली)** । स्त्री । सविषकीट विशेषे । यस्य दंशनात् दाहस्वेदशोफकरी तु गलगोडिका ।" च । निर्विषसर्पविशेषे । सु कल्प ४ अ ।

**गलग्रह** । पु । मत्स्यघण्टापरनामधेये व्यञ्जने ।

माछेर घण्ट । ग च गलरोगविशेषे । गला-धरा । "तस्य श्लेष्मा प्रकुपित तिष्ठत्यतर्गले स्थिर । आशु सञ्जनयेच्छोफ जायतेऽस्य गलग्रह ॥" च सू १८ अ । अथवा गलरोगविशेषे । ज द २९ अ ।

**गलग्राहः** । पु । मकरे । वै निघ ।

**गलत्कुष्ठारिरसः** । पु । गलत्कुष्ठे रस । पारद गन्धक ताम्रलौह गुग्गुलु चित्रकशिलाजतुकुचेला वचानां (पाठान्तरे वचास्थाने त्रिफला) प्र समभाग । अभ्र ४ भ करञ्जवीज ४ भ घृतमधुभ्यां वटी कार्य्या । পারা, গন্ধক, তামা, লৌহ, গুগ্গুল, চিতামূলচূর্ণ, শিলাজতু, কুচিলা, বচ (পাঠান্তরে ত্রিফলা) প্রত্যেকে ১ ভ অভ্র ৪ ভ করঞ্জবীজ ৪ ভ ঘৃত ও মধু দ্বারা মর্দন। মা ১ তো । भा । र सा स ।

**गलन्तिका** । स्त्री । कर्कर्य्याम् । वस्त्रधावा । अम ।

**गलभङ्गः** । पु । स्वरभङ्गे ।

**गलमेखला** । स्त्री । गलसूत्रे । हारा । तत् पर्य्याय —सूत्राली । हा ।

**गलरोगः (रोहिणी)** । पु, स्त्री । कण्ठगतसप्तदश रोगभेदे । तत्र वातपित्तकफसन्निपातशोणितज भेदेन रोहिणी पञ्चधा भवति । अपरे गलशालूक तुण्डिकेरिका गलौघ वलय गलायुक शतघ्नी गल विद्रधि गलार्बुदा वहिर्गलगण्ड वातज कफज मेदोजभेदेन स्वरघ्नेति द्वादश । रोहिण्य पञ्च कण्ठशालूकाधि जिह्वावलय मलासेकण्ठदन्तयसघ्नी गिलायुगलविद्रधिगलौघस्वरघ्नमांसतानविदार्य्य इति अष्टादश । लक्षण—"गलेऽनिल पित्तकफौ च मूर्च्छितौ पृथक्समस्ताश्च तथैव शोणित । प्रदूष्य मांस गलरोधिनोऽङ्कुरान् सृजन्ति यान् सासुहरा तु रोहिणी ॥" सु नि १६ अ । कण्ठास्यशोथक प्राणाम् वा हनुग्रीवरुग्घरी । पित्ताज्ज्वरोमाढ्योह कण्ठधूमायमानिता । कफेन पिच्छिला पाण्डु, असृजा स्फोटकाचिता । गम्भीरपाकाम्रिचयात्तौ लिङ्गसमन्विता ॥ वा उ २१ अ । लक्षणानि अस्मपर्य्याये गम्यानि ।

**गलरोहिणी** । स्त्री । कण्ठगत रोगविशेषे । "गलेऽनिल पित्तकफौच मूर्च्छितौ । पृथक् सम स्ताश्च तथैव शोणितम् । प्रदूष्य मांस गलरोधिनोऽ ङ्कुरान् सृजन्ति यान् सासुहरा तु रोहिणी ॥" सुश ।

**गलविद्रधिः** । पु । गलरोगभेदे । कण्ठविद्रधि । लक्षण—"सर्व्वङ्गल व्याप्य समुत्थितो य शोफो रुजो यत्र वसन्ति सर्व्वा । स सर्व्वदोषो गलविद्र धिस्तु तस्यैव तुल्य खलु सर्व्वजस्य ॥" सु नि १६ अ ।

**गलव्रतः** । पु । मयूरे । त्रिका ।

**गलशालूकः** । पु । अथस्य मुखरोगविशेषे । ज द २९ ।

**गलशुण्डिका (शुण्डी)** । स्त्री । The uvula अलिजिह्विकायाम्—আলজিব, গলার শুঁড়ি । रा नि व १८ । च शा ७अ । तत्पर्य्याय,— सुधास्रवा घण्टिका, लम्बिका (ि), रसाज्ञा, प्रतिजिह्विका, माध्वी, अलिजिह्विका, रसनाकाकु (शब्दर) । जिह्वाप्रवन्धजा कण्ठे दारुणा मार्ग रोधिन । मांसाङ्कुरा शीघ्रचया रोहिणी शीघ्र कारिणी ॥ कण्ठशुण्ड्यभिधानामधेयी तालुगरोग विशेषे । लक्षण यथा विदु ॥ "श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घ शोथो ध्मातवस्तिप्रकाश । तृष्णाश्वास कासकृत् त वदन्ति व्याधि वैद्या कण्ठशुण्डीति नाम्ना ॥" भा म ४भ मुखरो चि ।

**गलशोथः** । पु । गलस्फीतौ । গলাফোলা । "सनागर देवदारु चव्यचित्रकपेषित । प्रलेपनमिद श्रेष्ठ गलश्वयथुनाशनम् ॥" भैष ज्व चि ।

**गलस्तनः** । पु । गलगण्डरोगे । रा नि व २० । छागगलस्थस्तने । वै निघ ।

**गल(ले)स्तनी** । स्त्री । छाग्याम् । हे च ।

**गला** । स्त्री । अलम्बुषायाम् । भा । মুণ্ডীশোলা ।

**गलाङ्कुर** । पु । A disease of the throat रोहिण्यपरपर्य्याये गलरोगविशेषे । गण्डमालायाम् । গণ্ডমালা । हे च ।

**गलानिक (विलः)** । पुं । गड्डाटवृक्षत्वचि । গন্ধাচিংড়ি । त्रिका ।

**गलायुकः** । पु । गलरोगभेदे । लक्षण—"मांस कोलो गले दोषैरेकोऽनेकोऽथवाल्पक । अल्पो स्वाद्याभ्यवहृति पृथुमूलो गलायुक ॥" वा उ २१ अ ।

**गलार्ब्बुदम्** । क्ली । गलरोगभेदे । গলার আব । लक्षणम्—"जिह्वावसाने कण्ठादावपाक श्वयथु मला । जनयन्ति स्थिर रक्त नीरुज तद्गलार्ब्बुदम् ॥" वा उ २१ अ ।

**गवेश(षि)का**। स्त्री। गोरचोहचे। श च।

**गव्यम्**। क्ली। गोष्ठते। गोरोचनायाम्। गव्य दधि। गोदुग्धे। त्रिका। ति। गोसम्बन्धीये।

**गव्यघृतम्**। क्ली। गव्यनवनीतजातघृते। गाओया घि। गुणा—बुद्धिकान्तिस्मृतिद बलमेधावर्द्धक पुष्टिकर वातश्लेष्मघ्न श्रमहर पित्तघ्न हृद्यम् अग्निकर पाकमधुर हृष्य देहस्थैर्यकरच। रा नि व १५।

**गव्यतक्रम्**। क्ली। गोदुग्धभवघोले। गरुर घोल। गुणा—"गव्य त्रिदोषशमन पथ्ये श्रेष्ठ तदुच्यते। दीपन रुचिकृन्मेध्य चर्शोदरविकारजित्॥" अत्रि ८ अ।

**गव्यदधि**। क्ली। गोदुग्धजातदधनि। गुणा—अतिपवित्र शीतल स्निग्ध दीपन बल्य मधुरम् अरोचकघ्न याहि वातरोगघ्नच। रा नि व १५। "आम्ल स्वादुरस ग्राहि गुरूष्ण वातरोगजित्। मेद शुक्रबलश्लेष्म रक्तपित्ताग्नि शोफकृत्। स्निग्ध विपाके मधुर दीपन रुचिवर्द्धन। वातापह पवित्रच दधि गव्य रुचाकरम्॥" अत्रि ८अ।

**गव्यनवनीतम्**। क्ली। गोदुग्धजनवनीते। गाओया ननी। सर्व्वदोषघ्न मलकृत् पुष्टिवर्द्धनच। रा नि व १५।

**गव्यमांसम्**। क्ली। गोमांसे। सु सू ४६ अ।

**गव्या**। स्त्री। गोरोचनायाम्। रा नि व १२।

**गव्यूति**'। पु, स्त्री। क्रोशद्वये। हे च।

**गहनम्**। क्ली। वने। दुःखे। पीड़ायाम्। वै निघ।

**गह्वरम्**। क्ली, स्त्री। विडङ्गे। प मु। गुहायाम्। च। वने। मे। रोदने। हे। पु। निकुञ्जे। मे।

**गाङ्गम्**। क्ली। गङ्गोदके। वै निघ।

**गाङ्गट (क)**। पुं। मत्स्यविशेषे। चिंड़ि माछ। श र।

**गाङ्गटेय**'। पुं। गाङ्गटमत्स्ये। श र।

**गाङ्गेयम्**। क्ली। भद्रमुस्तायाम्। मूठा। सुवर्णे। रा नि व १३। र दि ६अ। धुस्तूरे। कशेरौ। अम। पु। भीष्मशन्तनौ। त्रिका। स्त्री (यी)।

**गाङ्गेरिका**। स्त्री। नागबलायाम्। गोरक्षचाउली। वै निघ।

**गाङ्गेरु, (क')**। पु। काकाण्डीक्षुपे। भर्ता फट्की, आलाकुशी। वै निघ।

**गाङ्गेरुकम्**। क्ली। गोरचतण्डुलबीजे।

**गाङ्गेरुकी**। स्त्री। गुडशर्करके। प मु। गोरचतण्डुलायाम्। गोरक्षचाउली। अम। "गाङ्गेरुकीमूलरसैर्जायते गलवेदन।" भा म १भ। तत्फलद्वयाय हिम स्वादु कफवातघ्नच। सु सू ४६ अ।

**गाङ्गेरुही**। स्त्री। नागबलायाम्। रा।

**गाङ्गेष्ठी**। स्त्री। कटशर्करालतायाम्। नटी। हारा।

**गाङ्गौघम्**। क्ली। गङ्गास्रोतसि।

**गाजरम्**। क्ली। गर्ज्जने। शालगम। भा पू १ भ शाकव।

**गाञ्जि(ञ्जी)काय**'। पु। वर्त्तिकपक्षिणि। रा नि व १९।

**गाडवः**। पु। मेघे। त्रि।

**गाढम्**। त्रि। बहुकालजाते। बद्धमुष्टौ। सान्द्रे। सु नि ६अ।

**गाढमुष्टि**.। पुं। खड्गे। मे।

**गाढलवणम्**। क्ली। सम्भरदेशजलवणविशेषे। मद्यत्र लवण। रा नि व ६।

**गाण्डीरम्**। क्ली। शाकविशेषे। गाठे शाक। सु सू ४६ अ।

**गाण्डीवी (इन्)**। पु। अर्ज्जुनवृक्षे। रा नि व ९।

**गातु**। पुं। कोकिले। भ्रमरे। म। गन्धर्व्वे। के।

**गात्रम्**। क्ली। देहे, शरीरावयवे। रा नि व १८। करिण पूर्व्वजङ्घादिप्रदेशे, अग्रपादादि सम्मुखभागे। मे।

**गात्रकण्डू**। स्त्री। कण्डूरोगविशेषे।

**गात्रघर्षणम्**। क्ली। शरीरमार्ज्जने।

**गात्रभङ्गा**। स्त्री। शूकशिम्ब्याम्। श च।

**गात्रमार्जनी** । स्त्री । अङ्गमार्जनार्थवस्त्रे । गामछा ।

**गात्रविक्षेपः** । पु । अङ्गचालने, अङ्गविक्षेपणे । वै निघ ।

**गात्रशोष** । पु । पूतना नामबालरोगविशेषे । शूँखे पाओया । वै निघ ।

**गात्रसङ्कोची** (इन्) । पु । आहुकजन्तौ । क्रकच क्रकलासे । काँकलास, बहुरूपी । रा नि व १९ । गोनसस्सर्पे । वै निघ ।

**गात्रसम्प्लव** । पु । प्लवजातीयपक्षिणि, इत्यादौ । हे च ।

**गात्रसाद** । पु । शरीरावसादे । पित्तरोगे । वै निघ ।

**गात्रानुलेपनी** । स्त्री । गात्रानुलेपनयोग्ये घृष्टपिष्टे सुगन्धिद्रव्ये । अम ।

**गात्रोत्सादनम्** । क्ली । गात्रानुलेपने ।

**गाध** । पु । स्थाने । लाभेच्छायाम् । हे च ।

**गाध्यखण्डा** । स्त्री । भूम्यामलक्याम् । के ।

**गानिनी (नी)** । स्त्री । वचायाम । वै निघ ।

**गान्त्री** । स्त्री । गोशकटे । भ टी रा ।

**गान्धारम्** । क्ली । गन्धरसे । गन्धबोल । त्रिका । पु । सिन्दुरे । मे । देशविशेषे ।

**गान्धारी (रिका)** । स्त्री । कण्टकार्य्याम् । वै निघ । दुरालभायाम् । भा । रा नि व ४ । गञ्जिकायाम् ।

**गान्धिक** । पु । कीटविशेषे । गिंदि पोका । अ र । लेखके । नाना ।

**गान्धिनी** । स्त्री । गङ्गायाम् । शब्दर ।

**गाम्भारिका (री)** । स्त्री । गाम्भारीवृक्षे । गाम्भार गाछ । भ क सीवणी । ते गम्भारि । प सु ।

**गाम्भीर्य्यम्** । क्ली । गम्भीरतायाम् ।

**गायत्री** (इन्) । पु, क्ली । खदिरवृक्षे । भ । अम । च द, शि यो रत्न पि चि खण्डकाद्य लौहे । "तालमूली च गायत्री ।" खदिरकाष्ठसारे । च द यक्ष्म चि एलादिमन्थे ।

**गायत्रीसार** । पु । खदिरसारे । चक्र ।

**गायत्त्रः** । पु । सोमलताभेदे । 'गायत्रास्त्रे शुभ ।" सु चि २९ अ ।

**गारित्रम्** । क्ली । धान्यविशेषे । वै निघ । ओदने । छया ।

**गारुडम्** । क्ली । स्वर्णे । मे । मरकतमणौ । रा नि व १३ । तन्नामविषमन्त्रे । जटा ।

**गारुडिक** । पु । विषवैद्ये । अ र ।

**गारुडी** । स्त्री । पातालगरुडीवृक्षे । रा नि व ३।

**गारुत्मक(त)म्** । क्ली । मरकतमणौ । रा नि व १३ । वै निघ चय चि । नवरत्नराज मृगाङ्के ।

**गारुत्मतपत्रिका** । स्त्री । गन्धपत्राम् । पाँची लता । रा नि व १० ।

**गार्ज्जरम्** । क्ली । गर्जरमूलके । गाजर मूला । रा नि व ७ ।

**गार्ध** । त्रि । आयुने । क्ली (ई) । आयूनताया ।

**गार्भ (र्भिक)** । त्रि । गर्भसम्बन्धिनि ।

**गाल** । पु । मदनवृक्षे । प सु । वा ज्व चि १५ । "पिप्पलीभिर्युतान् गालान् ।"

**गालनम्** । क्ली । वस्त्रपूतकरणे । छाँका ।

**गालफलम्** । क्ली । मदनफले । वै निघ ।

**गालव** । पु । लोध्रवृक्षे । मे । श्वेतलोध्रे । भ टी भ । तिन्दुकवृक्षे । केँद गाछ । श च ।

**गालित** । त्रि । द्रवीकृते ।

**गालोडनम्** । क्ली । उन्मादरोगे ।

**गालोडित** । त्रि । उन्मत्ते । कृशे । के ।

**गालोड्यम्** । क्ली । पद्मबीजे । रा नि व १० ।

**गाहित** । त्रि । कम्पिते । स्नाते । वै निघ ।

**गाचीरी** । स्त्री । क्षीरशुक्लायाम् । प सु ।

**गिरणम्** । क्ली । भक्षणे । वै निघ ।

**गिरि** । पु । चक्षूरोगविशेषे । मे । पर्व्वते । रा नि व २ । स्त्री । गिलने । अम । बालमूषिकायाम् । भ टी र । पारददोषविशेषे । रसा ।

**गिरिक** । पु । गिरिनिम्बे । महानिम्बे । वै निघ ।

**गिरिकदम्ब** । पु । धाराकदम्बे । रा नि व ९ । भा पू २ भ ।

**गिरिभेदः** । पु । विट्खदिरे । र मा । इरि भेद इत्यपि पाठ ।

**गिरिय(या)क** । पु । गेण्डुके । हे ।

**गिरिरम्भा** । स्त्री । गिरिकदल्याम् । वीरक कणी । रा नि व ११ ।

**गिरिवर्त्तिका** । स्त्री । पार्व्वततित्तिरिपक्षिणि । वै निघ ।

**गिरिवासी (इन्)** । पु । हस्तिकन्दनाममहाकन्द शाके । रा नि व ७ ।

**गिरिशान्तक** । पु । लौहमारकत्रिफलादि गणे । र सा स ।

**गिरिशायी (इन्)** । पु । पार्व्वतपक्षिविशेषे । वै निघ ।

**गिरिशालाह्व** । पु । मनुदपक्षिणि । सु सू ४६ अ ।

**गिरि(श)शालिनी** । स्त्री । अपराजितायाम् । पराण ।

**गिरिशिखर** । पु । महाबकुले । वै निघ ।

**गिरिसर्प** । पु । दर्व्वीकरसर्पविशेषे । सु कल्प ४ अ । See सर्प ।

**गिरिसानुगा(जा)** । स्त्री । त्रायमाणायाम् । वै निघ ।

**गिरिसार** । पु । लौहे, वङ्गे । मे ।

**गिरिसिन्दु(न्धु)क** । पु । कृष्णनिर्गुण्ड्याम् । वै निघ ।

**गिरिस्वेद** । पु । शिलाजतुनि । वै निघ ।

**गिरिह्वा** । स्त्री । बालमूषिकायाम् । अ टी र । सु कल्प ५ अ ।

**गिल** । पु । जम्बीरवृक्षे । श च ।

**गिलग्राह** । पु । नक्रे । वै निघ ।

**गिलनम् (लि)** । क्ली, स्त्री । गलाध करणे, भक्षणे । च टी ।

**गिलायु** । पु । गलरोगे । तल्लक्षण यथा— "दन्तिगले त्वामलकास्थिमात्र स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्ति । संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसञ्ज ।" सु नि १६ अ ।

**गिलोद्य** । पु । मत्स्यपताकाराकारयवमुखमत्स्य विशेषे । गिलोट इति लोके । स सू ४२ च ।

**गीर्लता** । स्त्री । महाज्योतिष्मतीलतायाम् । रा नि व ३ ।

**गीर्व्वाणकुसुमम्** । क्ली । लवङ्गे । रा नि व १२ ।

**गुग्गुलु** । पु । (Burseraceac Balsamo-dendron mul ul) स्वनामख्यातपण्यद्रव्ये । गुग्गुल । तें गुग्गिलमुचेट्टु । वा सू १५ अ । तत्पर्य्याय,—कुम्भ, उलूखलक, कौशिक, पुर (अ), कुम्भीनुखलक, गुग्गुल (भ), जटायु, कालनिर्य्यास, देवधूप, सत्त्वसह, महिषाक्ष, पलङ्कषा (र), उग्र, उदूखलक, कुन्ती (स), कुम्भी (ज), उद्दीप्त (अ टी भ), यवनद्विष्ट, भवाभीष्ट, निशाटक, जटाल, पुट, भूतहर, शिव, शाम्भव दुर्ग, यातुघ्न, महिषाक्षक, देवेष्ट, मरुद्दिष्ट, रक्षोहा रूक्षगन्धक, दिव्य । स त्रिविध—साधारणगुग्गुलु, कणगुग्गुलु, भूमिजगुग्गुलुश्च । विशेषा पर्य्याये द्रष्टव्या । रा नि व १२ । महिषाक्ष महानील कुमुद पद्म हिरण्या इति पञ्चभेदमिच्छन्ति भावमिश्रादय । तेषु भृङ्गाञ्जनसवर्ण महिषाक्ष, महानीलवर्णा महानील, कुमुदाभ कुमुद, माणिक्यसवर्ण पद्म, हेमाभश्च हिरण्य इति । तत्र प्रथमो द्वितीयश्च हस्तिनां, कुमुदो हयाना, पद्म आरोग्ये, कनकश्च नराणां हित । भा । शुद्धि—उष्णे पूते च दशमूलक्वाथे गुग्गुलु प्रक्षिप्यालोड्य वस्त्रपूत विधाय पचाद्विशोष्य घृत दत्त्वा पेषितो ग्राह्य । सा कौ । गुणा—जराव्याधिहरत्वाद्रसायन । कटुतिक्तोष्ण कफ वातकासघ्न कृमिवातोदरप्लीहशोफार्शोघ्न । रा नि व १२ । नवो बृंहणो वृष्य सुगन्ध पिच्छिल गुरुः दुर्गन्ध । पुराणश्च अतिलेखनो वीर्य्यहीनश्च । भा । गुग्गुलुपाक गुडपाकवत् । See गुडपाक ।

**गुग्गुलुवटक (आदित्यपाक)** । पु । वातव्याधौ । त्रिफलाचूर्ण प्र ४ तो पिप्पलीचूर्ण १ तो गुडत्वगेलाचूर्ण प्र २ तो शोधितगुग्गुलु २० तो एकत्र दशमूलाम्बुना भाव्यम् (दशमूल ४० तो वारि ६० तो शे २० तो) । "भाव्य द्रव्यसम क्वाथ्य क्वाथोऽष्टांशस्तु तत्र च ।" च द । प प्र ।

**गुच्छ** । पु । स्तबके । विका । भेदय । गुच्छविनीटपे । वै निघ । मयूरपुच्छे । मे ।

**गुच्छकः।** पु। गुच्छकन्दे। तैलशाक इति लोके। शश वै। रीठाकरञ्जवृक्षे। रा नि व ९। क्ली। ग्रन्थिपर्णे। भा।

**गुच्छकच्छद.।** पु। ग्रन्थिपर्णम्। वै निघ।

**गुच्छकणिशः।** पु। रागीधान्ये। रा नि व १६।

**गुच्छकन्दः।** पु। कन्दशाके। तैलसाक इति लोके। म कुलीहालु। क मुकुलियागड्डे। गुणा —मधुर शीतल हृद्य दाहघ्न तपघ्न। रा नि व ७।

**गुच्छकरञ्जः।** पु। करञ्जवृक्षविशेषे। तत् पर्य्याय,—स्निग्धदल, गुच्छपुष्पक, नदी, गुच्छी, स्निग्धपत्रक, सामन्त, दन्तधावन। गुणा — कटु तिक्तोष्ण विषवातकण्डूविचर्च्चिकाकुष्ठस्पर्श त्वग्दोषघ्नश्च। रा नि व ९।

**गुच्छगुल्मिका।** स्त्री। स्नुहीवृक्षविशेषे। ह्रस्व फणिमनसाविशेष। वै निघ।

**गुच्छदन्तिका।** स्त्री। कदलीवृक्षे। रा नि व ११।

**गुच्छपत्रः।** पु। तालवृक्षे। তালগাছ। रा नि व ९।

**गुच्छपुच्छः (क)।** पु। गुच्छकरञ्जे। रा नि व ९।

**गुच्छपुष्प. (का.)।** पु। सप्तपर्णवृक्षे। अशोक वृक्षे। रा नि व १०। (क) गुच्छकरञ्जे। रीठाकरञ्जे। रा नि व ९।

**गुच्छपुष्पी।** स्त्री। शिग्ङीनामक्षुपे। धातकी वृक्षे। रा नि व ४'६।

**गुच्छफल।** पु। रीठाकरञ्जे। रा नि व ९। कतकवृक्षे। राजादनवृक्षे। क्षीरी वृक्ष। रा नि व ११। जलवेतसे। वै निघ।

**गुच्छफला।** स्त्री। अपिदमनीनामक्षुपे। काकमाच्याम्। रा नि व ४। द्राक्षायाम्। कदलीवृक्षे। रा नि व ११। निष्पाव्याम्। रा नि व ७।

**गुच्छबुध्ना।** स्त्री। गुण्डालाक्षुपे। रा नि व ५।

**गुच्छमूल(लि)का (ला)।** स्त्री। गुण्डा सिमीक्षुपे। रा नि व ८। गुण्डालाक्षुपे। वै निघ।

**गुच्छसहा।** स्त्री। शूद्रधान्यकाम्। वै निघ।

**गुच्छार्द्धः।** पु। चतुर्विंशतियष्टिक हारविशेषे। अ।

**गुच्छालः।** पु। भूतृणे। रा नि व ८। भूक दम्भे। प मु।

**गुच्छाह्वकन्दः।** पु। गुलुच्छकन्दे। रा नि व ७।

**गुच्छी।** स्त्री। गुच्छकरञ्जवृक्षे। रा नि व ९।

**गुञ्ज।** पु। गुच्छे। श र।

**गुञ्जकृत्।** पुं। भ्रमरे। श र।

**गुञ्जनम्।** क्ली। भ्रमरादेर्गुणगुणध्वनौ।

**गुञ्जरत्नमाला।** स्त्री। वैद्यकग्रन्थभेदे।

**गुञ्जा।** स्त्री। (Abrus precatorius) स्वनामख्यातोपविषजातीयमूलविषलतायाम्। কুঁচ গাছ। हि शीषकांड्च चिरमिति। म क गुलु गुञ्जे, एरड्डु। उत् रुञ्ज। सु कल्प २ अ। तत्पर्य्याय,—गुञ्जिका (श), काकचिञ्ची, कृष्णला (अ), शाङ्कुष्ठा, रक्तिका, काकपन्तिका, काका दनी, काकतिक्ता, काकजङ्घा, शिखण्डिनी (र), काकतुण्डिका, कचा (हे), कनीचि (शब्दर), काका, काकिनी (अ टी), काञ्ची (वि), चूडा मणि, सौम्या, शिखण्डी, अरुणा, ताम्रिका, शीतपाकी, उच्चटा, कृष्णचूडिका, रक्ता, काम्भोजी, भीलभूषणा, वन्या, श्यामलचूडा, काकचिञ्चिका। गुञ्जा द्विधा श्वेतरक्तभेदात्। द्वयोर्गुणा —फल तिक्तोष्ण चक्षष्य शिरोऽर्त्तिनाशनञ्च। शिफा वान्तिकरी परञ्च शूलघ्न विषहृत्। वश्ये श्वेतञ्च शस्यते। रा नि व ३। "गुञ्जाद्वयन्तु केश्य स्याद्वातपित्तज्वरापह। मुखशोषभ्रमश्वासतृष्णामद विनाशिन। नेत्रामयहर वृष्य बल्य कण्डूव्रण हरेत्। कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च॥" भा। श्वेतगुञ्जायाम्। र सा स। मुक्तायाम्। रा नि व ६। मद्यशालायाम्। श र। यव चतुष्टयात्मके माने। गुञ्जा स्यात्तद्यवचतुष्टयम्। प म १ख। यवत्रयमाने। कचिद्वैद्यके। गोधूमद्वय माने। रा नि व २१ अ।

**गुञ्जाकिनी।** स्त्री। गुञ्जायाम्। भैष ज्व चि पानीयभक्तवट्याम्।

**गुञ्जागर्भरस।** पु। हृद्रोगे रस। पाठ — "निश्चन्द्रं रसहेम साञ्जनकरासुर्व्यंशानिक। गन्धकेन

जयाचूर्णं निम्बुबीज समानकम्। गुञ्जाबीज तदड स्यात्तदर्द्ध जयपालकम्। निम्बुद्रवेण सम्मर्द्य काकमाच्या दिनान्तकम्। धुस्तूरकजयन्तीभ्यां गुडिकां कारयेत्सुधी। गुञ्जामर्भरसो नाम्ना दातव्यो घृतसयुत। हिङ्गुसैन्धवसयुक्त मण्ड पथ्याय दापयेत्॥" पारा ५॥० तो गन्धक, जयन्तीबीज वा हवी तकी निम्बुबीज प्रत्येके ७ तो कुँचेर बीज ७ तो जयपाल १॥० तो निम्बु, काकमाची धुतुरा एवं जयन्ती रसे माड़िया वटी करिवे। र चि।

**गुञ्जातैलम्।** क्ली। कुष्ठे, गण्डमालायां तैलम्। 'गुञ्जामूलफले तैल विपक्व द्विगुणाम्भसा।" कटु तैल ४ श गुञ्जामूल फलच प्र ४ प वारि ८ श। भा। अन्यत्—"गुञ्जाफले श्रुत तैल भृङ्गराज रसेन च।" कटुतैल ४ श कुँचफल ८ प भीमराजरस ८ श। सा कौ।

**गुञ्जाद्यतैलम्।** क्ली। गलगण्डाधिकारे। गुञ्जामूल करवीरमूल बीजताडकमूल, अर्कमूल वा निर्यास, सर्षप। एषा प्र ४ तो तैल १ श (८० तो) गोमूत्र ८ श पक्वा शेषयेत। तत्र पिप्पली पञ्चलवण मरिचचूर्णे १० तो प्रक्षेप। रस र।

**गुञ्जाफलम्।** क्ली। गुञ्जाबीजे।

**गुञ्जाभद्ररस।** पु। जठरगमे हृद्रोगे च हित। पारद १॥० तो गन्धक ६ तो गुञ्जबीज ३ तो जयन्तीबीजं निम्बुबीज जैपालबीज प्र षडतोलक। जयन्तीधुस्तूरपत्रजम्बीरकाकमाची रसेन प्रत्येक विभाव्य घृतेन मर्द्दयित्वा वटी कार्य्या। मा ४ र। र सा स। भैषज्यरत्नावल्यां जयन्ती निम्ब नास्ति।

**गुञ्जिका।** स्त्री। गुञ्जायाम्। ईं ठ। विषय परिमाणे। श च।

**गुञ्जितम्।** क्ली। गुञ्जने।

**गुटिक।** पु। मत्स्यग्रामम्। मिश्रित। ज द १२ च।

**गुटिका।** स्त्री। वटिकायाम्। गुलि। गुञ्जायाम्। ईं ठ। ज द।

**गुटिकाञ्जनम्।** क्ली। तिमिराञ्जनान्यतमे ऽञ्जने। See अञ्जनम्।

**गुटिकाह्वय।** पु, क्ली। लवणविशेषे। के।

**गुण्ठ।** पु। रूपविशेषे। केशव। रा नि व ८। सुगन्धरोहिषतृणे। वै निघ। दाक्षिणात्ये। "दाक्षिणात्यो भवेद्गुण्ठो योऽश्वन्य सर्व्ववाजिनाम्।" ज द ६अ।

**गुड।** पु। इक्ष्वादिरसविकारे। गुड़। तत् पर्य्याय,—इक्षुसार, मधुर, रसपाकज, खण्डज, द्रवज, सित, मोदक, अमृतसारज, शिशुप्रिय, सितादि, अरुण, रसज (रा), इक्षुरसक्वाथ, गण्डोल, मधुबीजक (वै), गण्डोल, गुल, स्वादु खण्ड (शब्दर), स्वादु (चि)। स सामान्यत स्तुर्भेद धौताधौतपुराणनवभेदात्। तेषु धौतो नातिश्लेष्मल मलानुलोमन, अधौत प्रभूतक्रिमि मज्जासृङ्मेदोमांसकर, पुराणो हृद्य सर्व्वहितश्च, नवश्च श्लेष्माग्निमान्द्यकृत्। वा टी हेमा। सा गुणा—ऊष्णो गुरु स्निग्ध वातघ्न मूत्रशोधन नातिपित्तहर मेद कफक्रमिबलदश्च। भा। पुरातनस्य गुणा—अधिकगुण रक्तपित्तप्रशमनबलकारी च। राज। "गुडो जीर्णो लघु पथ्यो नाभि ष्यन्दाग्निपुष्टिकृत्। पित्तघ्नो मधुरो वृष्यो वातघ्नो ऽसृक्प्रसादन॥" भा। यावनालगुडस्य कटु क्षारो मधुर वातकफघ्न पित्तजनक नित्यसेवनेन कण्डुकुष्ठ जनयति अस्त्रविदाहञ्च करोति॥ रा नि व १४। "बल्यो वृष्यो गुरु स्निग्ध वातघ्नो मूत्रशोधन। स पुराणोऽधिकगुणो गुडामोऽरोचकापहः। क्षये कासे क्षतक्षीणे पाण्डुरोगेऽसृक्क्षये। हितो योगेन संयुक्तो गुड पथ्यतमो मत॥" "गुदामये कामलशोषमेहे गुल्मामये पाण्डुहलीमके च। वाते सपित्तासृजि राजरोगे रुचिप्रदो रोग हरो गुरु स्यात्॥ कासे शोषे गुडो नेष्ट अन्यत्रापि हितो मत। योगयुक्तोऽपि सर्व्वत्र हितो गुण गणालय॥ चामघामभवदञ्जाघामूर्च्छानुरोगि णाम्। अश्वशाल्मिश्रमसदविषमूत्रकृच्छ्राश्मरीणाम्। जीर्णज्वरविषमे रक्तपित्तप्रकोपे तृष्णादाह प्रदरक्षिरसे सर्व्वरोगान् निहन्ति॥" अत्रि १० अ। धुत्वीडके। हस्तभासिद्ध। प इ। कार्पासम्। कापास। अ टी। राशि। ई च।

**गुडक।** पु। गुडपक्वौषधमात्रे। यन्नाम यावत् अस्य पुष्पवीर्य्यलम्। वै।

**गुडकाष्ठ।** पु। इत्नी। वै निघ।

**गुडकुष्माण्डकम्।** क्ली। वाजीकरणाधिकारे

प्रशस्तम्। यथादिहीन किञ्चिन्नवीतृष्णिम्न शिला पिष्ट किञ्चिदातपशोषितं पुष्पकूष्माण्डखण्डं तैल घृतेन भर्जयेत् यथा मधुवर्णं भवति। सिम्नगालित कूष्माण्डद्रवे पुराणगुड दत्त्वाशोध्य पुनः च तेन मलिन कूष्माण्डक पचेत्। माइग्रावोक्तगुडपाक चिह्नावधारिते कोष्णे लवङ्गपातादिचूर्णं प्रक्षेप्यम्। कूष्माण्ड १०० प घृत ८ प तिलतैल ८ प गुड १०० प लवङ्गतेजपत्र धान्य त्रिकटु जीरक द्वय एलाद्वय चित्रक पिप्पलीमूल चव्य गजपिप्पली शुण्ठी शृङ्गाटक कशेरु तालाङ्कुर तालमस्तकच एषां प्र चूर्णं ८ प मधु ८ प। रस र।

**गुडखण्डः**। पु। गुडकृतखण्डे। थाँड़गुड़, पाटालि। गुणा—"गुडखण्डश्च मधुरं स्निग्धं वातपित्तघ्नः। किञ्चिच्छीतगुणोपेतो वल्यो वृष्यो रुचिप्रदः॥"

**गुडगुडा**। स्त्री। यावनालशर्करायाम्। रा नि व १४।

**गुडची**। स्त्री। गुडूच्याम्। श टी भ।

**गुडचुक्रम्**। क्ली। गुडकृतचुक्रविशेषे। गुड कृत सिर्कान्न। यथा—"गुडाम्बुना सतैलेन कन्द शाकफलैस्तथा। सन्धितञ्चाम्लतां यातद्गुडचुक्रं तदु च्यते॥" भा।

**गुडतृणः (त्रिण)**। पु, क्ली। इक्षौ। रा नि व १४। गुडतृणे। श र।

**गुडत्वक्**। क्ली। स्वनामख्यातगन्धद्रव्ये। गाव चिनि। तत्पर्याय,—सूतकट, भङ्ग, त्वक्पत्रं, वराङ्गकं, लच, चोल, त्वचा, पत्र, छल्ल, सुरभि वल्कल (शब्दर), उत्कट, चोच (अ), गुड़त्वचं (श), त्वक्, पत्र (अ टी)। तत्र लघूष्ण स्वादु तिक्त रुक्ष पित्तवर्द्धक अरुचिकण्ठदुर्गन्धिवातार्श कृमिपीनसघ्नश्च। भा। कफघ्नश्चामवातघ्न मधुर कटु चेति। राज।

**गुडत्वचम्**। क्ली। गुडत्वचि। जातीकोषे। जयित्री। श च।

**गुडदारु**। क्ली। इक्षौ। त्रिका।

**गुडपाक**। पु। औषधस्य गुडपाके। तल्लक्ष णम्—"यदा दर्व्याप्रलेपः स्यात् यदा वा तन्तुलो भवेत्। तोयपूर्णे च पात्रे तु क्षिप्तो न प्लवते गुडः। स्थिरत्वं नियतस्थिते त्वङ्गुलितस्तु न शीर्यति। एष पाको गुडादीनां सर्व्वेषां परिकीर्त्तितः। सुखमर्द्दं सुखस्पर्शो गन्धवर्णरसान्वितः। पीडितो भवति मुद्रा गुरुपाक सुपाकतः। गुडवद्गुग्गुलो पाक रसगन्धविवर्ज्जितः। स्नेहमध्यमहीनेषु द्वादशाष्टचतुर्थ। मधपके गुग्गुलोर्मात्रा व्याधि बोध्य प्रयो जयेत्॥ रसक्रियायां ये लेहा गुडाद्येव प्रकीर्त्तिता। तेषां विन्दुर्जले न्यस्तो न शीर्य्येत्पाकलक्षणं॥" प प्र ३ ख।

**गुडपाचक**। पु। इक्षौ। वै निघ।

**गुडपिप्पली**। स्त्री। पिप्पलीचूर्णं १ भ गुडस्य च भागद्वय जीर्णज्वरे प्रशस्तम्। अन्या यथा— विडङ्ग त्रिकटु कुष्ठ हिङ्गु पञ्चलवण यवक्षार सर्जिक्षार टङ्कणक्षार समुद्रफेन चितकमूलचूर्णं गजपिप्पली कृष्णजीरक तालजटाक्षार कुष्माण्ड नालभस्म अपामार्गक्षार तिन्तिड़ीक्षार प्र सम भाग। सर्व्वचूर्णसम पिप्पलीचूर्णं। पुन सर्व्व चूर्णद्विगुण पुरातनगुड एकत्र सम्मर्द्दम्। मा १० तो। भैष।

**गुडपुष्प (क)**। पु। मधूकवृक्षे। मउल गाछ। हि महुया। र मा। वकुलपुष्पवृक्षे। श।

**गुडपुष्पसार**। पु। मधुकपुष्पसारे। च द।

**गुडफल**। पु। पीलुवृक्षे। भा। वदरवृक्षे। रा नि व ११।

**गुडफला**। स्त्री। ह्रस्वकाश्मर्याम्। वै निघ।

**गुडभल्लातकम्**। क्ली। अर्शोरोगे। क्वाथार्थ —दशमूल, ওলকচু, বানরহাটি, গোক্ষুর, চিতা, শটী প্রত্যেকে ১ প ভল্লাতক ১০০ টা, জল ৬৪ শ শেষ ১৬ শ। প্রক্ষেপার্থ—মধু ৮ প পিপুল ৪ প এরণ্ডতৈল ৮ প গুড়ত্বক্, এলা, মরিচ প্রত্যেকে ১ পোওয়া। च द।

**गुडभा**। स्त्री। यावनालशर्करायाम्। रा।

**गुडमञ्जरी**। स्त्री। जिङ्गिन्याम्। वै निघ। कृष्णशाल्मल्याम्। एतन्निर्य्यासमिश्रेण कर्णास्रवक् नश्यति। वा उ ४० अ।

**गुडमण्डूरम्**। क्ली। अन्नद्रवशूले। पुराणगुड १ प आमलकचूर्णं १ प हरीतकीचूर्णं १ प शुद्धमण्डूर ३ प घृतमधुभ्यां सम्मर्द्य २ तो भोजनादौ मध्ये अवसाने च सेव्यम्। रस र।

**गुडमूल (क)**। पु। स्वल्पमाधिपशाके। श च। इक्षौ। भा।

प्र भे १६ प्र दुग्ध ६४ प्र। क्वाथ—यष्टिमधु मञ्जिष्ठा काहि (अभावे मला) हडि (अभावे गोरचवाहली) मेदा (अभावे अश्वगन्धा) महामेदा (अभावे अनन्ता) जीवक (गुडूची) ऋषभक (अभावे वंशरोचना) काकोली क्षीरकाकोली जीवन्ती कुष्ठम् एला अगुरु द्राचा जटामांसी पद्मनखी शटी रेणुक विकङ्कतजटा (वेंटेचिर चूर्ण) शुण्ठी पिप्पली मरिच शुलुफा श्यामालता अनन्तमूल गुडत्वक् तेजपत्र चव्य वराहक्रान्ता भूम्यामलकी शालपर्णी तगरपादुका नागेश्वर पद्म काष्ठ सौगन्धिक (शुन्दी) रक्तचन्दन एषां प्रति २ तो। सा कौ।

**गुडूचीपत्रम्।** क्ली। पत्र गुडच्या शाकार्थे। गुणा—आग्नेयं सर्व्वज्वरहरं लघु कटु कषाय तिक्त स्वादुपाकं रसायन बल्यमुष्णं सग्राहि तथाग्नं प्रमेहघ्नं दाहघ्न कामलाकुष्ठपाण्डुघ्नञ्च। भा।

**गुडूचीसत्त्वम्।** क्ली। गुडूचीसारे। गुलञ्चेर पालो। भैष।

**गुडूच्यादिगण (कषाय.)।** पु। गुडूची पद्मकारिष्टधानकारक्तचन्दनात्मके गणे। स च पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्न अग्निकृच्च। सा सू १५ अ। गुडूचीशारिवाद्राचाशतपुष्पापुनर्नवाभि कृते कषाये। च द। अन्य—"गुडूच्यतिविषा धान्यशुण्ठीविल्वाब्दबालकैः। पाठाभूनिम्बकुटज चन्दनोशीरपद्मकैः। कषाय शीतल पेय ज्वरातो सारशान्तये॥" भैष।

**गुडूच्यादिलौह।** पु। वातरक्ते रस। पाठ गुडूचीसारसंयुक्तं त्रिफलाघृतान्वय। वातरक्त निहन्त्याशु। गुडूचीसार (गुलञ्चपालो) त्रिकटु त्रिफला विडङ्ग मुस्ता चित्रकमूल—एषां प्र १ तो लौह १० तो माषप्रमाणा वटी कार्य्या। र चि।

**गुडेरः (क.)।** पु। ग्रासे। ग्रासे। उणा।

**गुडोदकम्।** क्ली। गुडाम्बुनि।

**गुडोद्भवा।** स्त्री। शर्करायाम्। रा नि व १४।

**गुडोद्भूता।** स्त्री। शर्करायाम्।

**गुण्डक।** पु। गरुडशाली। रा नि व १६।

**गुण (क.)।** प। इन्द्रिये। मे। लघ्वादौ धर्म्मे। ते च लघुगुरुस्निग्धरूक्षतीक्ष्णा इति यथाक्रमम् आकाशक्षितिजलाग्नीनां गुणा। तत्र लघु—पथ्य कफघ्न क्षिप्रपाकि। गुरु—वातघ्न पुष्टिश्लेष्मकृच्चिर पाकि च। स्निग्ध—वातघ्न श्लेष्मकारि वृष्य बल्यञ्च। रूक्ष वातकर कफनाश। तीक्ष्ण—पित्त कर लेखनं कफवातघ्नञ्च। सुश्रुतस्तु विंशतिगुणा नाह यथा—लघुगुरुस्निग्धरूक्षतीक्ष्णश्लक्ष्णस्थिरसर पिच्छिलविशदशीतोष्ण मृदुकर्कशस्थूलसूक्ष्मद्रवशुष्का स्त्रमंदा इति।

**गुणकर्णिका।** स्त्री। इन्द्रवारुणीलतायाम्। रा नि व ३।

**गुणत्रयम्।** क्ली सत्वरजस्तमःसु। लक्षण—"सत्व रजस्तमश्चेति प्रोक्तास्त्रयो गुणा। तत्र सत्त्व श्लेष्मा रज पित्त तमश्च वायु। सत्त्वं श्लेष्मा रज पित्त तमश्चापि समीरण। द्रव्यस्य मानसु द्रिक्त पुंसि पुरुषानुवर्त्तते॥" रा नि व २१।

**गुणमहोदधिः।** पु। कासाधिकारे। पारद गन्धक लौह विष त्वक् (गुडत्वक्) ताम्र वङ्ग अभ्र—एषां प्रति १ तो त्रिकटु तेजपत्र मुस्तक विडङ्ग नागेश्वर रेणुक एला पिप्पलीमूलञ्च एषां प्र २ तो बालकपिप्पलीक्वाथेन जम्बीररसेन च भावना दातव्या। मात्रा चणकाभा। रस कौ।

**गुणलयनिका (नी)।** स्त्री। पटनिर्म्मितगृहे। ताँबू।

**गुणवतीवर्त्ति.।** स्त्री। व्रणरोगे हिता। धूनक लोध्र सिन्दूरम् अतिविषा हरिद्रा विभीतकफल कम्पिल्लक श्रीवास गुग्गुलुश्च, एषां प्र समभाग घृततैलाभ्यां सम्पिष्य त पिण्ड तुल्यसिक्थक (मोम मदग्निना पक्का सम्मिश्रित ज्ञाला वह र्त्ति। रस र।

**गुणवत्तरा।** स्त्री। जीवन्तीशाके। प सु।

**गुणसू।** स्त्री। कार्पासीक्षुपे। रा नि व ४।

**गुणा।** स्त्री। दूर्व्वायाम्। मांसरोहिण्याम्। मद्यसामान्ये। रा नि व ८।१२।१४।

**गुणाढ्यकः।** पु। अङ्कोलवृत्ते। वै निघ।

**गुणारिष्टम्।** क्ली। मद्ये। रा।

**गुणी (इन्)।** पु। आवर्त्तकाम्। ञ्जापटी। वै निघ। त्रि। शब्दाद्याधारे आकाशादौ। च।

**गुणोज्ज्वला।** स्त्री। चुद्रश्वेतयूथिकायाम्। वै निघ।

**गुण्ठः।** पु। तृणद्वये। सा सू १५ अ। "हथा,

दनीनलकुशद्वयगुण्ड्रगुन्द्रा ।" दाक्षिणात्यघोटकभेदे। See अश्व ।

**गुण्ड्रः** । पु। (Scirpus kysoor) कशेरु वृणे। अस्य कन्द कशेरुरिति। केशुर घास, গোঁড়ো কেশুর। केशटीति लोके। मवलहातीनि। क मुरगेर। ततपर्याय,—काण्डगुण्ड, दीर्घ काण्ड, त्रिकोणक, छत्रगुच्छ, असितव, नील पत्र, विधारक । गुण्ड्रस्त्रिविध—वृत्तगुण्ड्र लघु स्थूलगुण्डी च। सा गुणा—मधुरा शीता कफ पित्तातिसारघ्ना दाहरक्तहराय। मध्ये स्थूलतरी ऽधिकगुणश्च। रा नि व ८। सुगन्धरोहिषवृणे। वै निघ ।

**गुण्ड्रक** । पु। चूण। भेष ।

**गुण्ड्रकान्द'** । पु। कशेरौ। কেশুর। रा नि व ८।

**गुण्ड्रता** । स्त्री। यावनालशर्करायाम्। रा नि व १४।

**गुण्ड्रस** । पु। सर्पजातिभेदे। अनि २ स्थान।

**गुण्ड्रा** । स्त्री। काशवृणभेदे। ছোট কেশে। रा नि व ८।

**गुण्ड्राफली** । स्त्री। देवदाल्याम्। পীতঘোষা। वै निघ ।

**गुण्ड्रारोचनिका (नी)** । स्त्री। स्वनामख्यात गन्धद्रव्ये। কমলাগুড়ি। र. मा।

**गुण्ड्राला** । स्त्री। स्वनामख्यातक्षुद्रक्षुपे। गुडाला, गौंडाल। ततपर्याय,—जलोद्भवा, गुच्छवधा, जलाश्रया। गुणा—कटुतिक्तोष्णा शीवशमनी च। रा नि व ५। गुण्ड्रासिनीवृणे। रा नि व ८।

**गुण्ड्रासिनी** । स्त्री। स्वनामख्यातवृणविशेषे। ततपर्याय,—गुण्डाला, गुडाला, गुच्छमूलिका, चिपिटा, शृणपर्वी, यवासा, पृथुला, विष्टरा। गुणा—स्वादकटु तिक्तोष्णा पित्तदाहश्रमघ्नी पशुघ्नी व्रणदोषघ्नी च। रा नि व ८।

**गुण्डिक** । पु। तण्डुलादिचूर्णे। গুঁড়া।

**गुत्य'** । पु। रवैधुकायाम्। र मा। भा म खण्ड चि। गुड्रश्चाम्। च द अतिसा चि।

**गुत्यकम्** । क्ली। ग्रन्थिपर्णे। গেঁঠেলা। र मा।

**गुत्स (क)** । पु। ग्रथिपत्त्रे। मे। गुच्छे।

**गुत्सपुष्प** । पु। सप्तच्छदवृक्षे। जटा।

**गुदम्** । क्ली। The anus मलत्यागद्वारे। মলদ্বার जटा। स्थूलान्त्रप्रतिबद्धसार्द्धपञ्चाङ्गुल गुदपरिमाणम्, तत्र वलय तिस्रोऽध्यर्द्धाङ्गुलान्तर भूता। चतुरङ्गुलायता सर्वास्तिर्य्यगेकाङ्गुलो च्छ्रिता। सु नि २अ। भावप्रकाशस्तु सार्द्ध चतुरङ्गुलमाह। तल्लक्षण यथा—"गुदस्य मान सर्वस्य सार्द्धं स्याच्चतुरङ्गुलम्। तत्र सुर्वलयस्तिस्र शङ्खावर्त्तनिभास्तु ताः। प्रवाहिणी भवेत पूर्व्वा सार्द्धाङ्गुलमिता मता। उत्सर्ज्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता। तदधः संवरणी स्यादेका ङ्गुलसमा मिता। अर्द्धाङ्गुलप्रमाणन्तु बुधैर्गुद मुख मतम्। मलोत्सर्गस्य मार्गोऽयं पायुर्देहे विनि र्म्मित॥" भा। तदुत्पत्तिरन्त्रशब्दे द्रष्टव्या।

**गुदकील (क)** । पु। अर्शोरोगे। रा नि व २०।

**गुदकुट्ट(न्द)क** । पु। शिशोर्गुदजताम्रवर्ण व्रणविशेषे। लक्षणम्—"मलोपलेपात स्वेदाद्वा गुदे रक्तकफोद्भव। ताम्रवर्णोऽन्त कण्डूमान् जायते भूयुपद्रव। केचित्त मातृकादोष वदन्त्यन्येऽपि पूतनम्। प्रष्टाकगुदकुन्दञ्च केचिच्च तमनासिकम्॥" वा उ २अ।

**गुदग्रह** । पु। उदावर्त्तरोगे। हे च। पायु वेदनायाम्। च इन्द्रिय १०अ।

**गुदजघ्न** । पु। कटुशूरणे। वै निघ।

**गुदजारि'** । पु। देवताडवृक्षे। वै निघ।

**गुदपाक** । पु। गुदकुन्दरोगे। वै निघ।

**गुदवलि'** । स्त्री। शङ्खावर्त्तवत् गजतालुसवर्णा पायुस्थवलित्रये। See गुदम्।

**गुदभ्रंश** । पु। (Prolapsus ani) गुद निर्गमरोगविशेषे। হাড়িস। तस्य लक्षण यथा— "प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहि। रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत्॥" मा नि।

**गुदाङ्कुर** । पु। अर्शरोगे। हे च। मा नि।

**गुदामय** । पु। अर्शसि। र सा स।

**गुदामयहर** । पु। कटुशूरणे। বুনো ওল। वै निघ।

**गुदास्थि** । क्ली। पायुस्थास्थि। च शा ७अ।

**गुदौष्ठः** । पु । मलद्वारमूले । "रोगान्तेभी यथाश्रद्धा गुदौष्ठ परिकीर्तितः ।" सु नि ७ अ ।

**गुन्थफलः** । पु । नारिकेलवृक्षे । वै निघ ।

**गुन्दगुच्छकः** । पु । गुच्छकरञ्जे । वै निघ ।

**गुन्दा(न्द्रा)लः** । पुं । जीवञ्जीवपक्षिणि । চকোর । हे च ।

**गुन्द्रः** । पु । पाटरकाख्यशरे । ভদ্র গাছ । হি गन्दपटेर । तत्पर्याय,—पटरक, षण्ढ, मृद्वेदाख मुस्तक । गुणा—कषायत्व मधुरत्व हिमत्व रक्तपित्तमूत्रकृच्छ्रनाशित्व स्तन्यमूत्ररज-शोधकत्वञ्च । भा । शरवृक्षे । अम । मुस्तक तृणे । वै निघ ।

**गुन्द्रकः** । पु । गुन्द्रशरे । प सु । भा म अश्मरी चि ।

**गुन्द्रमूला** । स्त्री । एरकातृणे । भा । मुस्तक तृणे । वै निघ ।

**गुन्द्रा** । स्त्री । गवेधुकायाम् । पद्मरकी, गीदर इति लोके । গড়গড় । सु सू ४६ अ । देवधान्ये । र मा । रोचनिकायाम् । सि यो कृमि चि । भद्रमुस्तके । त्रिका । प्रियङ्गौ । अम । गुड्त्याम् । च सू ४ अ । चि ३ अ । एरण्डवृक्षे । शिरीष वृक्षे । दर्भे । वै निघ । एरकातृणे । भा ।

**गुन्द्राल'** । पु । जीवञ्जीवपक्षिणि । हे ।

**गुप्तगन्धिः** । स्त्री । एलवालुके । रा नि व ४ ।

**गुप्तपत्रकः** । पु । मध्वालुके । চৌ আলু । प सु ।

**गुप्तपुष्पः** । पु । सप्तपर्णवृक्षे । वै निघ ।

**गुप्तफला** । स्त्री । काकजङ्घायाम् । গুড়কাউনি । वै निघ ।

**गुप्तबीजम्** । क्ली । तृणे । वै निघ ।

**गुप्तस्नेह. (ही (हन्) )** । पु । अङ्कोटवृक्षे । আঁকোট গাছ । रा नि व ११ ।

**गुप्ता** । स्त्री । कपिकच्छ्वां । रा नि व ३ । चन्दन विशेषे । चूर्णा । वै निघ ।

**गुप्तागुरुः** । स्त्री । शुकशिम्बाम् ।

**गुप्ताफलम्** । क्ली । शुकशिम्बीबीजे । আলকুশীর বীজ । सु चि २६ ।

**गुप्तिः** । स्त्री । अवकरस्थाने । रक्षणे । मेदनी । हे च ।

**गुम्टी** । स्त्री । तृणधान्यभेदे । গড়গড় । गुणा श्यामाकवत् । च, सू २७ अ ।

**गुम्फः** । पुं । श्मश्रुणि । গোঁপ । श र ।

**गुरवकः** । पु । गरुडशाली । रा नि व १६ ।

**गुरुः** । पुं । पिच्छाली । प सु । स्त्री । कपिकच्छ्वां । रा नि व ३ । त्रि । अलघुद्रव्ये, दुष्पच द्रव्ये पृथिवीसोमगुणभूयिष्ठे । तत्र त्रिविध— स्वभावगुरु, मात्रागुरु, संस्कारगुरु चेति । स्वभाव गुरु तत् यत्प्रकृत्या गुरु तत्र माषादिकं, मात्रागुरु यत् मुद्गादिकं, संस्कारगुरु च पिष्टान्नादि । यथा—"मन्दानलकरं द्रव्य मात्रागुरु विवर्जयेत् । स्वभावतश्च गुरु यत्तु संस्कारतो गुरु । मात्रागुरु तु मुद्गादि माषादि प्रकृतेर्गुरु । संस्कारगुरु पिष्टान्न मीकमित्युपलक्षणम् ॥ गुरु वातघ्नं पुष्टिश्लेष्म कृच्चिरपाकि चेति" भा । शीसधातौ । वै निघ ।

**गुरुकण्टकः** । पु । तिलमयूरे । त्रि ।

**गुरुकोष्ठः** । त्रि । गुरुपाकिकोष्ठे ।

**गुरुगन्धिकम्** । क्ली । अगुरुणि । वै निघ ।

**गुरुगुणः** । त्रि । यच्चिरेण पक्व तद्गुरुगुणः । मा टी हेमा ।

**गुरुघ्नः** । पु । गौरसर्षपे । रा नि व १६ ।

**गुरुपटकः** । पु । तिलमयूरे । त्रिका ।

**गुरुतण्डुला** । स्त्री । उष्णाशाली । रा नि व १६ ।

**गुरुता** । स्त्री । गौरवे । जाड्ये । मा नि ।

**गुरुत्वम्** । क्ली । गौरवे । जाड्ये ।

**गुरुपञ्चमूली** । स्त्री । वृहत्पञ्चमूली, सा बिल्व श्योणाक गाम्भारी पाटला गणिकारिका इति पञ्च मूलात्मिका वातकफे हिता । च द ज्व चि । "पञ्चमूल्या लघीयस्या गुर्व्या वाभ्यां सधान्यया ।"

**गुरुपत्रम्** । क्ली । वङ्गे । हे च ।

**गुरुपत्रा** । स्त्री । तिन्तिडीवृक्षे । श र ।

**गुरुपाकः** । त्रि । य पक्व विष्टभ्य जनयति त्र भापञ्च करोति स गुरुपाक । मा टी हेमा । दुष्टविण्मूत्रतया कफोत्क्लेशेनानुमेयम् । सु सू ४१ अ ।

**गुरुपुष्प'** । पु । क्रमुकवृक्षे । গুপারি গাছ । वै निघ ।

**गुरुरत्नम्** । क्ली । पुष्परागमणौ । रा नि व १३ ।

**गुरुवर्च्चोघ्न.** । पु । लिम्पाकवृक्षे । কাগজী বা পাতিলেবুর গাছ । श्र च ।

**गुरुवीज** । पु । मसूरे । रा नि व १६ ।

**गुरुशिंशपा** । स्त्री । शिंशपावृक्षे । वै निघ ।

**गुरुश्रेष्ठम्** । क्ली । वङ्गधातौ । রাঙ্গ । वै निघ ।

**गुरुस** । पु । गरुडयालौ । रा नि व १६ ।

**गुरुसारा** । स्त्री । शिंशपावृक्षविशेषे ।

**गुरुस्कन्धः** । पु । क्षीरिणीवृक्षे । वै निघ ।

**गुरुस्वेद** । पु । अन्नस्य स्वेदविशेषे । लक्षण— "यत्र क्वाथेन य स्वेद गुरुस्वेद स उच्यते ।" क द १८८ ।

**गुर्व्वर्च्चनम्** । क्ली । पूज्यार्च्चने । गुणा—"स्वर्ग्यं यशस्यमायुष्यम् अलक्ष्मीकविनाशनम् । धनधान्यकर नित्य गुरुदेवद्विजार्च्चनम् ॥" राज २५ ।

**गुर्व्विणी** । स्त्री । गर्भवत्याम् । रा नि व १८ ।

**गुर्व्वी** । स्त्री । गुवाकवृक्षे । गर्भिण्याम् । मे ।

**गुलः** । पु । गडे । मे ।

**गुलक** । पु । गुच्छतृणे । वै निघ ।

**गुलञ्चकन्द'** । पु । गुच्छकन्दे । কুনী । म कुलीहाल । तत्पर्य्याय,—गुच्छालकन्द, बलाह कन्द, निर्घण्टिका । गुणा—मधुरत्व शीतलत्व रुच्यत्व तर्पकत्व दाहघ्नत्वञ्च । रा नि व ७ ।

**गुलदावदी** । स्त्री । स्वलपद्मभेदे । গোলক ফুল । हि गौलावद्दडी ।

**गुला** । स्त्री । स्नुहीवृक्षे । मे ।

**गुलाल** । पु । भूतृणे । गन्धतृणविशेष । रा नि व ८ ।

**गुलाव** । पु । पुष्पविशेषे । গোলাপ ফুল ।

**गुलिका 'ली)** । स्त्री । गुडिकायाम् । रोग विशेषे । বসন্ত রোগ । मे ।

**गुलिकालवणम्** । क्ली । गुटिकालवणे । वै निघ ।

**गुलुच्छ' (ञ्छ )** । पु । पुष्पस्तवके । त्रिका ।

**गुलुच्छकन्द** । पु । गुच्छकन्दे । वै निघ ।

**गुलोरिका** । स्त्री । गुल्फे । वै निघ ।

**गुल्फ'** । पु । पादग्रन्थौ । পায়ের গুল্ফ, গোড়ালী । इ च । "जङ्घाङ्घ्रिसन्धिग्रन्थौ तु घुटिका गुल्फ इत्यपि ।' रा नि व १८ । जङ्घाख्य मर्म्मविशेषे । सु । तत्पर्य्याय,—घुटिका (श्र), चरणग्रन्थि, घुटिक, घुण्टक, घुण्ट (इ), घुटि, घुटी (हि) ।

**गुल्फास्थि** । क्ली । पादघुटिकास्थनि । গুল্ফের হাড় । च शा ७च ।

**गुल्म** । पु । प्लीहायाम् । रोगविशेषे । स च पञ्चस्थानेषु पञ्चविध वातादिभेदेन । कारणपूर्व्वक तस्य लक्षण यथा—"दुष्टा वातादयोऽत्यर्थं मिथ्या हारविहारत । कुर्व्वन्ति पञ्चधा गुल्म कोष्ठान्त ग्रन्थिरूपिण ॥' तस्य लक्षण—"हृन्नाभ्योरन्तरे ग्रन्थि सञ्चारी यदि वाचल । चयापचयवान् स गुल्म इति कीर्त्तित ।—स व्यस्तैर्जायते दोषै समस्तैरपि चोच्छ्रित । पुरुषाणा तथा स्त्रीणां ज्ञेयो रक्तेन चापर ॥" आर्त्तवजमाह—"आर्त्तवादपि गुल्म स्यात् स तु स्त्रीणां प्रजायते । अन्यस्त्वसृग्भव एषा तथा स्त्रीणां प्रजायते । तत्स्थानमाह—तस्य पञ्चविध स्थान पार्श्व हृन्नाभिवस्तय ।" पूर्व्वरूप —"उद्गार बाहुल्यपुरीषबन्ध तृप्त्यक्षमत्वान्त्रविकूज नानि । आटोपमाध्मानमपक्तिशक्तिमासन्नगुल्मस्य वदन्ति चिह्नम् ॥ अरुचिकृच्छ्रविण्मूत्रवातत्वान्त्र कूजन । आनाहश्चोर्द्ध्ववातश्च सर्व्वगुल्मेषु लक्षयेत् ॥" भा । तस्य चापक्वताकारणे सुश्रुत । "तुल्यदोष समुत्थानात् विद्रधेर्गुल्मकस्य च । कस्मान्न पच्यते गुल्मो विद्रधि पाकमेति च । गुल्मरूपा स्वय दोषा विद्रधिमांसशोणिते । तस्मान्न पच्यते गुल्मो विद्रधि पाकमेति च ॥" इति । ग्रन्थिपर्णवृक्षे । গেঁঠেলা । काण्डशून्यवृक्षजातौ । ঝোপ, ঝাড়ি বন । घट्टभेदे । त्रिका ।

**गुल्मक** । पु । रक्तकरवीरवृक्षे । वै निघ ।

**गुल्मकालानलरस** । पु । गुल्माधिकारे रस । पारद गन्धक ताल ताम्रक टङ्कण यवक्षार प्र तोलकद्वयमितं मुस्तकं पिप्पली शुण्ठी हरीतकी वचा कुष्ठ प्र तोलक चूर्णयेत् सर्व्वमेकीकृत्य पर्पट मुस्तकशठीपामार्गपाठाक्वाथेन भावयित्वा शुष्कङ्कृत्वा चूर्णयेत् । मात्रा गुञ्जाचतुष्टय । भैष । टङ्कण स्थाने लौहमिति रसेन्द्रसार । महान् यथा —गन्धक तालकं ताम्र तथैव लौहवलीहक समांश

**तुण्डिकेरफला** । स्त्री । तालगलरोगविशेषे । वै निघ ।

**तुण्डिकेशी** । स्त्री । बिम्बिकायां । शटी ।

**तुण्डिभ (ल)** । त्रि । पुष्टे । वृद्धनाभियुक्ते । अम ।

**तुत्थ(क)म्** । क्ली । Sulphate of copper. ताम्रस्योपधातौ स्वनामख्यातपदार्थे । तूँतिया । रमा । तुत्थं द्विविध मयूर खर्परीतुत्थञ्च । तत् पर्य्याय,—नीलाञ्जन, हरिताश्म, तुत्थक, मयूर ग्रीवक, ताम्रगर्भ, अमृतोद्भव, मयूरतुत्थ, शिखि कण्ठ, नील (रा), तुत्थाञ्जन शिखिग्रीव, वितु न्नक, मयूरक (अ), भूतक, मूषातुत्थ, मृतामर्द (श), हेमसार । रचि । गुणा—"तुत्थं कटु कषायोष्णं श्वित्रनेत्रामयापहं । विषदोषेषु सर्व्वेषु प्रशस्तं शान्तिकारकं । खर्परी कटुका तिक्ता चक्षुष्या च रसायनी । त्वग्दोषशमनी रूक्षा दीप्या पुष्टिविवर्द्धनी ॥" रा नि व १३ । 'तुत्थं ताम्रोप धातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुण तस्मात् वक्ष्यमाणगुणञ्च तत् ॥" भा पू १भ । क्षार निर्म्मल लघु भेदक कृमि कण्डू कुष्ठ कफ पित्तघ्नम् । राज । "गन्धकेन पचेत्तुल्यं तुत्थार्द्धं नार्द्धयामकं । वान्तिभ्रान्ती यदा न स्त तदा शुद्धिं विनिर्द्दिशेत् ॥" इति शुद्धि । शा कौ । अपच— "विष्ठया मर्द्दयेत्तुत्थं मार्ज्जारककपोतयोः । दशांश टङ्कणं दत्त्वा पचेल्लघुपुटे तत । पुट दद्यात् पुटद्वन्द्वं दद्यात् तुत्थविशुद्धये ॥" भा । कृमिमरसाञ्जने । चपा ।

**तुत्थखर्परिका (री)** । स्त्री । खर्परिकायां । थापत्र । वै निघ ।

**तुत्थनी** । स्त्री । एलायां । शिवलिङ्गिन्यां । वै निघ ।

**तुत्था** । स्त्री । नीलीवृक्षे, महानील्यां । रा नि व ४ । क्षुद्रैलायां । अम ।

**तुत्थाञ्जनम्** । क्ली । तुत्थे । अम ।

**तुनिकः** । पुं । तूनीवृक्षे ।

**तुन्तुभ.** । पु । सर्षपवृक्षे । भा पू १भ धान्यव ।

**तुन्दम्** । क्ली । उदरे । रा नि व १८ ।

**तुन्द'** । पु । स्थविरे । रा नि व २० । नाभौ । त्रिका ।

**तुन्दकूपिका (पी)** । स्त्री । नाभ्याम् । हे च । त्रिका ।

**तुन्दपरिमार्ज्जः (मृज)** । त्रि । अलसे । अटी र ।

**तुन्दि** । क्ली । उदरे । हे च । स्त्री । नाभौ । त्रिका ।

**तुन्दिकः** । पु । पृथूदरमानुषे । स्त्री । नाभौ । शर ।

**तुन्दिकरः** । पु । नाभौ । त्रिका ।

**तुन्दिका** । स्त्री । नाभौ । शब्दर ।

**तुन्दिभ. (ल')** । त्रि । स्थूलोदरे । भुँड़ो । शर ।

**तुन्दिलफला** । स्त्री । त्रपुषीलतायाम् । रा नि व ७ ।

**तुन्दी** । स्त्री । नाभौ । शर ।

**तुन्न' (कः)** । पु । (Cedrela Toona) वृक्षविशेषे, तूणीवृक्षे । টুন গাছ । हि महा निम, तुन् । उत् महालिम्बु । पुं, द्राबी । अम । त्रि । पीड़िते ।

**तुन्नकारिका** । स्त्री । भूम्यामलक्याम् । वै निघ ।

**तुन्नसेवनी** । स्त्री । शिर कटीकपालसन्धिदेशेषु । सु शा ५ष ।

**तुभ.** । पु । बर्कॅरे । বোকা ছাগল । वै निघ ।

**तुमुल.** । पु । विभीतकवृक्षे । मे ।

**तुम्ब' (क.)** । पु । अलाब्वाम् । লাউ । पसु । शर ।

**तुम्बकम्** । क्ली । धन्याके । धनिया । कान्दर्पेरा हैसे ।

**तुम्बरुः** । पु । तुम्बुरी । নেপালি ধনে । वै निघ ।

**तुम्बा** । स्त्री । अलाब्वाम् । पसु । तिक्त तुम्ब्याम् । वै निघ ।

**तुम्बि'** । स्त्री । तिक्ततुम्ब्याम् । अलाब्वाम् । शर ।

**तुम्बिका** । स्त्री । कटुतुम्ब्याम् । रा नि व ३ ।

**तुम्बिनी** । स्त्री । कटुतुम्ब्याम् । रा नि व ३ ।

**तुम्बी** । स्त्री । अलाब्वाम् । प मु । कटुतुम्ब्यां । তিৎলাউ । भा । पु (तूम्)। सरलवृक्षे । रा नि व १२ । विम्बिकाफले । कुलिकवृक्षे ।

**तुम्बीतैलम्** । क्ली । गलगण्डाधिकारे तैलम् । कटुतैल ४ श पुराणतिक्तालाबूरस १६ श । कल्कार्थे—विडङ्ग यवक्षार सैन्धव वचा रास्ना चित्रकमूल त्रिकटु देवदारु एषां प्रति ८ तो । भैष । चद ।

**तुम्बीपुष्पम्** । क्ली । अलाबुपुष्पे । लताम्बुजे । हारा ।

**तुम्बुक.** । पुं, क्ली । अलाब्वाम् । लाउ । इन्द्रचन्द्र ।

**तुम्बुर (रो)** । पु, स्त्री । तुम्बुरुवृक्षे । र मा । आर्द्रधान्यके । त्रिका । कुक्कुरस्त्रियां । मे ।

**तुम्बुरुः** । पु, क्ली । (Xanthoxylon alatum Syn Z hostile) स्वनामख्यातफल वृक्षविशेषे । তেজবলের গাছ, নেপালি ধ'নে, তাম্বুল ফল । हि तेजबल, तुमरु । म तन्दु । क तुम्बुरु । तत्पर्याय,—शलघ (र), सौरज, सौरभ, सौर, वनज, सानुज, द्विज, अन्धक, तीक्ष्णकल्क, तीक्ष्णफल, तीक्ष्णपत्र, महामुनि, स्फुटल, सुगन्धि । तत्फल मरिचवत् । च सू ३ अ । एतदभावे धान्यक ग्राह्यम् । गुणा —मधुर तिक्त कटूष्ण वात कफघ्न शूल गुल्मोदराध्मान क्रिमिघ्न अग्निदीपनश्च । रा नि व ११ । "तुम्बुरु प्रथितं तिक्त कटु पाकेऽपि तत्कटु । रूक्षोष्ण दीपन तीक्ष्ण रुच्य लघु विदाहि च । वातश्लेष्माक्षिकर्णोष्ठ शिरोरुग्गुरुताक्रमीन् । कुष्ठ शूलारुचि श्वासप्लीह क्रच्छ्राणि नाशयेत् ॥" भा ।

**तुर(ग,ङ्ग)गन्धा** । स्त्री । अश्वगन्धायां । प मु ।

**तुरग(ङ्ग)द्विप(द्वेषि)णी** । स्त्री । महिष्यां । रा नि व १९ । वै निघ ।

**तुरग(ङ्ग)प्रिय** । पु । यवे । रा नि व १६ ।

**तुरगशिफा** । स्त्री । अश्वगन्धामूले । च द वा व्या चि ।

**तुरगाह्वा** । स्त्री । अश्वगन्धायाम् । मद व १ । घोण्टायां । শেয়াকুল । रा नि व ८ ।

**तुरगी (गिन्)** । त्रि । अश्वारोहे । हेच । स्त्री । अश्वगन्धायां । घोण्टायां । रा नि व ४।८ । अश्वां ।

**तुरङ्ग (मः)** । पु । घोटके । अम । चित्ते । श र । स्त्री । गन्धके । र सा स । सैन्धवे । भ ।

**तुरङ्गक** । पु । हस्तिघोषायां । र मा ।

**तुरङ्गरिपु (ङ्गारि.)** । प । करवीरवृक्षे । र मा । वै निघ २भ विषमज्वरचि । महिषि ।

**तुरङ्गा (ङ्गा) (ङ्गी)** । स्त्री । अश्वगन्धायाम् । वै निघ । मद व १ । प मु । घोण्टायाम् । ঘোটাবদর । रा नि व ८ ।

**तुरङ्गारि** । पु । करवीरवृक्षे । र ।

**तुरङ्गिका** । स्त्री । देवदालीलतायां । দেয়া- তাড়া । रा नि व ३ । See अगरी ।

**तुरङ्गी** । स्त्री । अश्वगन्धायाम् । शब्दर । वोष्टिकावृक्षे । रा ।

**तुरुष्क** । पु । सिह्लके । शिलारस । प मु । सु सू ३८ अ । वा टी हेमा । अरुष्कस्तु क्वचित् निर्यासविशेषमाह । वै निघ शतावरीनारायणतैले । च द वा व्या चि १८ अ शतिकमहाराजप्रसारणीतैले । तद्देशीयाश्वे । म द ६ व । घण्टापाटलवृक्षे । घण्टापारुल गाछ' শীবাসি । তাপিন তেলের গাছ । माधवके । त्रिका ।

**तुलम्** । क्ली । शब्दादर्शनामवृक्षभेदे । श ।

**तुलसी** । स्त्री । (Oci(y,mum sanctum) Holy basil स्वनामख्यातक्षुपे । তুলসী গাছ । हि बरण्डा, तुलसी । म तुलसीचेंझाड । तै कृष्ण, गगेरचेट्टु श्रुतुलसी, तुलसीचेट्टु । ता तुलसी । दा तुलसी । वम् तुलस । तत्पर्याय, —सुभगा, तीव्रा, पावनी, विष्णुवल्लभा, सुरेज्या, सुरसा, कायस्था, सुरदुन्दुभि, सुरभि, बहुपत्री, मञ्जरी, हरिप्रिया, अपेतराक्षसी, श्यामा, गौरी, त्रिदशमञ्जरी, भूतघ्नी, भूतपत्री (रा) पर्णास, वृन्दा, कठिञ्जर, कुठेरक (शब्दर), वैष्णवी, पुण्या, पवित्रा, माधवी अमृता, पत्रपुष्पा, सुगन्धा, गन्धहारिणी, सुरवल्ली, प्रेतराक्षसी, सुवहा, ग्राम्या, सुलभा, बहुमञ्जरी, देवदुन्दुभि (भा.) । अन्या—(O gratissimum) রামতুলসী । हि रामतुलसी । तै निम्मतुलसी । ता एलुमिच्छम् तौलसी । दा रामतुलसी । अपरा—(Ocimum Basilicum) See विश्वतुलसी । सुदपत्र तुलसी गन्धतुलसी कृष्णतुलसी विल(व)गन्धतुलसी श्वेततुलसी बर्बरीतुलस्य इति षड्भेदा तुलसी ।

दीपन हृद्य हृत्पाण्डु,पार्श्वरोगनुत् ग्रहण्यर्शो विकारघ्न भेदि सौवीरकं तथा॥" सुश्रु ।

**तुषाम्बुवटम्** । क्ली । तुषाम्बुपक्वान्ने । वै निघ ।

**तुषाम्भः** । क्ली । तुषाम्बुनि । भेषरपिशलचि ।
"अम्लतुषाम्भसा ।"

**तुषार** । पु । कर्पूरे । चीनकर्पूरे । रा नि व १२ । जलकणायां । मे । "यदि नद्याः समुद्रान्ते वह्निरापस्तदुद्भवा । धूमावयवनिर्मुक्ता तुषारा ख्यास्तु ता स्मृता ॥" भा । त्रि । शीतले । हिमे । मे ।

**तुषारकाल** । पु । शरत्काले । वै निघ ।

**तुषारगौर** । पु । कर्पूरे । भीमसेनीकर्पूरे । चीनकर्पूरे । वै निघ ।

**तुषाराम्बु** । क्ली । नीहारजले ।

**तुषोत्थम्** । क्ली । तुषोदके । सौवीरकाञ्जिके । रा नि व १५ ।

**तुषोदकम्** । क्ली । सतुषयवकाञ्जिके । हारा । सौवीरकाञ्जिके । रा नि व १५ । च सू २७ । तल्लक्षण—"भृष्टान् माषतुषान् सिद्धान् यवांस्तु चूर्णसंयुतान् । आप्यतानभसा तद्ज्ञात तत्र तुषोदकम् ॥ च । "तुषोदक यवैरामैः सतुषैः शकलीकृतैः ।" गुणा—"तुषाम्बु दीपन हृद्य पाण्डुकृमिगदापहम् । तीक्ष्णोष्ण पाचन पित्तरक्तकृत् वस्तिशूलनुत् ॥" भा । "तुषोदक वातपित्ताहरन्तु प्रभेदकं रक्तपित्ताहरञ्च । विपाचकं स्याज्ज्वरञ्च कृमिघ्नम् अजीर्णहन्तृ कटुकं विपाके ।" अत्रि ११ अ । "तुषाम्बु दीपन हृद्य हृत्पाण्डुपार्श्वरोगनुत् । ग्रहण्यर्शोविकारघ्न भेदि सौवीरकं तथा ॥' सु ।

**तुष्टि** । स्त्री । ऋद्ध्यौषधे । वै निघ ।

**तुस** । पुं । तुषे । भटोर ।

**तुस्तम्** । क्ली । रजसि । धूलौ । के ।

**तुहिन** । पु । कर्पूरे । क्ली । हिमे । अम । स्त्री । ग्रकणाशायाम् । ज्योत्स्नायां । वै निघ ।

**तुहिनांशु** । पु । कर्पूरे । रा नि व १२ ।

**तुहिनांशुतैलम्** । क्ली । कर्पूरतैले । रा नि व १५ ।

**तूण** । पुं । तूणीकवृक्षे । तूण गाछ ।

**तूणि(णी)क** । पु । (Cedrela Toona) कोङ्कणे नन्दीवृक्ष इति ख्याते वृक्षे । तूण गाछ । हि तूणि, महानिम् । उत् महानिम्ब । प द्रवी । तत्पर्यायः,—तूणीक, तुणी, पीतक, कच्छप, नन्दी, कुठेरक, कान्त, तुन्नीक, आपीन, कच्छक, कान्तलक, नन्दीवृक्ष, नन्दक, तूणीयक । गुणा—कटु तिक्त पीत रक्तपित्त दाहघ्न शिरोवेदनाघ्न श्वेतकुष्ठघ्न सुगन्धि पुष्टि कर वीर्यकरञ्च । रा नि व १२ ।

**तूणी (इन्)** । पु । नन्दीवृक्षे । तूण गाछ । रा नि व १२ । 'तूणी रक्त कटु पाके कषायी मधुरो लघु । तिक्तो ग्राही हिमो हृद्यो व्रणकुष्ठास्र पित्तजित् ॥" भा । नीलीवृक्षे । वै निघ । स्त्री । वातव्याधिविशेषे । लक्षण यथा—'अधो या वेदना याति वर्चोमूत्राशयोत्थिता । भिन्दतीव गुदोपस्थ सा तूणीत्युपदिश्यते ॥" सु नि १अ ।

**तूत (द)** । पु, क्ली । तूलकाष्ठे । गुणा—"तूत पक्व गुरु स्वादु हिम पित्तानिलापहम् । तदेवामं गुरु सरमम्लोष्ण रक्तपित्तकृत् ॥' भा आमव । ब्रह्मवृक्षे । रा नि व ८ ।

**तूतकम्** । क्ली । तुत्थे । श च ।

**तूरी** । स्त्री । धुस्तूरके । भा ।

**तूर्णक** । पु । शालिधान्यविशेषे । काश्मीरे आजव इति प्रसिद्धे । वा सू ६अ । [ निघ ।

**तूर्णि** । स्त्री । त्वरायां । त्वरा । मनसि । वै

**तूल** । प, क्ली । (Morus Indica or Morus Nigra) स्वनामख्यातकाष्ठविशेषे । तूँत, पलाश पिपूल, आवलूष इति कथित् । हि तूतरी, साहुड । म पारिसपिपलु, वस्त्रलि । ते कम्बलिचेट्टु । ता मसुकट्टचेड़ि । तत्पर्याय, —तूद , ब्रह्मकाष्ठ , ब्रह्मणेष्ट , पूपक , ब्रह्मदारु, सुपुष्प, सुकप, नीलवृन्तक, क्रमुक , विप्रकाष्ठ , मन्सार (रा), पूष (भा) । गुणा—मधुराम्ल वातपित्तघ्न सर दाहघ्न कषाय हृद्य कफप्रद । रा नि व ९ । मधुराम्ल हृद्य दाहघ्नं कषायं कफघ्न गुरु सारकम् अघम् उष्ण रक्तपित्त करञ्च । भा । कार्पासे । शेमधुतूरके । गगनस्थे । अम ।

**तूलकम्** । क्ली । कार्पासे । हे च ।

**तूलग्रन्थिसमा** । स्त्री । कठिनामलकौषधी । वै निघ ।

**तूलनालिका (ली)।** स्त्री। पिञ्जिकायाम्। পাঁইজ। त्रिका। [ टीभ।

**तूलपिचुः।** पु। कार्पासे, तूले। তুলা। अ

**तूलफल।** पु। अर्कवृक्षे। আকন্দ গাছ। रा नि व १०।

**तूल(ल्लि)फला।** स्त्री। शाल्मलीवृक्षे। रमा।

**तूलवती (शय्या)।** स्त्री। तूलशय्यायाम्। তোষক। भा।

**तूलवृक्षः।** पु। शाल्मलीवृक्षे। रा नि व ७।

**तूलशर्करा।** स्त्री। कार्पासवीजे। श मा।

**तूला (ली)।** स्त्री। रक्तकार्पास्याम्। रा नि व ४। नीलीवृक्षे। भा। वर्त्याम्। श र।

**तूलि (लि(ली)का)।** स्त्री। नील्यां। रक्तकार्पास्यां। वै निघ। चित्रलेखन्यां। তুলি। अम। वीरणादिशलाकायां। शय्योपकरणे। তোষক। मे। वर्त्यां। श र।

**तूल(लि)नी (फला)।** स्त्री। शाल्मलीवृक्षे। শিমুল গাছ। प सु। रमा। भा। लक्ष्मणा कन्दे। रा नि व ७।

**तूवरः।** पु। See तुवर। [ श र।

**तूस्तम्।** क्ली। धूलौ। ধুলো। मे। मूर्ध्नि।

**तृक्षम्।** क्ली। जातीफले। श च।

**तृट्।** स्त्री। तृष्णायां। इच्छायां। मे।

**तृणम्।** क्ली। कत्तृणे। গন্ধতৃণ। रा नि व ८। खटे। नडादौ तृणगण। "तिधा वंश कुश कास त्रिधा, नल। गुन्द्री मुञ्ज दर्भमथोचणकादि गणस्तृणम्॥" अर्क।

**तृणकतैलम्।** क्ली। कुष्ठाधिकारे तैलम्। पाठ—"मञ्जिष्ठारग्वधनिशा चक्रमर्दाश्वत्थपल्लवै। तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु॥" कटुतैल ४श चीणघासस्वरस ४ श जल १६ श। कल्कार्थं—मञ्जिष्ठा कुष्ठ (কুড়) हरिद्रा चक्रमर्दपत्र (চাকুন্দার পাতা) सोनालुपत्र (সোনালপাতা) एषां मिलिता शराव (১ সের)। रस र।

**तृणकुङ्कुमम्।** क्ली। काश्मीरदेशे स्वनाम्ना प्रसिद्धे सुगन्धतृण। कुङ्कुमघास् इति भाषा। स तृणकेशर। गुणा—कटुष्ण वातकफशोथघ्न कण्डूति पामाकुष्ठामदोषघ्नं दीप्तिकरश्च। रा नि व १२।

**तृणकूटी।** स्त्री। तृणाच्छादितगृहे। শি। तत्पर्याय—तृणौक। ह।

**तृणकूर्म्मः।** पु। श्वेतालाब्वां। শ্বেত লাউ। वै निघ। श मा। [ निघ।

**तृणकेतकी।** स्त्री। दशशोषमविशेषे। वै

**तृणकेतुः (कः)।** पु। वंशे। বাঁশ। रा नि व ७।

**तृणकेसरम्।** क्ली। तृणकुङ्कुमे। रा नि व १२।

**तृणगन्धा।** स्त्री। वङ्गारकलतायां। वै निघ।

**तृणगोधा।** स्त्री। सरटे। গিরগিটে। কাঁকলাস। मे। तृणजलौकायाम्। शब्दकल्प।

**तृणगोधूमः।** पु। स्वनामख्यातगोधूमे। बासि गम। प सु।

**तृणगौरम्।** क्ली। तृणकुङ्कुमे। रा नि व १२।

**तृणग्रन्थिः।** पु। स्वर्णजीवन्त्यां। रा नि व ३।

**तृणग्राही (हिन्)।** पुं, क्ली। नीलहीरके। प सु। नीलमणौ। কাঁচপোকা। रा नि व १२। तत्पर्याय,—शुकापट्ट, तृणमणि (हा)।

**तृणचरः।** पु। गोमेदमणौ। वै निघ।

**तृणजलौका।** तृणचरजलौकाविशेषे। চীনে জোঁক।

**तृणद्रुमः।** पु। तालवृक्षे। केतकीवृक्षे। पूगवृक्षे। खर्ज्जूरीवृक्षे। ताड़ीद्रुमे। তেড়েং গাছ। नारिकेलवृक्षे। हिन्तालवृक्षे। হেঁতাল গাছ। एषां मज्जनिर्यासा लघव शीतला बल्या मोहना हृद्या तृषातापहराश्च। रा नि व ९।

**तृणधान्यम्।** क्ली। तृणोद्भवश्यामाकादौ। শ্যামা ধান প্রভৃতি। गुणा—"श्यामाक शोषणो रुक्ष वातल श्लेषपित्तहा। जडिका कोद्रवश्चैव हस्तिश्यामाकचीनकौ। पीनसश्वास कासोरुस्तम्भकण्ठगदान् जयेत्। कङ्गुकाद्यापि जानीयात् एतान् श्यामाकवद्गुणै। जडिका तत्र कथिता बलास्य विवर्द्धिनी। कोद्रवश्च परं ग्राही वातल कफनाशन॥' राज ३प। See कुधान्यम्।

**तृणधुक्।** पु। वाडवाग्नौ। त्रि।

**तृणध्वजः।** पु। वंशजायां। উলু। रा नि व ८। वंशे। अम।

तृणनिम्ब' । पु । नेपालनिम्बे । চিরেতা । रा नि व ९ ।

तृणपञ्चकम् । क्ली । तृणपञ्चमूले । भा ।

तृणपञ्चमूलम् (ली) । क्ली, स्त्री । कुशकाश शरेक्षुदर्भेषु । दर्भं इत्यप । शरेक्षुदर्भकाशशालय इति चरक । "शरेक्षवीर विदेदापि पञ्चमूल्या तृणाख्यया ॥" सिधीरविचि । गुणा—तृणा दाहपित्तरक्तमूत्रसङ्गहरी । "कुश काश शरो दर्भ इक्षुश्चेति तृणोद्भव । पित्तकृच्छ्रहर पञ्चमूल वस्तिविशोधनम् ॥" भा मू क्ल चि ।

तृणपञ्चमूलाद्यघृतम् । क्ली । अश्मर्य्यधिकारे घृतम् । गव्यघृत ४ श । क्वाथार्थं—कुश काश शर इक्षु दर्भमूल गोक्षुर एषां प्र १० प वारि ६४ श शे १६ श । कल्कार्थं—गुड़गोक्षुरवीजे प्र ४ प । भा ।

तृणपति. । पु । राजघासे । कानाकर्पूर । के ।

तृणपत्रिका (त्री) । स्त्री । इक्षुदर्भायाम् । ইক্ষুগর্ভা তৃণ । (त्री) गुण्डासिनीतृणे । रा नि व ८ ।

तृणपर्णम् । क्ली, पु । चीनाखड़ इति प्रसिद्ध तृणे । रस र महाभल्लातकगुडे ।

तृणपुष्पम् । क्ली । तृणकुङ्कुमे । रा नि व १२ ।

तृणपुष्पी । स्त्री । सिन्दूरपुष्पीवृक्षे । रा नि व १० ।

तृणपूलिकम् । क्ली । क्लीवभेदे । के ।

तृणपूली । स्त्री । चञ्चाम् । টাঁচ । द्वारा । च चि ३ अ ।

तृणमणि' । पु । नीलहीरके । द्वारा । तृण मणीकायाम् ।

तृणमल्लिका । स्त्री । मल्लिकापुष्पभेदे । কাঠ মল্লিকা । "कुमारिका शोभभवा सुगन्धा तृण मल्लिका ।" वै ।

तृणमुख । पु । श्यामाकधान्ये । শ্যামা ধান । प सु ।

तृणमुस्तिका । स्त्री । मुस्ततृणे । मुस्तायाम् । रस र रसमारणे ।

तृणमूलम् । क्ली । गन्धतृणमूले । भा स ३ भ मू क्ल चि ।

तृणमेरु. । पु । मद्राचवृक्षे । शब्दर ।

तृणराज' (क) । पु । तालवृक्षे । তাল গাছ । नारिकेलवृक्षे । वंशे । रा नि व ९।११।१२ । इक्षुवृक्षे । वल्वजायाम् । वै निघ ।

तृणराजवर्ग' । पु । गुवाकादि सप्तवृक्षे । यथा —"गुवाकतालहिन्तालस्तथा ताड़ी च केतकी । खर्ज्जूरनारिकेलौच सप्तैते तृणराजक । तृणराज शिरापत्रं कुर्याद्दन्तधावनम् ॥ शाङ्गि स ।

तृणराजाह्व (य') । पु । तालवृक्षे । रा नि व ११ ।

तृणवल्ल(ल्व)जा । स्त्री । वल्वजायाः । উলু । रा नि व ८ ।

तृणवीज (जोत्तम) । पु । श्यामाकतृणे । শামা ঘাস । र मा ।

तृणवृक्ष' । पु । नारिकेलवृक्षे । तालवृक्षे । पूगवृक्षे । केतकीवृक्षे । खर्ज्जूरीवृक्षे । रा नि व ९ । वै निघ ।

तृणशिम्बी । स्त्री । निष्पावे । শীম গাছ । प सु ।

तृणशीत । पु । दवताडवृक्षे । वै निघ । क्ली । कतृणे । गन्धतृणे । र मा । स्त्री । महाराष्ट्री लतायां, जलपिप्पल्यां । কাঁচড়া । रा नि व ४ ।

तृणशून्यम् । क्ली, पु । नागदमनपुष्पे । प सु । च चि ३ अ । सु चि १८ अ । श्वतकेतक्यां । च सू २५ अ । मल्लिकायां । केतकीफले । मे ।

तृणशोणितम् । क्ली । तृणकुङ्कुमे । কুঙ্কুম ঘাস । रा नि व १२ ।

तृणशोषक' । पु । राजिमत्सर्पविशेषे । सु कल्प ४ अ । See सर्प ।

तृणषट्पद । पु । कीटविशेषे, वरोलि । ভীম- রুল । त्रिका ।

तृणसञ्ज्ञक । पु । वैद्यकोक्त पञ्चतृणे । "कुश काशनलदर्भकाण्डेक्षुका ।" सुश्रु ।

तृणसारा । स्त्री । कदल्याम् । द्वारा ।

तृणसिंह । पु । कुठारे । शब्द क । [ ब ८ ।

तृणाख्य(ह्व)म् । क्ली । पञ्चतृणे । रा नि

तृणाङ्घ्रिप । पु । मन्थानकतृणे । रा नि व ८ ।

तृणाञ्जन । पु । कृकलासे । গিরগিটি । त्रिका ।

तृणाधिप । पु । मन्थानकतृणे । रा नि व ८ ।

**तृणान्नम्** । क्ली । तृणधान्ये । नीवारधान्ये । भा पू । भ धा व ।

**तृणाम्लम्** । क्ली । लवणतृणे । रा नि व ८ ।

**तृणारि.** । पु । पर्पटके । খেৎপাপড়া । वै निघ ।

**तृणावर्त्तः** । पुं । गुणासितीतृणे । वै निघ ।

**तृणाश्मक्** । क्ली । तृणकुङ्कुमे । रा नि व १२ ।

**तृणाह्वा** । स्त्री । चीनेघास इतिख्याते तृणभेदे ।

**तृणी** । स्त्री । आम्रहरिद्रायाम् । वै निघ ।

**तृणेक्षु** । पु । बल्वजायाम् । উলু । रा नि व ८ ।

**तृणोत्तम** । पु । जलपरतृणे । रा नि व ८ ।

**तृणोत्थम्** । क्ली । तृणकुङ्कुमे । रा नि व १२ ।

**तृणोद्भवः** । पु । नीवारे । বোরো ধান । रा नि व १६ । [ वा च ३७५ ।

**तृणोलुपम्** । क्ली । उलूपतृणे । উলুখড় ।

**तृणोल्का** । स्त्री । तृणाग्नौ । খড়ের আগুন ।

**तृणौक** । पुं । तृणाच्छादितगृहे । খড়ুয়া ঘর । हे च ।

**तृणौषधम्** । क्ली । एलवालुके । श च ।

**तृण्वान्** । वि । तृणायुक्ते । वा वि ६५ ।

**तृतीयक.** । पु । विषमज्वरविशेषे । একদিন অন্তর জ্বর । "दिनमेकमतिक्रम्य यो भवेत् स तृतीयक ।" भा । "कफपित्तात्त्रिकग्राही पृष्ठाद्वा तकफात्मक । वातपित्ताच्छिरोग्राही त्रिविध स्यात् तृतीयक ।" मा नि ज्व ।

**तृतीयकविपर्य्यय** । पु । तृतीयकस्य ज्वरस्य भेदे । প্রথম ও শেষ দিনে ছাড়িয়া দ্বিতীয় দিনের জ্বর । यथा—आदावन्ते च मुञ्चति मध्ये एकं दिन ज्वरयति । भा ।

**तृतीय(या)प्रकृति** । पु । नपुंसके । श टी ।

**तृप(फ)ला** । स्त्री । लतायाम् । त्रिफलायाम् । उणा । विका ।

**तृप्ति** । स्त्री । सत्यपि भोजनसामर्थ्ये अन्नाभिलाषे । भा म १५ ज्व चि । 'तृष्णातृप्तिरघापिवा ।"

**तृप्तिघ्न** । त्रि । तृप्तिजनके । क्षुधामान्द्यकरे ।

**तृप्तिघ्नवर्ग** । पु । नागरचित्रकचव्यविडङ्गमूर्वा गुड चीवचामुस्तपिप्पलीपटोलेषु । च सू ४५ ।

**तृप्रः** । पुं । घृते । उणा ।

**तृफुः** । पु । सर्पे । उणा ।

**तृवृता** । स्त्री । त्रिवृति । তেউড়ী । शुक्लत्रिवृतायां । শ্বেত তেউড়ী । वा चि २५ ।

**तृशूलफलम्** । क्ली । बिल्वफले । [ प स ।

**तृषती** । स्त्री । शुक्लशिम्ब्याम् । আলকুশী ।

**तृषा** । स्त्री । तृष्णायाम् । रा नि व २० । लाङ्गलिकालतायाम् । श च ।

**तृषाभू** । स्त्री । मूत्राशये । क्लोम्नि । श च ।

**तृषाह(क)म्** । क्ली । जले । श च । हे निघ ।

**तृषाह्वा** । स्त्री । प्रसाद्वायाम्, मधुरिकायाम् ।

**तृषितम्** । क्ली । तृषायाम् । त्रि । तृषार्त्ते ।

**तृषितोत्तरा** । स्त्री । गोरक्षदुग्धीनामवल्ल्याम् । हे निघ । अग्रिमपर्णीलतायाम् । श च ।

**तृष्णक्** । त्रि । तृष्णावति । च' ज्ञ वि १५ । लुब्धे । अम ।

**तृष्णा** । स्त्री । पानेच्छायां । পিপাসা । मे । तत्पर्य्याय,—उदन्या, पिपासा, तृट्, तर्ष (अ), तृषा (शब्दर), लपय, तथर्ष (ज), उपलालिका, धृति (हे)। तर्षणे । जटा । पिपासारोगे । रा नि व २० । "भयश्रमाभ्यां बलसङ्क्षयाद्वा उर्द्धञ्चितं पित्तविवर्द्धनैश्च । पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥' "स्रोत स्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तो । तिस्र स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथाद्यामसमुद्भवा च । भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्व्वशस्तु । मुखशोषः स्वरभेदो भ्रमः सन्तापः प्रलापः स्तम्भः ताल्वोष्ठकण्ठजिह्वाकर्कशत्वं च । जिह्वानिर्गमः अरुचिः बाधिर्य्यं मर्म्मभेदः अङ्गसादश्चेति । लक्षणानि । ... रक्तेक्षणत्वं प्रततश्च शोषः । शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिदूयनञ्च । वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तया तु । निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम् । क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु । रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतश्च निशादिनेषु । पेपीयतेऽम्भ स सुख न याति तां सन्निपातादिति केचिदाहुः ॥" इत्यादि । मा नि । पथ्य —"शोधन वमन निद्रा स्नान कवलधारण ।

कीदृशा गान्धय देया विलेपी लाजसक्तव। षट्रसाढ्यो घनरसा सिता मुद्रादिका रसा। खर्जूरं दाडिम धात्री कर्कोट नलदन्तु च। जम्बीर करमर्दश्च बीजपूर तथा पय। मधूकपुष्प तिक्तानि मधुराणि विशेषत। बालतालकशीताम्बु माहिक सरसीजल। घनसारो गन्धसार कौमुदी शिशिरांशु च। एला जातीफलञ्च कुङ्कुमञ्च च टङ्कणम्। चन्दनार्द्रप्रियाद्यपो रत्नाभरणधारणं। हिमानुलेपनञ्च स्यात्पथ्यमेतत् तृषातुरे॥" पथ्या पथ्यम्।

**तृष्णारि.** । पुं। पर्पटके। क्षेत्पापड़ा। रा नि व ५।

**तेज.** । क्ली। मज्जायां। रा नि व १८। गुणा—कटचुधाविद्रालसमैथुनेषु। रस र ज्व चि। पित्ते। रा नि व २१। घृते। कान्तौ। स्वर्णे। रा नि व १३। शुक्रे। मे। नवनीते। अग्नौ। हे च। ओजसि।

**तेज फल** । पु। तेजफलवृक्षे। তেজবল। रा नि व ११।

**तेजन.** (क) । पुं। शरे। प सु। वश। भा। मुञ्जातृणे। उलपतृणे। ज द १२४। रा नि व ८। क्ली। मीजने। रा नि व २०।

**तेजना(ह्व्य)ह्वय.** । पु। मुञ्जतृणे। मुञ्ज। रा नि व ८।

**तेजनी** । स्त्री। मूर्वायां। अम। चोरमुष्कायां। कट्वुधान्ये। वै निघ। वचायां। भैष सु रो चि। ज्योतिष्मतीलतायां। श र।

**तेजपत्रम्** । क्ली। स्वनामख्यातपत्र। তেজপাত। प सु। तत्पर्य्याय,—पत्र, पत्रक, गन्धजात (शब्दर), पाकरञ्जनम् (श)। See पत्रकम्।

**तेजफल** । पु। हिमालयादौ ख्यात स्वनाम ख्यातवृक्षे। তেজবল। म काइफल। क गावटे। तत्पर्य्याय,—बहुफल, शाल्मलीफल, सवकफल, तेयफल, गन्धफल, कण्टवृक्ष। गुणा—कट तीक्ष्ण सुगन्ध दीपन वातश्लेष्मारुचिघ्न बाल रक्षाकारक। "तेजफल कटुस्तीक्ष्ण सुगन्धिर्दीपन पर। वातघ्न वातविघ्नश्च बालरक्षाकर पर॥" रा नि व ११।

**तेजल** । पु। कपिञ्जलपक्षिणि। তিতির পাখী। रा नि व १९।

**तेजवती** । स्त्री। गजपिप्पल्यां। কাঁচড়া। वै निघ २भ अ च चि। गजपिप्पल्याम्। श र। तेजवल्कल, तेजबल इति च ख्याते द्रव्ये। गुणा—"तेजस्विनी कफ श्वास कासास्यामय वातहृत। पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी॥" भा। वचायां। वङ। भप क्षुद्ररो चि।

**तेजसाह्वय.** । क्ली। मुञ्जतृणे। वै निघ।

**तेजस्कार** । त्रि। तेजोवर्द्धके।

**तेजस्विनी (जिनी)** । स्त्री। मूर्वायाम्। चविकायाम्। महाज्योतिष्मतीलतायाम्। रा नि व ३। च चि ८४। तेजोवलवृक्षे। वै निघ। ज्योतिष्मतीलतायाम्। लताफटुकी। श र।

**तेजाह्वा** । स्त्री। तेजफले। महाज्योतिष्मती लतायाम्। के।

**तेजिका** । स्त्री। ज्योतिष्मतीलतायाम्। के।

**तेजोद्वेष** । पुं। पित्तज्वरोगे। भा।

**तेजोधातु** । पु। पित्ते। वै निघ।

**तेजोमन्थ.** । पु। क्षुद्राग्निमन्थवृक्षे। ছোট গণিরি। प सु। गुणा—"तेजोमन्थगुणा प्रोक्ता याग्निमन्थसमा बुधै। विशेषाद्वातशोफे च प्रोक्ता पूर्व्वैश्च सूरिभि॥" वै निघ।

**तेजोमयम्** । क्ली। पित्ते। वै निघ।

**तेजोवती** । स्त्री। महाज्योतिष्मतीलतायाम्। बड़ लताफटकी। हिं छमिजिनि। भैष कुष्ठ चि पञ्चतिक्तघृते। वै निघ २भ शोथज्व चि। चविकायाम्। চই। प सु। भा। सा को अश्र चि बाहुशालगुडे। गजपिप्पल्यां। श र। वचायां। सि यो हि श्वास चि बाहुशालगुडे। "तृष्णतेजोवती दन्ती।" यत्र चवी तेजोवती चास्ति तत्र तेजोवती ज्योतिष्मती ग्राह्या। श्रीकण्ठ। तेजोवल्कलं। তেজবল। स्वणजीवन्त्याम्। भा म ४भ सु रो चि। सु चि २२५। सरिचे। वै निघ।

**तेजोबीजम्** । क्ली। मज्जायाम्। मज्जा। वै निघ।

**तेजोवृक्ष** । पुं। क्षुद्राग्निमन्थ। ছোট গণিরি। रा नि व ९।

**तेजोह्वा** । स्त्री। तेजोवत्याम्। তেজবল। भा म ४भ सु रो चि। सु चि २५। वै निघ अर्श चि बाहुशालगुडे। वचायाम्। वङ। क्षुद्ररो चि कालकचूर्णे।

**तैलाङ्गः** । पु । वकुलवृक्षे । प मु । [ ३ ष ।

**तैलाटी** । वणपटपद । वरठायां । বোল্তা ।

**तैलाम्बुका** । स्त्री । तैलचीरिकायां । आर् শোলা । जटा ।

**तैलिनी** । स्त्री । तैलपायिकायाम् । रा नि व १९ । दशावर्त्याम् । श मा । [ ३ ष ।

**तैलिशाला** । स्त्री । तैलिकगृहे । घानिघर ।

**तैलीनम्** । क्ली । तिलक्षेत्रे । रा नि व २ ।

**तैलु(ल्व)कः** । पु । लोध्रे । च द पाण्डु चि । चा चि ६ष ।

**तैल्वणपूगम्** । क्ली । पूगफलविशेषे । तैल्वपत् इति भाषा । रा नि व ११ । See चकोट ।

**तैषः** । पु । पौषमासे । अम ।

**तैच्णम्** । क्ली । तीक्ष्णतायाम् ।

**तोकः** । पुं । बालके । त्रिका ।

**तोककः** । पु । चातकपक्षिणि । नीलकण्ठे । वै निघ । चातकपक्षिणि । च म ।

**तोक्मः (क्मः)** । पु । अपक्वयवे । हरितनिश्चकक्षुद्रयवे । जवे । "तोक्मवद्भ सहरित तत स्वल्पय कीर्त्तित ।" सोऽतियवाङ्गीनगुण । भा पू १भ धा व । पल्लवाद्यङ्कुरे । भागवतम् ।

**तोडिमत्स्यः** । पु । मत्स्यविशेषे । তারই মাছ । वै निघ ।

**तोत्रम्** । क्ली । गवादिताड़नदण्डे । अ ।

**तोदः (नम्)** । पु, क्ली । सूचीव्यधनेनेव शूलेनेव वा व्यथायाम् । र मा । भा म १भ श्वासमुच्च । तीव्रवेदनायाम् । पु । वायौ । वै निघ ।

**तोदन** । पु । फलशाकविशेषे । तत्फलं कषायरूक्ष वातकफापहञ्च । सु सू ४६ष । अम्लीणं लघु सुखाद्य स्निग्धं पित्ताग्निकरञ्च । च सू २७अ ।

**तोदपर्णी** । स्त्री । तोयपर्ण्याम् । পানা । कुषायभेदे । सु सू ४६ष ।

**तोमर** । पुं । मल्लविशेषे । শাবল । अ ।

**तोमरधरः** । पु । अग्नौ । वै निघ ।

**तोमरिका** । स्त्री । सौराष्ट्रमृत्तिकायां । श र ।

**तोयम्** । क्ली । जले । रा नि व १४ । बालके । বালা । वै निघ ।

**तोयकाम** । पु । जलवेतसे । मद व ५ । परिव्याधवृक्षे ।

**तोयकुम्भा** । शैवाले । वै निघ ।

**तोयगर्भः** । पु । नारिकेलवृक्षे । वै निघ ।

**तोयजः** । पु । उशीरे । लामज्जके । वै निघ ।

**तोयडिम्भः** । पु । घनोपले । हारा ।

**तोयद** । पु । उशीरे । नागरमुस्तायाम् । वै निघ । मेघे । क्ली । घृते । मे ।

**तोयद्रुम** । पु । कतकवृक्षे । निर्म्मलफलेर गाछ ।

**तोयधरः** । पु । मुस्तायां । नागरमुस्तायाम् । सुनिषण्णकशाके । मेघे । मे ।

**तोयधिप्रियम्** । क्ली । लवङ्गे । श च ।

**तोयपर्णी** । स्त्री । तृणधान्यविशेषे । गुणा श्यामाकवत् । च सू २७अ । वारिपर्ण्यां । পানা । कारवेल्लीलतायाम् । कै ।

**तोयपाषाणजमलम्** । क्ली । खर्परे । খাপর । वै निघ ।

**तोयपिप्पली** । स्त्री । कच्छटे । কাঁচড়া । रा नि व ५ ।

**तोयपुष्पी** । स्त्री । पाटलवृक्षे । श मा ।

**तोयप्रष्ठा** । स्त्री । पाटलवृक्षे । वै निघ ।

**तोयप्रसादन(फल)म्** । क्ली । कतकफले । निर्म्मलफल । र मा ।

**तोयफला** । स्त्री । वानरकर्कटिकायाम् । কাঁকুড় । रा नि व ७ ।

**तोयमञ्जरी** । स्त्री । जलापामार्गे । वै निघ ।

**तोयमलम्** । क्ली । समुद्रफेने । वै निघ ।

**तोयवती** । स्त्री । अमृतवल्ल्याम् । वै निघ ।

**तोयवल्लरी** । स्त्री । जलपिप्पल्याम् । কাঁচড়া-দাম ।

**तोयवल्लिका (ल्ली)** । स्त्री । अमृतस्रवालतायाम् । चित्रकूटे रुदन्तीति ख्यातायाम् । অমৃতবল্লী লতা । कारवेल्लके । উচ্ছে । रा नि व ३ । महादुग्धायाम् । रा नि व २३ ।

**तोयशुक्ति** । पुं । जलापामार्गे । वै निघ ।

**तोयसूचः** । पु । शैवाले । वै निघ ।

**त्रिदशगोपः** । पु । इन्द्रगोपकीटे । वै निघ ।

**त्रिदशदारु** । क्ली । देवदारुकाष्ठे । चिन्नाक स्रोतो चि । [व १० ।

**त्रिदशमञ्जरी** । स्त्री । तुलसीवृन्दे । रा नि

**त्रिदशवरभोज्यम्** । क्ली । अमृते । चि क्रक केशररसी ।

**त्रिदशसर्षप** । पु । देवसर्षपवृक्षे । वै निघ ।

**त्रिदशाहार** । पुं । अमृते । सुधा ।

**त्रिदिवा** । स्त्री । एलायां । गङ्गायां । वै निघ ।

**त्रिदिवोद्भवा** । स्त्री । स्थूलैलायाम् । बड़ एलाच । रा नि व ६ ।

**त्रिदिवोद्भूता** । स्त्री । सूक्ष्मैलायाम् । वै निघ ।

**त्रिदीप्यम्** । क्ली । यमानीत्रये, यमानी खीरा सानी अजमोदा च । वै निघ २भ अर्श चि भयाक वट्याम् ।

**त्रिदोपम्** । क्ली । वातपित्तकफाख्यदोषत्रये । रा ।

**त्रिदोषज** । त्रि । त्रिदोषजनिते ।

**त्रिदोषदावानलकालमेघ** । प । सन्निपात ज्वरे रस । हरितालपुटितवङ्ग मन शिलापुटित शीष शीषपुटितसर्पचौ्यताराणि प्रत्येक पुन हिङ्गु पुटितानि कृत्वा प्र समभागो ग्राह्य एतसमष्टितुल्य पारद गन्धक तुल्यकञ्च द्विगुण (मतान्तरे उक्तद्रव्याणां प्र एकैको भाग, गन्धक तुअयो द्वौ भागौ) एकत्र निम्बुकरसेन समर्द्द्य गोलकञ्च कृत्वा यथाविधि पुटेत् । अथ तत्र तुल्य भाग पुन गन्धक दत्त्वा चित्रकरसेन मर्दयेत् । तदनु षोड़शांश विष सम्मिश्य पुन तद्रससिक्त कृत्वा पचेत् । अथ रोहितमत्स्यपित्तेन भावयित्वा रक्तिद्वयमिता वटी कार्य्या ।

**त्रिदोषदावानलरस** । पु । ज्वराधिकारे रस । अर्कमूर्त्तिरस यदि ताम्रपात्रे जम्बीरादि रसै पुनरपि भावित स्यात् तदा त्रिदोषदावानलो भवति । भैष ।

**त्रिदोषरोहिणी** । स्त्री । त्रैदोषिकगलरोग विशेष । वै निघ । [व २२ ।

**त्रिदोषसमम्** । क्ली । समदोषत्रये । रा नि

**त्रिदोषसम्भव** । पु । सन्निपाते । वै निघ ।

**त्रिदोषहारी (रस)** । पुं । ज्वराधिकारे रस । "वर्णशिलातालताप्यतुत्थोदधिमलटङ्ग निकुम्भजाग्रताख्य । दलित महिषपित्तत्रिधा स्यात्रुधिरगत शिरसि त्रिदोषहारी ॥" र चि ८ष ।

**त्रिधातु** । पु । गणपतौ । त्रिका । क्ली । धातुत्रये ।

**त्रिधारक** । पु । क्षुद्रशीमेदे । ()तेकाँटा मनसा ।

**त्रिधारकाण्डवल्ली** । स्त्री । त्रिधारकारवे नाम् । তেশিরে উচ্ছে । वै निघ ।

**त्रिधारस्नुही** । स्त्री । त्रिधारवज्रीवृक्षे । তেকাঁটা সিজ । रा नि व ८ ।

**त्रिनेत्ररस** । पु । पित्तकासे रस । ताम्रभस्म अभ्रभस्म तीक्ष्णलौहभस्म समभागम् । कासमर्द्द तालाम्लवेतसरसै दिनैक मर्द्दयित्वा द्विगुञ्जा वटी कार्य्या । रस र । अपर परिणामशूले—टङ्कण (সোহাগার খই) मृगशृङ्ग स्वर्ण रससिन्दूरम् एषां प्र समभाग दिवा आर्द्रकरसेन पिष्टा गज पुटेन पचेत् । घृतमधुभ्यां सेव्यम् । रस र । अन्य ग्रन्थे—पारद गन्धक अष्टटङ्कण ताम्र लौहम् एषां प्र समभाग आर्द्रकरसेन मर्दयित्वा लघु पुटे पचेत् । अनुपान—एरण्डरस अपामार्गरस । अन्य ज्वराधिकारे—पारदगन्धकताम्राणि सम भागानि निर्गुण्डीरसै दिनैक मर्दयित्वा शुष्कीकृत्य मूषामध्यगत बालुकायन्त्रे प्रहरत्रय पचेत् । पर्ण खण्डेन सेव्य । र चि ८ष । अपर सन्निपात ज्वरे—पारदगन्धकताम्राणि समभागानि द्रव्यत्रय तुल्यै गव्यदुग्धै शिग्रुरसैय दिन समद्य गोलक कृत्वा खरातपे शुष्कीकृत्य च अन्धमूषागत वालुका यन्त्रे प्रहरत्रय पचेत् । र चि ८ष । अन्यत्र सन्नि पातज्वरे—रस १ भ गन्धक १ भ ताम्र चतुर्थांश सत्त्वतुल्येन गव्यदुग्धेन निर्गुण्डीरसेन शिग्रुरसेन च खरातपे दिनैक मर्दयित्वा शोषयेत् । भा । अपर उदरसम्भे—जारितस्वर्णमाक्षिक हिङ्गुल लौह पारद वङ्ग गन्धक ताम्रम् अभ्र समुद्रफेन गिरिसत्तिका स्वर्ण शीषं चित्रकमूल हिङ्गु त्रिकटु त्रिफला शिग्रुबीजम् अजमोदा (রাঁধুনি) यमानी पिप्पलीमूल भार्गी (বামনহাটী) लशुन जीरककृष्णजीरके एषां प्र समभाग आर्द्र करसेन मद्य । रस र । अपर मूत्रकृच्छ्रे, रस गन्धकवङ्गानां प्र समभाग । दूर्वायष्टिमधुगोक्षुर शाल्मलिरसैर्भावयित्वा भूधरयन्त्रे पक्त्वा च पुनस्त भावयेत् । गा २ र । र सा स ।

**त्रिनेत्रा (त्री)** । स्त्री । वाराहीनाममहाकन्द शाके । रा नि व ७ ।

**त्रिपटु** । क्ली । विडसैन्धवशाकलवणेषु । वै निघ ।

**त्रिपत्र:** । पु । चण्डालकन्दभेदे । रा नि व ७ । बिदलबिल्ववृक्षे । रा नि व ११ । क्ली । त्रिदल बिल्वपत्रे ।

**त्रिपत्रक** । पु । पलाशवृक्षे । हे च ।

**त्रिपथम्** । क्ली । त्रिमार्गे । তেমাথা পথ । हे ।

**त्रिपथगा** । स्त्री । गङ्गायाम् । च ।

**त्रिपदा** । स्त्री । हंसपदीलतायाम् । रा नि व ५ । रक्तवन्नालुकायाम् । वै निघ ।

**त्रिपदी** । स्त्री । हंसपदीलतायाम् । ছোট গোয়ালিয়া লতা । प मु । रा नि व ५ । शत दलमल्लिकायाम् । "त्रिपदी शतपत्रा तु सीहिनी श्वेतमल्लिका ।" इत्यभि ।

**त्रिपर्ण:** । पु । पलाशवृक्षे । रा नि व १० ।

**त्रिपर्णा** । स्त्री । वनकार्पास्याम् । বন কাপাস । पृश्निपर्ण्याम् । চাকুলিয়া । र मा । वनगङ्गायाम् । वै निघ । तिलपर्णिकाकन्दे । रा नि व ७ । शाल पर्ण्याम् । भा म ख १ भ ।

**त्रिपर्णिका** । स्त्री । याशवृक्षे । दुरालभा । रा नि व ४ । स्वनामख्यातकन्दशाकविशेष । तिल पर्णी मूरेडल इति कौडणदेशे अनुपदेशे च प्रसिद्धा । তিলকন্দ । तत्पर्याय,—हस्तपर्णा, छिन्नग्रन्थिलिका, कन्दालु कन्दबहुला, अम्लवल्ली, विनाश्हा, त्रिपर्णी । तल्लक्षण यथा—"पश्चादि पर्वहाग तिलबिन्दुसमन्वित । सुस्निग्धाधस्त भूमिस्थ तिलकन्दोऽतिविस्तृत ॥" गुणा—मधुरा शीता श्वासकासघ्नी पित्तशमनी विषघ्नी व्रणघ्नी च । रा नि व ७ । तच्छाकगुणा—शाक गुरु च रुक्षश प्रायो विरस्य मीर्यते । मधुर शीतवीर्यश्च पुरीषस्य च भेदनम् । च सू २७ अ ।

**त्रिपर्णी** । स्त्री । शालपर्ण्याम् । भा । वन कार्पास्याम् । प मु । "त्रिपर्णी कलमीविन्द ।" मूर्व्वायाम् । रा नि व ३ । आरण्यमल्लिकायाम् । वै निघ । त्रिपर्णीकन्दे । তিলকন্দ । रा नि व ७ ।

**त्रिपला** । स्त्री । त्रिफलायाम् । अ हि ।

**त्रिपात्** । पु । ज्वरे । वैद्यकम् । "ज्वरस्तु त्रिशिरास्त्रिपात् ॥" भाग ।

**त्रिपाद** । पु । ग्रन्थिपर्णमूले । वै निघ ।

**त्रिपादिका** । स्त्री । हंसपादीलतायाम् । रा नि व ५ ।

**त्रिपादी** । स्त्री । हंसपादीलतायां, कीटमारि कायाम् । वा सू १५ अ विदार्यादि । "द्वे पञ्चके गोपसुता त्रिपादी । रक्तवन्नालुकायां । वै निघ ।

**त्रिपिबा (त्)** । पु । लम्बकर्ण छागे । वै निघ ।

**त्रिपिष्टपम्** । क्ली । आकाशे । शब्दर ।

**त्रिपुट (क)** । पु । तालके । श र । गोक्षुर क्षुप । प मु । सतीलके मटर इति ख्यातद्विदल क्षुपे । र मा शिम्बीधान्यभेदे । খেসারি কলাই । হি খেসারি । गुणा—"त्रिपुटो मधुरस्तिक्तस्तुवरो रुक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहक शीतलस्तथा । किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपन ॥" भ पू १ भ धा व । "रुची विशोषी मधुर प्रदिष्ट लघु कटोत्थस्त्रिगत बलिष्ठ । विबन्धशूलभ्रमशोफकर्त्ता दाहार्शहृद्रोगविकार कारी ॥" अ नि १५ अ । तसूपगुणा—'त्रिपुटानां कलायानां सूप स्वादुश्च वातल । आध्मानशूल जनक पित्तास्ररुचिवान्तिहा ॥" द्रव्यगुण ।

**त्रिपुटकी** । स्त्री । श्वेतत्रिवृति । वै निघ ।

**त्रिपुटा** । स्त्री । अरुणत्रिवृति । रा नि व ६ । कर्णस्फोटालतायाम् । रा नि व ३ । त्रिवृन्माले । क्रमुकचमके । प मु । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा नि व ६।२३ । वार्षिकमल्लिकायाम् । मल्लिका-विशेष । रा नि व १०।२३ । क्षतीवृक्षे । गोक्षुरके । कुलत्थिकायाम् । वै निघ ।

**त्रिपुटी (इन्)** । पु । एरण्डे । श मा । स्त्री । त्रिवृति । তেউড়ি । अ टी भ ।

**त्रिपुटीफल** । पु । एरण्डवृक्षे । हारा ।

**त्रिपुरभैरविका** । स्त्री । रुद्रजटायाम् । भांड् इति भाषा । भैष पानीयभक्तवट्याम् ।

**त्रिपुरभैरवरस** । पु । ज्वरे रस । शुद्धविष १ भ टङ्गणक्षार (সোহাগার খই) २ भ गन्धक ३ भ हिङ्गुल (मतान्तरे ताम्र) ४ भ दन्ती वीज ५ भ । दन्तीक्वाथेन मर्द्दयेत् । मात्रा २ र । अनु आर्द्रकरस । रस र । रस को । अन्यो यथा—विष १ भ पिप्पली २ भ मरिच ४ भ

**नीलकेशी ।** स्त्री । नीलीक्षुपे । रा नि व ४ ।

**नीलक्रान्ता ।** स्त्री । विष्णुक्रान्तायाम् । नील अपराजिता । रा नि व ५ ।

**नीलक्रौञ्च ।** पुं । नीलवर्णक्रौञ्चपक्षिणि । नील बक । वै निघ । अस्य पर्य्याया,—नीलाङ्ग, दीर्घग्रीव, अतिजागर ।

**नीलगिरिकर्णिका ।** स्त्री । नीलापराजितायाम् । रा नि व ३ ।

**नीलगिरिजा ।** स्त्री । (Clitoria Ternatea) विष्णुक्रान्तायां । अपराजिता । द्विकर्णिकी । वन गोकर्णी । आस्फोतायाम् । शाणपुष्पी । कोयालम् ।

**नीलङ्गुः ।** पु । कृमिविशेषे । कीटमात्रे । शृगाल । भ हिकी ।

**नीलचर्म्म ।** क्ली । परूषकफले । रा नि व ११ ।

**नीलच्छद ।** पुं । हेमपक्षखर्ज्जूरवृक्षे । वै निघ ।

**नीलच्छविः ।** पु । कुक्कुभपक्षिणि । वै निघ ।

**नीलजम् ।** क्ली । नीललौह । रा नि व १३ ।

**नीलाझिण्टी ।** स्त्री । नीलपुष्पझिण्टीक्षुपे । नील झाँटी । रा नि व १० । See नीलाम्लान

**नीलतरु ।** पु । नारिकेलवृक्षे । रा नि व ११ ।

**नीलताल ।** पु । तमालवृक्ष । तमाल गाछ । वै निघ । हिन्तालवृक्षे । रा नि व ९ ।

**नीलतुत्थम् ।** क्ली । तुत्थभेदे । वै निघ रभ । चय चि गर्ड ज्वररस ।

**नीलदूर्व्वा ।** स्त्री । हरितदूर्व्वायां । नील दूर्व्वा घास । सं नीलीहरियाली । क हसुगरूके । तैं हरितदूर्व्वाल । तत्पर्य्याया —हरिता, शाद्वली, श्यामा, शीता, शतपर्व्विका, अमृता, पूता, शतग्रन्थि, अनुष्णवल्लिका, शिवा, शिवेष्टा, मङ्गला, जया, भतवल्ली, शतमूली, महौषधी, विजया, गौरी, शान्ता, रुहा, अनन्ता, भार्गवी शतवीर्य्या, सहस्रवीर्य्या, शीतकुम्भी, शीतला वामिनी । गुणा —मधुरा तिक्ता शीतला रोचनी रक्तपित्ता तिसारघ्नी कफवातज्वरघ्नी च । रा नि व ८ । "कफपित्तारोगघ्नी दाहत्वगामयान् ।" भा ।

**नीलद्रुम ।** पुं । नीलबीजासनवृक्षे । रा नि व ९ ।

**नीलधातु ।** पुं । खटिकायां । नील खड़ि माटी । र मा । [ रा नि व १ ।

**नीलध्वज ।** पु । तमालवृक्षे । तमाल गाछ ।

**नीलनिर्गुण्डी ।** स्त्री । (Gendarussa vulgaris Syn Justicia gendarussa.) नीलपुष्पसिन्धुवारवृक्षे । नील निसिन्दा । बङ्गः मादन । तैं नल्लवविल । वम् कालअडुलसा । हा कालिसुम्बालि । गुणा —कटूष्णा तिक्ता कषा कासघ्नी शूलश्लेष्मवायुप्रदराध्मानहरी । रा नि व ४ ।

**नीलनिर्य्यासक ।** पु । नीलबीजासनवृक्षे । रा नि व ९ । See नीलबीज ।

**नीलपङ्कम् ।** क्ली । कृष्णवर्णकर्द्दमे ।

**नीलपङ्कजम् ।** क्ली । नीलकमले । नील पद्म । रा नि व १० ।

**नीलपत्र ।** पुं । गुण्डतृणे । रा नि व ८ । नीलबीजासनवृक्ष । अश्मन्तवृक्षे । रा नि व ९ । दाड़िमवृक्ष । रा नि व ११ । क्ली । नीलपद्म । अच । [ वै निघ ।

**नीलपत्रा ।** स्त्री । भूजम्बूम् । वन जाम ।

**नीलपत्रिका ।** स्त्री । नीलासनवृक्ष । नीलपत्र आसन गाछ । र मा । कृष्णशालमूल्याम् । वै निघ । [ ४ ।

**नीलपत्री ।** स्त्री । क्षुद्रनीलीक्षुपे । रा नि व

**नीलपद्मम् ।** क्ली । नीलकमले । नील पद्म । तत्पर्य्याया,—नीलाम्बुजन्म, नीलाब्ज, नीलोत्पल, नीलपङ्कज, नीलाब्ज । गुणा,—शीतल स्वादु, सुगन्धि, पित्तनाशि, रुच्य, रसायन, केशवर्द्धक, दद्रुदार्ढ्यकारि । रा नि व १० । [ रा नि व ११ ।

**नीलपर्णम् ।** क्ली । परूषकफल । फालसा ।

**नीलपर्णी ।** स्त्री । विदारीकन्दे । र मा । घण्टाकर्ण । वै निघ ।

**नीलपिच्छ ।** पुं । श्येनपक्षी । श्येन पाखी । रा नि व १९ ।

**नीलपिण्डम् ।** क्ली । वज्रलौहे ।

**नीलपिष्टोड्डी ।** स्त्री । क्षुद्रविशेष । पीठौड़ी दाल लोके । वै निघ । [ कल्प ८४ ।

**नीलपोत ।** पु । महाविषहयिकभेदे । सु

**नीलपुनर्नवा ।** स्त्री । नीलदलपुनर्नवायाम् ।

हि नीलरक्तपड़ीया। सं कालीयधेष्ट। कं करियेरेकइ किलु, करिदगवलिसे। तत्पर्य्याया,— नीला, श्यामा, कृष्णाख्या, नीलवर्णाभू। गुणा— तिक्ता कटूष्णा रसायनी कर्णरोगपाण्डुश्वयथुश्वास वातघ्नी। रा नि व ५।

**नीलपुष्प'।** पु। नीलभृङ्गराजे। नीलभिण्टयाँ। रा नि व ४। विन्नलवृक्षे। कृष्णनिर्गुण्ड्याम्। वै निघ। क्ली। ग्रन्थिपर्णे। भा।

**नीलपुष्पकः।** पु। नीलनिर्गुण्डीवृक्षे। वै निघ।

**नीलपुष्पा।** स्त्री। अपराजितायाम्। प मु। विष्णुक्रान्तायाम्, नीलापराजितायाम्। रा नि व ३। नीलभिण्टीक्षुपे। नील झाँटी। रा नि व १०। See नीलाम्लान। ग्रन्थिपर्णाम्। कृष्णनिर्गुण्ड्याम्। नील्याम्। वै निघ।

**नीलपुष्पिका (ष्पी)।** स्त्री। नीलपुष्पाप राजितायाम्। नील अपराजिता। रा नि व ३। नीलवृक्षायाम्। नील बोणी। प मु। नील्याम्। रा नि व ४। अतसीक्षुपे। मसिनार गाछ। रा नि व १६। [वै निघ।

**नीलपृष्ठ'।** पु। मत्स्यविशेषे। रुई गाछ।

**नीलपृष्ठा।** स्त्री। नीलीवृक्षे। भा म १भ।

**नीलपौर।** पु। कृष्णेक्षौ। गुणा—वातकर कफपित्तघ्न कषाय विदाही च। भा। सु सू ४५ष।

**नीलफला।** स्त्री। जम्बूवृक्षे। जाम गाछ। रा नि व ११। वार्त्ताकुवृक्षे। वै निघ।

**नीलभण्ट।** पु। पियालवृक्षे। पियाशाल। प मु। See भण्ट। [वै निघ।

**नीलभूमिमलक्षार।** पु। खर्परधातौ।

**नीलभृङ्गराज।** पु। नीलपुष्पभृङ्गराजे। नील केशुरिया। हि भंगरिया। तत्पर्य्याया,— महाभृङ्ग, महानील, सुनीलक, नीलपुष्प, श्यामल। गुणा—तिक्तोष्ण चक्षुष्य केशरञ्जन कफामयशोफश्वित्रघ्न रसायनश्च। रा नि व ४। [भा।

**नीलमकुष्ठ।** पु। नीलवर्णमुद्गे। मकुष्ठ ११।

**नीलमञ्जरी।** स्त्री। नीलनिर्गुण्ड्याम्। वै निघ।

**नीलमणि।** पु। स्वनामख्यातमणौ। नील-वर्ण मणि। तत्पर्य्याय—सौरिनीलाश्मा, नीलोत्पल, तृणग्राही, महानील, सुनीलक। गुणा— तिक्तोष्ण कफपित्तवातघ्न धारणात शुभदश्च। रा नि व १३।

**नीलमण्डलम्।** क्ली। पद्मकफले। पु। तद्वृक्षे। फलसा। रा नि व ११।

**नीलमयूर'।** पु। मयूरभेदे। गुणा— "मिथाऽपि शीतलाश्च करोत्युत्पादन मिश्रौ। स बातलोऽतिबलकृत् पुन किञ्चिद्रसायन॥" अत्रि २१अ।

**नीलमल्लिका।** स्त्री। कपित्थवृक्षे। रा नि व ११। [वै निघ।

**नीलमक्षिका।** स्त्री। पृथुकृष्णमक्षिकायाम्।

**नीलमाष'।** पु। राजमाषे। बरबटी। प मु। कृष्णमाषे। काल कलाइ।

**नीलमौलिक।** पुं। स्वर्णाते। भ मा।

**नीलमृत्तिका।** स्त्री। कृष्णमृत्तिकायाम्। पुष्पकासीसे। रा नि व १३।

**नीलमेहः।** पु। पित्तजन्यमेहरोगे। अत्र रोगी सफेन स्वच्छ नीलञ्च मेहति। सु नि ६अ।

**नीलयष्टिका।** स्त्री। कृष्णेक्षौ। काजला ईक्षु। कृष्णकुटजे। वै निघ। [व १४।

**नीलरत्न(क)म्।** क्ली। नीलमणौ। रा नि

**नीलराजा।** स्त्री। नीलपुष्पराजायां। र मा।

**नीलरूपकः।** पुं। प्रक्षवृक्षे। वै निघ।

**नीललोहम्।** क्ली। वर्त्तलोहे, कृष्णलोहे। रा नि व १३।

**नीललोहित'।** पु। नीलरक्तमिश्रितवर्णे। बेगुने र‍ङ्।

**नीललोहिता।** स्त्री। भूजम्बूवृक्षे। मेटो जाम। श ब।

**नीलवक्र।** पु। नीलवर्णवके।

**नीलवटी।** स्त्री। नीलवट्याम्। नीलवडि। चि क्र क केशरञ्जने।

**नीलवर्णम्।** क्ली। रसाञ्जने। र मा। नील मूलके। पद्मकफले। वै निघ। [नि व ५।

**नीलवर्णाभू।** स्त्री। नीलपुनर्नवायाम्। रा

**नीलवल्ली।** स्त्री। बन्दायाम्। परगाछा।

**नीलवल्ली।** स्त्री। वन्दाके। बान्डा। र मा।

**नीलाम्लान** । पु । नीलपुष्पभिण्टीक्षुपे । नील झाँटी । म काळाकोराण्ट । क करियगोरटे । गुणा —कटु तिक्त कफ वात शूलघ्न कण्डू कुष्ठ व्रणघ्न शोफत्वग्दोषघ्नश्च । रा नि व १० ।

**नीलाम्ली** । स्त्री । स्वनामख्यातफलवृक्ष । हि मनवुलगुड, कालीपिठोलि । म चक्रगन्धि । क वनियगिड । सा श्वेतनीलभेदेन द्विधा । गुणा —मधुरा रुक्षा कफवातहरी च । रा नि व ४ ।

**नीलालि** । पु । भ्रमरे ।

**नीलालु** । पु । नीलवर्णालुकविशेषे । नील आलु । म नीलालु । क करियगयेसु । तत्पर्य्यायौ,—असितालु, श्यामालुक । गुणा —मधुर शीत पित्तदाहश्रमघ्नश्च । रा नि व ७ ।

**नीलाशी** । स्त्री । नीलनिर्गुण्ड्याम् । वै निघ ।

**नीलाश्मजम्** । क्ली । तुत्थके । वै निघ ।

**नीलाश्मा** । पु । नीलमणौ । रा नि व १३ ।

**नीलासन** । पु । नीलवीजासनभेदे । पियाशालविशेष । तत्पर्य्याय,—नीलवीज, नील पत्र, सुनालक नीलद्रुम, नीलसार, नील निर्यासक । गुणा —कटु शीत कषाय कफकण्डू दद्रुघ्न सारकश्च । रा नि व ९ । [ निघ ।

**नीलाह्वा** । स्त्री । कृष्णापराजितायाम् । वै

**नीलाक्ष** । पु । हंसे । वै निघ ।

**नीलिका** । स्त्री । रुक्मलौहे । विदूरीतिभाषा । नील्याम् । नील । रा नि व ४ । नीलनिर्गुण्ड्याम् । वर्त्तलौहे । रा नि व १३ । क्षुद्ररोगविशेषे । लक्षण —"कृष्णमेवंगुणं वर्णं गात्रे वा नीलिकां विदुः ।" मा नि । "शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु । श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥" वा उ ३१ अ । लिङ्गनाशनामकपतितद्दृष्टिरोगे । भा । See काच । इन्दीवरालतायाम् । वङ्ग । कालनौहे । वै निघ । वातज्वरे । गजने ।

**नीलिनी** । स्त्री । नील्याम् । च सू २ अ । नीलवृक्षायाम् । रा नि व ४ । सु सू ३९ । शिरो धस्माविपक्षगन्धवति । "नीलिनीं कटुरोहिणीम् ।" च द ज्व चि । "नीलिनीमजगन्धाञ्च ।" नीलपुनर्नवायाम् । रा नि व ५ । वा सू १५ अ । "शुकाह्विनीनीलिनीमल्लिकानि ।" श्वेतमलायाम् । च द गुल्म चि । "सप्तला नीलिनी वचा ।" श्याम त्रिवृतायाम् । अ र । सिंहपिप्पल्याम् । वै निघ ।

**नीलिनीफलम्** । क्ली । नीलीवीजे । नीलगाछ वीज । सु सू ३८ ।

**नीली** । स्त्री । स्वनामख्यातक्षुपे । नील गाछ । रा नि व ४ । See चक्रिका । नीलवृक्षायाम् । नील बोणा । तत्पर्य्याय,—काला, क्लीतकिका, ग्रामीणा, मधुपर्णिका, रञ्जनी, श्रीफली, तुत्था, तूणी, दोला, नीलिनी, तूली, तूलिका, द्रोणिका, चलीका, कृतसला, मेघवर्णा, ग्रामणी, ग्रामिणी, नीलपुष्पिका, नीला, तूणी, द्रोणी, मेला, तुच्छा, नीलपत्री, राज्ञी, नीलिका, नीलपुष्पी काली, श्यामा, शोधनी, श्रीफला ग्राम्या, भद्रा, भार वाही, मोचा, कृष्णा, व्यञ्जनकेशी, महाफला, असिता, क्लीतनी, केशी, चारटिका, गन्धपुष्पा, श्याममलिका, रङ्गपत्री, महावला, स्थिररङ्गा, रङ्गपुष्पी, कालकेशी । गुणा —"नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा । उष्णा हन्त्युदरप्लीह वातरक्तकफानिलान् । आमवातमुदावर्त्तं मन्दञ्च विषमुद्धतम् ।" भा । च द सन्निपातज्व चि चक्रदत्ताद्ये । 'नीली कम्पिल्लक त्रिवृत् ।" तन्नामकौषधी, यस्या चीर नील पुष्पञ्चापि नीलम् । या चानेकलताप्रतानवती भवति । च चि १ अ । नीलाञ्जनिकायां, शारदफलायां, सिंहपिप्पलीति डल्वण । सु चि १५ अ । कालाञ्जन्याम् । काल कार्पास । वा टी हेमा । श्रीफलिकायाम् । बेत गाछ । भद्रदारके । "नीलीतुत्थ लगेत्तच ।' "चूर्णं श्यामा दहन्नीली ।' सु सू ४४ ।

**नीलीफलम्** । क्ली । श्रीफले । सु चि १० अ ।

**नीलीमाष** । पु । राजमाषे । वरवटी ।

**नीलीवृक्षाकृति** । स्त्री । शरपुङ्खायाम् । शरपुङ्खा, वन नील । वै निघ ।

**नीलोत्पलम्** । क्ली । (Nymphaea stellata or N Caerulea.) नीलकमल । नील पद्म, नीलोत्पल । नीलकुमुद । नील उत्पि । हि नीलोफर । म नीलोत्पल । क नैदलिनु । तै मनुकलुव । तत्पर्य्याय —उत्पलक, कुवलय, इन्दीवर, कन्दोत्थ, सौगन्धिक, सुगन्ध, कुड्मक, असितोत्पल, कन्दोट, इन्दिरालय, इन्दीवार, नीलपद्म । गुणा—अतिस्वादु शीतल सुरभि सुखकृत् पाके, तिक्त रक्तपित्तघ्नञ्च । रा नि व १ । "नीलोत्पलमतिस्वादु शीत सुखकर मतं । पाके-

(বেলেড়া) विड़ङ्ग मञ्जिष्ठा शर्करा (চিনি) रास्ना नीलोत्पल गोक्षुर पुण्डरीक (পুণ্ডরিয়া) पुनर्नवा सैन्धव पिप्पली (পিপুল) प्रत्येक १० तो । तैलमस्य घृतसेवनच । भेष । अथवा तैल घृतयो प्र ४ श दुग्ध १६श कल्कद्रव्य प्र २ तो । रस र ।

**नृपवल्लभा** । स्त्री । केविकापुष्पवृक्षे । रा नि व १० । महाराजचूतवृक्षे । वै निघ ।

**नृपवृक्ष** । पु । राजवृक्षे । সোন্দাল গাছ ।

**नृपात्मजः** । पु । महाराजचूतवृक्ष । रा नि व ११ । आम्रातकवृक्षे । वै निघ । स्त्री (जा) । कटुतुम्ब्याम् । र मा ।

**नृपान्नम्** । क्ली । शालिधान्यविशेषे, राजान्ने । गुणा —त्रिदोषघ्न सुस्निग्ध मधुर लघु दीपनं बल्य पथ्य कान्तिद वीर्य्यवर्द्धनञ्च । रा नि व १६ ।

**नृपामय** । पु । राजयक्ष्मणि, क्षयरोगे । रा नि व २० ।

**नृपार्हम्** । क्ली । शालिधान्ये । হৈমন্তিক धान्य । प मु ।

**नृपावर्त्त** । पु, क्ली । राजावर्त्तमणौ । रा नि व १३ ।

**नृपाह्वय** । पु । राजावर्त्तमणौ । प मु । राजपलाण्डौ । रा नि व ७ ।

**नृपेष्ट** । पु । राजपलाण्डौ । रा नि व ७ । राजबदरवृक्षे । रा नि व ११ । नीलीवृक्षे । वै निघ ।

**नृपोचित** । पु । राजमाषे । বরবটী । प मु । रा नि व १६ । [ पाषौ । रा नि व १८ ।

**नृमाणम्** । क्ली । पादात् ऊर्द्धविस्तृतदो

**नृसा(द)र** । पुं । निषादल इति ख्याते द्रव्ये । महाद्रावके ।

**नेता** । पुं । निम्बुवारवृक्षे । নিশিন্দা । रा नि व ४ । निम्बवृक्षे । रा नि व ९ ।

**नेत्रम्** । क्ली । दर्शनेन्द्रिये । चक्षु । रा नि व १८ । नेत्रपरीक्षा यथा—वातेन रुक्ष धूमवर्णञ्च । पित्तात् पीतरक्तहरितवर्णं सदाहञ्च । कफेन धवल ज्योतिर्हीनञ्च । भा । तद्गुण—"विद्याद्द्व्यङ्गुल बाहुल्य स्वाङ्गुष्ठोदरसम्मतं । द्व्यङ्गुल सर्व्वत सार्द्ध भिषङ्नयनबुद्बुद । सुवृत्त गोस्तनाकार सर्व्वभूत गुणोद्भवम् । पलं भुवोऽग्नितो रक्त वातात् कृष्ण सितं जलात् । आकाशादश्रुमार्गाश्च जायन्ते नेत्र बुद्बुदे । दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशा रद । नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते । कृष्णात् सप्तमामिच्छन्ति दृष्टि दृष्टिविशारदा । मण्डलानि च सन्धींश्च पटलानि च लोचने ।" सु उ १अ । तरुमूले । গাছের শিকড় । रा नि व २ । च द वि ज्व चि । "दोषपञ्चककर्णाक्षिनेत्रम् ।" वस्तिशलाकायाम् । शला इति लोके । यथा— नेत्राणि, सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणिसार सारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकाराणि ऋजूनि गुटिकामुखानि । तदभावे नल शल्यस्थि सम्भवा । नेत्रप्रणिधानदोषा षट्, पार्श्वावपीडित मत्युत्क्षिप्तमवसन्न तिर्य्यक्क्षिप्त चलित विवर्त्तित मिति । अतिस्थूल कर्कशमवनतमणु भिन्न सन्निकृष्टविप्रकृष्टकर्णिक सूक्ष्मातिच्छिद्रमतिदीर्घमति ह्रस्वमित्येकादश नेत्रदोषा । सु चि ३५अ । See अनुवासनवस्ति ।

**नेत्रकर्म्म (प्रसाधनम्)** । क्ली । सप्तविध नेत्रोपचारेषु । यथा—"सेकश्चाश्च्योतनञ्चाञ्जो बिडालस्तर्पणस्तथा । पुटपाकोऽञ्जनं नेत्रे यथावस्थ प्रयोजयेत ।" तोड । भा । [ क्षस ।

**नेत्रच्छद** । पु । नेत्रावरणे । চক্ষের পাতা ।

**नेत्रजलम्** । क्ली । अश्रुणि । চক্ষের জল ।

**नेत्रधावनम्** । क्ली । चक्षुधावने । तस्य विधि —"दन्तमुखमधौ घृत्वा प्रात सिञ्चेच लोचने । तोयपूर्णमुखत्वेन दृष्टिराग प्रसीदति ।" राज १प ।

**नेत्रनैमल्यकारी** । पु । खपरधातौ । वै निघ ।

**नेत्रपर्य्यन्त** । पु । अपाङ्गदेशे । रा नि व १८ ।

**नेत्रपाक** । पु । चक्षुष पाके । लक्षणं— "कण्डूपदेहाशुयुत पक्वोदुम्बरसन्निभ । सरम्भो पच्यते यस्तु नेत्रपाक स शोथज ।" मा नि ।

**नेत्रपाषाण** । पु । कटुकायाम् । र मा ।

**नेत्रपिण्ड** । पु । बिडाले । नेत्र गोलके । द्वारा ।

**नेत्रपुटम्** । पुं । नेत्रच्छदे । [ र ।

**नेत्रपुष्करा** । स्त्री । रुद्रजटायाम् । रा नि व

**नेत्ररञ्जनम्** । क्ली । रसाञ्जने । वै निघ ।

**नेत्रभूषणम्** । क्ली । कृष्णाञ्जने । কাল সুর্মা । वै निघ । [ वै निघ ।

**नेत्रमङ्गलकारी (इन्)** । पु । खपरधातौ ।

**नेत्रमलम्** । क्ली । दूषिके । পিচুটী । वै निघ ।

**नेत्रमोला।** स्त्री। यवतिक्ताखलतायाम्। राजनिव ३।

**नेत्ररञ्जनम्।** क्ली। अञ्जने। काजल।

**नेत्ररोग।** पुं। दृष्टिगतरोगे। चक्षेर रोग। तस्य निदान—सन्तमदूरेक्षणरोदनकोपशोकाभिघातादिभिर्वातादयः कुपिता नेत्रविकारान् जनयन्ति। ते च रोगा षट्सप्तति। यथा—वातजा दश, पित्तजा दश, कफजास्त्रयोदश, रक्तजा षोडश, त्रिदोषजा पञ्चविंशति, वाह्यौ द्वौ। ते च पुन षट्सप्ततिप्रकारा अवयवभेदेन षट्सप्तति भवन्ति। यथा—सन्ध्याश्रया नव, वर्त्मजा एकविंशति, शुक्लजा एकादश, कृष्णजायत्वार सर्व्वस्था सप्तदश, दृष्टिजा द्वादश, वहिर्जातौ द्वौ चेति। मानि। अपरस्य नेत्ररोगा यथा—"तोयस्राव प्रसन्नाक्षी नक्तान्ध्यतिमिरस्तथा। कुञ्चकी शुक्लजालश्च पटलम् बुद्बुदस्तथा॥ पूयस्रावश्च काचाची रक्तस्राव स्तथैव च। चिपिटी वत्मरोगश्च अभिष्यन्दस्तथैव च॥ वातपित्तकफैर्दुष्टैर्नेत्ररोगा भवन्त्यमी। लिङ्ग किञ्चित तेषां प्रवक्ष्याम्यनुपूर्व्वश॥" कद।

**नेत्ररोगहा।** पु। वृश्चिकाख्या। विछाति। राजनिव ८।

**नेत्ररोम।** क्ली। नेत्रपक्ष्मणि। वैनिघ।

**नेत्रवती।** स्त्री। पश्चिमदेशप्रसिद्धभारतवर्षीय नद्याम्। एतज्जलगुणा—सुमधुर कान्तिजनक बल्य पुष्टिकर दीपन पाचन बल्यश्च। राजनिव १४।

**नेत्रवर्त्म।** क्ली। दृष्टौ, नेत्रे। वैनिघ।

**नेत्रवर्त्मबन्ध।** पु। नेत्ररोगविशेषे। वैनिघ।

**नेत्रवस्ति।** पु। नेत्रे वस्तिदानप्रकारभेदे। "नेत्र शेष परित्यज्य साई च द्व्यङ्गुलम्। सर्व्वतश्चापि चमर्मी भव दत्त्वा प्रमर्द्दयेत्॥ तत्र पिष्ट माषकाले दृढं सन्धिविवर्जितम्। तत्र। लवाले दृढप्रान्ते शुक्लभागे दवेव वै। पूरयेत् यथावच्च पूरित चैव जायते। नेत्रे मल प्रकुर्व्वीत विकारस्तु तथैव च॥ स्वस्थे कफे तमिरोगे मात्रा पञ्चशत विदु। कफे वात हस्वरोगे मात्रा सप्तशत मता। दृष्टिरोगेष्वष्टशत अधिमन्थे सहस्रकम्। शुक्लेऽपि कुटिल कर्ण स्यात् द्वादशशती मता॥ पित्तरोगे नवशत सहस्र वातरोगिणाम्। एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यते।थवा। द्रवदायापहती शीला शोषद्रव्य विशेषश्च। शुद्ध निरोक्षणम् यथात् नेत्रवस्तिविधिस्मृतम्॥ निरीक्ष्योधिमानिच क्रियाशाघवमव च। सम्यक् रोगी सुखप्तर्तिचश्च वर्णपाटवम्॥ शोकाश्रुपातगुरुता स्वेदो स्वादति तर्पिते। रुक्षाविल सरस्य नेत्र स्याद्धीनतर्पितं॥ रुचे स्निग्ध क्रमशाव प्रयोज्य समादायत।" तोड। See सुच १८४।

**नेत्रविभूषणम्।** क्ली। नीलाञ्जने। वैनिघ।

**नेत्रवैमल्यकारी** (इन्)। पु। खर्परधातौ। वैनिघ।

**नेत्राभिष्यन्दः।** पु। नेत्रसर्व्वगतरोगे। नेत्रशूल वा चोक उठा। स चतुर्विध वाताभिष्यन्द, पित्ताभिष्यन्द, कफाभिष्यन्द रक्तजश्चेति। अय रोग प्रायेणाधिमन्थादिसर्व्वविधनेत्ररोगाणामाकर। लक्षण यथा—"प्रायेण सर्व्वे नयनामयास्तु भवन्त्यभिष्यन्दनिमित्तमूला। वातात्पित्तात् कफा द्रक्तादभिष्यन्दश्चतुर्विध। प्रायेण जायते घोर सर्व्वेषामयाकर॥ निस्तोदनस्तम्भनरोमहर्षसहर्ष पारुष्यशिरोभितापा। विशुष्कभावा शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति॥ दाहप्रपाकौ शिशिराभिनन्दा धूमायन बाष्पसमुच्छ्रय। उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति॥ उष्णाभिनन्दा गुरुताक्षिशोफ कण्डूपदेहा वतिशीतता च। स्रावो मुहु पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति॥ ताम्राश्रुता लोहित नेत्रता च राज्य समन्तादतिलोहिताश्च। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति॥" सुउ ६घ।

**नेत्रामय।** पु। नेत्ररोगे। राजनिव २०।

**नेत्रामयहरः।** पु, स्त्री। खर्परे। वैनिघ।

**नेत्राम्बु।** क्ली। अश्रुणि। चक्षेर जल। अम।

**नेत्रारि।** पु। रात्रौ। मनसा गाछ। राजनिव ८।

**नेत्राश।** क्ली। अक्षिगतार्शसि। तत्र सार्थे रोध वेदनास्रावो दुःखनाशश्च। सुनि १४।

**नेत्रास्थि।** क्ली। नयनाधिष्ठाने अस्थिनि। सुशा ७घ।

**नेत्री।** स्त्री। नाड्यां। उत्र।

**नेत्रोदकम्।** क्ली। नेत्रजले। अर्द।

**नेत्रोपम।** पुं। वाताने। बादाम। भा।

**नेत्रोपमफलः।** पुं। वाताममृक्षे। भा।

**पक्वरसः (सिकाः)।** पु। मद्ये। अर। तीक्ष्णमद्यभेदे, शीधी। गुणा—बलवर्णकर सर शोफघ्न वातघ्न पाके मधुर हृद्य इन्द्रियबोधनश्च। सु सू ४५ष। "दीपनी दीपनी हृद्य शोषशोफार्शसां हित। स्नेहश्लेष्मविकारघ्नी वर्ण्यं पक्वरसो मत॥" च सू २७ष।

**पक्ववारि।** क्ली। सुधाजले। काञ्जिके। शब्द।

**पक्वशस्यसमोसृति.।** पु। राजकदम्बे। वै निघ। [द्रव्ये।

**पक्वान्नम्।** क्ली। पाचितान्ने। घृतादिपक्वभक्ष्य

**पक्वाशयः।** पु। नाभेरधोभागे। पाकाशय। "पक्वाशयो ह्यधो नाभे।" रा नि व १८। अपिच "नाभिस्तनान्तर जन्तोराहुरामाशयम् बुधा। आमाशयादध पक्वाशयाद्वन्तु पाकला। पक्वाशयस्त्वधो नाभेरुर्ध्वमामाशय स्मृत॥" भा।

**पक्वेष्टका।** स्त्री। दग्धेष्टकायाम्। वै संग्रह।

**पखोण्ड (पोड)।** पु। पक्वपोडवृक्षे। पथोड़। रा नि व ८।

**पङ्क।** पु। कर्दमे। কাদা। गुणा—पङ्कस्य दाहनाशित्व भग्नसन्धितत्व हिमलश्च। राज। शोथघ्नत्व सरलत्व। भा।

**पङ्ककर्वट।** पु। कोमलकर्दमे। थितन पलि। त्रिका। [पाखी। त्रिका।

**पङ्ककीर.।** पु। कोयष्टिकपक्षिणि। टिटिभ

**पङ्कक्रोड।** पु। ग्राम्यशूकरे। वै निघ।

**पङ्कगडक।** पु। (Magrognathus) पङ्कालमत्स्ये, क्षुद्रमत्स्यभेदे। পাঁকাল মাছ। तत्पर्याय,—गवाटी, पङ्कगति, शक्ली। त्रिका।

**पङ्कगति।** पु। पङ्कालमत्स्ये। शमा।

**पङ्कग्राह।** पु। शिशुमारे। वै निघ। मकरे। हारा।

**पङ्कजम् (न्म)।** क्ली। पद्मे। पद्म।

**पङ्कजात।** पु। भद्ररामवृक्षे। ভীমরাজ। वै निघ। [পদ্মের থাড। वै निघ।

**पङ्कजिनी।** स्त्री। पद्मालये, कमलिन्याम्।

**पङ्कपर्पटी।** स्त्री। पङ्कपङ्कजाते पर्पटाकारे। सौराष्ट्रमृत्तिकाभावे इय ग्राह्या। रमा।

**पङ्कमण्डूक।** पु। जलपक्षी। वै निघ। शम्बूके। শামুক। हारा।

**पङ्करुट् (हम्)।** क्ली। पद्मे। रा नि व १०।

**पङ्कवारि।** क्ली। काञ्जिके। वै निघ।

**पङ्कवासः।** पु। कर्कटे। रा नि व १९।

**पङ्कशुक्तिः।** स्त्री। शुक्ती। झिनुक। त्रिका।

**पङ्कशू(सू, सू)रण।** पु। पद्मकन्दे। শালুক। त्रिका।

**पङ्कार।** पु। (Vallisneria, or Tropa bispinosa) जलजवृक्षविशेषे, कण्टकसेवल्या। কাঁটাশেউতী। भ।

**पङ्किल.।** त्रि। पङ्कमये। मलिने।

**पङ्कीर।** पु। टिट्टिभपक्षिणि। টিটির পাখী। वै निघ।

**पङ्केज(रुह)म्।** क्ली। कमले। रा नि व १०। पु। सारसपक्षिणि।

**पङ्क्तिकण्टक.।** पु। अपामार्गक्षुपे। रा नि व ४।

**पङ्क्तिकन्द।** पु। मालाकन्दे। रा नि व ७।

**पङ्क्तिचर।** पु। कुररपक्षिणि। रा नि व १९। क्रौञ्चपक्षिणि। शचि।

**पङ्क्तिबीज (क)।** पु। बर्बूरकवृक्षे। বাবুলা গাছ। रा नि व ८। आरग्वधवृक्षे। कर्णिकारवृक्षे। শোন্দাল, চীনের বাবলী গাছ। रा नि व ९।

**पङ्क्तिशूल।** पु, क्ली। परिणामशूले। निदान लक्षणे। "स्वैर्निदानै प्रकुपितो वात सन्निहितो यदा। कफपित्ते समावृत्य शूलकारी भवेद्बली। भुक्ते जीर्यति यच्छूल तदेव परिणामजम्। तस्य लक्षणमप्यत्र समासेनाभिधीयते। आध्मानाटोप विण्मूत्रविबन्धारतिवेपने। स्निग्धोष्णोपशमप्राय वातिक तद्वदेत्भिषक्। तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तमम्। शूल शीतशमप्राय पैत्तिक तद्वदे त्भिषक्। छर्दिहृल्लाससम्मोहस्वल्परुग्दीर्घसन्तति। कटुतिक्तोपशान्तौ च विज्ञेयश्च कफात्मकम्॥" इत्यादि।

**पङ्गु।** पु। वातव्याधिविशेषे। "पङ्गु सक्थ्नो द्वयोर्वधात्।" सु नि १ष।

**पङ्गुर्व(त्व)हारिणी।** स्त्री। शिम्बीक्षुपे। रा नि व ४। [थोंदि। शक्रान्ने।

**पङ्गुल।** पु। एरण्डवृक्षे। वा सू १५ष विदा

श क्वाथार्थं—दशमूल श २प त्रिफला श २ प हरिद्रा दारुहरिद्रा कुटजत्वक् सप्तपर्णत्वक् अपामार्गमूल नीलीमूल कटुकी आरग्वधफलमज्जा काकोदुम्बरिकामूल कुष्ठ दुरालभा च एषां श २प वारि ६४ श शे १६ श। कल्कार्थं—भार्गीमूल पाठामूल त्रिकटु त्रिवृता हिज्जलबीज गजपिप्पली तुवरीमूल (अड़हड़मूल) मूर्व्वामूल दन्तीमूल भूनिम्ब चित्रकमूल श्यामालता अनन्तमूल मञ्जिष्ठा गन्धतृण (ग्रामकर्पूर) मदनफलम्, एषां श २ तो गोमयरस गोमूत्रम् अम्लदधि दुग्धम् एषां श ४श यथाविधि पचेत्। चक्र। च चि २५ अ।

**पञ्चगुप्त** । पु । कच्छपे । शब्द ।

**पञ्चगुप्ता (प्ति, रसा)** । स्त्री । स्पृक्कायाम् । पिड़िं शाक । रा नि व १२ ।

**पञ्चजटा** । स्त्री । पञ्चमूले । चक्र । "पञ्चजटा शृतदुग्धजनरसम्।"

**पञ्चजन** । पु । पुरुषे । वै निघ ।

**पञ्चतत्त्वम्** । क्ली । क्षित्यप्तेजोमरुद्व्योमसु पञ्च भूतेषु । मद्यमांसमत्स्यमुद्रामैथुनेषु । तत्त्वम् ।

**पञ्चता (त्वम्)** । स्त्री, क्ली । मृत्यौ । अम ।

**पञ्चतिक्त (क)** । पु । पञ्चविधतिक्तद्रव्यगणे, तत्कषाये च । तद्विधा —कण्टकारी गुडूची शुण्ठी कुष्ठ किराततिक्तश्च । चक्र विष म ज्व चि । अन्य —निम्बमूलत्वक् पटोलपत्र वासात्वक्कण्टकारी गुडूची चेति । भा ।

**पञ्चतिक्तघृतम्** । क्ली । कुष्ठाधिकारे घृतम् । गव्यघृत ४ श । क्वाथार्थं—निम्बमूलत्वक् पटोल पत्र कण्टकारी गुडूची वासामूलम्, एषां श १० प वारि ६४ श शे १६ श । कल्कार्थं—त्रिफला १ श यथाविधि पचेत् । भैष । अन्यत् विस्फोटाधिकारे—गव्यघृत ४ श । क्वाथार्थं—पटोलपत्र सप्तपर्णमूलत्वक् निम्बमूलत्वक् वासामूलत्वक् गुडूची त्रिफला एषां श ६ प २ तो वारि ६४ श शे १६ श । कल्कार्थं त्रिफला १ श. यथावत् पाच्यम् । रस र ।

**पञ्चतिक्तघृतगुग्गुलु** । पु । कुष्ठाधिकारे । गव्यघृत ४ श । क्वाथार्थं—निम्बत्वक् (निमछाल) गुडूची (गुलञ्च) वासामूल (वासकमूल) पटोल पत्र कण्टकारी, एषां श १० प जल ६४ श शे १६ श । कल्कार्थ—आकनादीमूल विड़ङ्ग देवदारु गजपिप्पली यवक्षार सर्ज्जिक्षार (साजिमाटी) शुण्ठी हरिद्रा शतपुष्पा चव्य (चई) कुष्ठ (कुड़) ज्योतिष्मती (लताफट्‌की) मरिचम् इन्द्रयव यमानी चित्रकमूल (चितामूल) कटुकी भल्लातक (भेला मूटी) वचा पिप्पलीमूल मञ्जिष्ठा अतिविषा (आतइच) त्रिफला वनयमानी, एषां श २ तो शुद्धगुग्गुलु ५ प । ( गुग्गुलुं पोट्टल बद्धा दोलायन्त्रेण कल्कैः सह घृत पक्तव्यम्) । पाके सति कल्क क्षालयित्वा पुनर्गुग्गुलुना सह पक्त्वा गृहीतव्यम् । शा कौ ।

**पञ्चतृणम्** । क्ली । कुशकाशशरदर्भेक्षुरूपतृण पञ्चमूले । "कुश काश शरो दर्भ इक्षुश्चेव तृणोद्भवम् । पञ्चतृणमिदं ख्यातं तृणजम्पञ्चमूलकम् ॥" प म १ख । अन्यञ्च—"शालीक्षुकुशकाशो स्यात् शरेण तृणपञ्चकम् । एषां मूलं तृषादाहपित्तास्रघ्नं बृंहणम् ॥" भा ।

**पञ्चत्य** । पु । कोकिले । वै निघ ।

**पञ्चदीर्घम्** । क्ली । पञ्चशरीरावयव देघजनित शुभलक्षणे । तद् यथा—"बाहू नेत्रद्वय कुक्षिर्द्वे तु नासे तथैव च । स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रचक्षते ॥"

**पञ्चनख** । पु । व्याघ्रे । रा नि व १९ । कच्छपे । जटा । गजे । त्रिका । व्याघ्र शरभ शार्दूल गोधाकच्छपशरटसिंहेषु । भक्ष्यपञ्चनखा —"शशक शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चम ।" स्मृति ।

**पञ्चनखर** । पु । गोधायाम् । গোসাপ । वै निघ ।

**पञ्चनिदानम्** । क्ली । रोगज्ञानस्य पञ्चविधो पायेषु । यथा—"निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥" मा नि ।

**पञ्चनिम्बम्** । क्ली । समभागत्वक्पत्रफलपुष्पमूलरूपे निम्बपञ्चके । "निम्बस्य पत्रत्वक्पुष्पफलमूलैर्विमिश्रितैः । पञ्चनिम्बं समाख्यातं तत्तिक्तनिम्बपञ्चकम् ।" रा नि व २१ ।

**पञ्चपचा** । स्त्री । दारुहरिद्रायाम् ।

**पञ्चपट्ट** । क्ली । पञ्चविधवस्त्रभेदे ।

**पञ्चपत्र** । पु । चक्रालकन्दे । रा नि व ० ।

**पञ्चपत्रिका** । स्त्री । गोरक्ष्याम् । रा नि व ५ ।

**पञ्चपर्णि(र्णी)का** । स्त्री । गोरक्ष्यां, गोरक्ष त्रिधायाम् । रा नि व ५ ।

षी (इन्)। पु। वरुणवृक्षे। श्रम। रस र उद चि वङ्गभल्लातकरसे।

शुपत (क)। पु। श्वेतरक्तवकपुष्पवृक्षे। रा नि व ५। मे। अगस्तिपुष्पवृक्षे। प मु। रा नि व १०। महावकुलवृक्षे। वै निघ।

ष्यात्याकरसम्भवम्। क्ली। शाम्भरलवणे। मा। तत्पर्य्याया,—रौमक रामलवणम्।

पाषाण। पु। गन्धके। प मु। करञ्जोडि पाषाणभेदे। वै निघ २भ श सा चि धातक्यादि मोदके। च द श्व चि। प्रस्तरे। श्रम।

पाषाणकदली। स्त्री। कदलीभेदे। काष्ठ-कदली। वै निघ।

पाषाणकुट्ट(न्द)क। पु। पाषाणभेदके। पाथरकूचा। वै निघ।

पाषाणगर्दभ। पु। हनुसन्धिजक्षुद्ररोगे। गालगुटी। निदानलक्षणं—"वातश्लेष्मसमुद्भूत श्वयथुर्हनुसन्धिज। स्थिरो मन्दरुज स्निग्धो ज्ञेय पाषाणगर्दभ॥" मा नि। भा म ४भ। "हनुसन्धौ समुद्भूत शोफमल्परुज स्थिर। पाषाणगर्दभ विद्यात् बलासपवनात्मकम्॥" सु नि १३श।

पाषाणगैरिकम्। क्ली। गिरिशिलिकायाम्। गिरिमाटी। वै निघ।

पाषाणजतु। क्ली। शिलाजतुनि। भैष शोथचि रसाभ्रमण्डूरे।

पाषाणभित्। पु। पाषाणभेदे। पाथरकूचा। र मा। कुलत्थे। (एरण्डसमके)। करञ्जोड़ि पाषाणभेदे। वै निघ।

पाषाणभेद (क) (न) (दी (इन्))। पु। (Coleus amboinicus Syn Coleus aromaticus) स्वनामख्यातक्षुपे। पाथर चुनीति लोके। च सू ४भ। पाथरकूचा, हिमसागरा। हि पाथरचुर, लोहाचूर। म क पाषाणभेदि। तै पिण्डिचेट्टु। तत्पर्य्याया,—अश्म भेद अश्मभित् अश्मघ्न शैलाभेद अश्मभेदक श्वेता उपलभेदी उपलभित् शिलागर्भज नगभित्। सा त्रिधा वटपत्रीशिलावल्कक्षुद्रभेदन। सा गुणा —मधुर तिक्त भेदघ्न हृद्दाहमूत्रकृच्छ्रघ्न शीतल अश्मरीघ्न। रा नि व ५। "अश्मभेदो हिमस्तिक्त कषायो वस्तिशोधन। भेदनो हन्ति गोपार्शो गुल्मकृच्छ्राश्मह्रद्रुज। योनिरोगान् प्रमेहाश्च प्लीहशूलव्रणानि च॥" भा पू १भ ह व। अश्मरी सञ्चितश्च श्रपि अपस्मारे आक्षेपके हित वातघ्नानि करञ्च। अवशिष्टयोगुणा खखपर्य्यायो द्रष्टव्यौ।

पाषाणरोग:। पु। अश्मरीरोगे। च द अश्म चि।

पाषाणवज्रकरस। पु। अश्मर्य्यधिकारे रस। पारद १भ गन्धक २भ श्वेतपुनर्नवारसे दिन मर्दयित्वा मूत्ररयन्त्रे पचेत। उद्धृत्य श्लक्ष्ण चूर्णयेत्। तुल्येन पाषाणभेदचूर्णेन यथाबल मात्रा देया। रस र।

पाषाणविषम्। क्ली। दारमोचभेदे। दारुमुज। प मु।

पाषाणसम्भववल्ली। स्त्री। प्रबाले। प्रवाल। वै निघ।

पाषाणान्तक:। पु। अश्मन्तकवृक्षे। आपटा इति लोके। रा नि व ९।

पाषाणी। स्त्री। परिमाणबोधक पाषाणखण्डे। बाटिखारा।

पाह्वाड (त)। पु। ब्रह्मदारुवृक्षे। पलाश-पिप्पल। श च।

पिक। पु। कोकिले। स्त्री। कोकिलायाम्। कोकिल पाखी। श्रम।

पिकदेव, पिकप्रिय। पु। आम्रवृक्षे। वै निघ।

पिकप्रिया। स्त्री। महाजम्बूवृक्षे। रा नि व ११। कोकिलायाम्।

पिकबन्धु। पु। आम्रवृक्षे। त्रिका।

पिकभक्षका (क्षा)। स्त्री। भूमिजम्बूवृक्षे। दन जाम। रा नि व ११।

पिकमहोत्सव। पु। आम्रवृक्षे। वै निघ।

पिकराग। पु। आम्रवृक्षे। रा नि व ११।

पिकवल्लभ। पु। आम्रवृक्षे। भा।

पिकाङ्ग। पु। चातकपक्षिणि। श च।

पिकानन्द। पु। वसन्तकाले।

पिकाक्ष। पु। कोकिलाक्षे। कुलियाखाड़ा। रा नि व ११। रोचनीवनस्पती। श च।

**पिकी** । स्त्री । कोकिलायाम् ।

**पिकुरसः** । पुं । मद्ये । वै निघ ।

**पिकेक्षणा** । स्त्री । कोकिलाक्षक्षुपे । कुলে-খাড়া । रा नि व ४ ।

**पिक्कः** । पु । करिपोते । श मा ।

**पिङ्गम्** । क्ली । शोणपित्तले । वै निघ । बालके । বালা । हरिताले । पुं । वनमूषिके । रा नि व १०।१३।१९ । त्रि । पिङ्गलवर्णे ।

**पिङ्गकापिशा** । स्त्री । तैलपायिकायां । তেলা-পোকা । हे च ।

**पिङ्गचक्षुः** । पुं । कुम्भीरे । हे च ।

**पिङ्गभासः** । पु । गोधेरकजातिभेदे । सु कल्प ८ अ । See कीट । [ रा नि व ७ ।

**पिङ्ग(ल)मूलम्** । क्ली । गर्जरे । গাজর ।

**पिङ्गलम्** । क्ली । रीतौ । পিতল । रा नि व १३ । हरिताले । पु । नकुले । स्थावरविषभेदे । हे च । पेचके । কুটুরে পেঁচা । रा नि व १९ । उशीरे । रास्नायाम् । वै निघ । मण्डलिसर्पविशेषे । सु कल्प ४ अ । वानरे । त्रिका । अग्नौ । पिङ्गलवर्णे ।

**पिङ्गलनामकः** । पु । शिलारसे । वै निघ ।

**पिङ्गललोहम्** । क्ली । रीतौ । পিতল । रा नि व १३ ।

**पिङ्गलसारे** । क्ली । हरिताले ।

**पिङ्गला** । स्त्री । शिंशपावृक्षे । শিশু গাছ । र मा । गोरोचनायाम् । रा नि व १२ । नकुल १४ अ । राजरीतौ । পিতলবিশেষ । रा नि व १३ । ज्योतिष्मतीलतायाम् । वै निघ । निर्विषजलौकायाम् । सु सू १३ अ । पक्षिभेदे । পিঙ্গলা পাখী । रा नि व १९ । कर्णिकायाम् । নাড়ী বিশেষ । हे च । सा च दक्षिणाण्डार्धस्था धनुवक्त्रा दक्षिणनासान्तगता । (सारदातिलके) । "पिङ्गला सितरक्ताभा दक्षिणपार्श्वमाश्रिता ।" योगार्णव ।

**पिङ्गलाक्षः** । पुं । पिङ्गलापक्षिणि । वै निघ ।

**पिङ्गलिका** । स्त्री । बकपक्षिणि । जटा । मक्षिकाविशेषे । सु कल्प ८ अ । हरिताले ।

**पिङ्गवर्णकम्** । क्ली । गर्जरमूले । গাজরমূল । वै निघ ।

**पिङ्गसारः** । पु । हरिताले । रा नि व १३ ।

**पिङ्गस्फटिकः** । पु । गोमेदमणौ । तत्पर्याया —गोमेद, राहुरत्न, तमोमणि, स्वर्भानव, पिङ्गस्फटिक । गुणा,—अम्ल उष्ण दीपन पाचनत्व वातविकारनाशित्व धारणे पापनाशित्वञ्च । रा नि व १३ ।

**पिङ्गा** । स्त्री । चण्डी । वंशरोचने । रा नि व ६ । शमीवृक्षे । र मा । हिङ्गुनि । मे । गोरोचनायाम् । रा नि व १२ । हरिद्रायाम् । रा नि व २३ । रक्तपाटलिकायाम् । वै निघ ।

**पिङ्गाक्षः** । पु । काचे । वै निघ ।

**पिङ्गाशः** । पु । मत्स्यविशेषे । পাঙ্গাশ মাছ । क्ली । स्वर्णे । পাকা সোণা । मे ।

**पिङ्गाशी** । स्त्री । नीलीवृक्षे । मे ।

**पिङ्गास्यः** । पुं । पिङ्गाशमत्स्ये । श र ।

**पिङ्गाह्व** । पु । पक्षिविशेषे । বন্ কাকবট পক্ষী । वै निघ ।

**पिङ्गाक्ष** । पु । विडाले । वै निघ ।

**पिङ्गी** । स्त्री । शमीवृक्षे । प मु ।

**पिच(चि)ण्डः** । पु । उदरे । रा नि व १८ । पशुपृष्ठभागे । हे च ।

**पिचव्यः (व्या)** । पु, स्त्री । कार्पासे । हे च ।

**पिचिण्डिका** । स्त्री । इन्द्रयवः(?) । পায়ের ডিম । हे च ।

**पिचिण्डिलः** । त्रि । लम्बोदरे । हे च ।

**पिचु** । पु । कार्पासाम् । रा नि व ४ । कार्पासतूलके । अम, । तोलकद्वये । प प्र ३ख । कुष्ठरोगभेदे । मे । मृदुतैलविधिभेदे तैलार्द्रपिचुधारणरूपे । तैलाक्त तूलफाहा इति । भा म ४भ योनिरोगचि । क्ली । तूल । তূলা । सु सू ५अ ।

**पिचुकः** । पु । मदनवृक्षे । দাঁটা ময়না । प मु । पक्वकरीरजफलकार्पासे । धान्यपुष्पाख्य मरुपुष्पे । नीलोत्पले । सु चि ७अ । साकुरुण्डवृक्षे । वै निघ । शस्यविशेषे । मदनवृक्षे । कार्पासाम् ।

**पिचुतु(तू)लम्** । क्ली । कार्पासे । त्रिका ।

**पिचुमन्द (मर्द)** । पु । निम्बवृक्षे । নিম্ গাছ । रा नि व ९ । सि यो सन्निपातज्वरचि ।

**पिचुलः** । पुं । झावुकवृक्षे । ঝাউ গাছ ।

रम । कार्पासवृक्षे । जलकाके । तिलकवृक्षे ।
ईक्ष्मलवृक्षे । मे । तूले । चटीसा ।

**पिचुली** । स्त्री । गुञ्जायाम् ।

**पिचुवर्त्ति** । स्त्री । तूलवर्त्याम् । तूलार
बाति । च द आयुर्वेदाधिकारे ।

**पिचक(ट)म्** । क्ली । वङ्गे । राङ् । प मु ।
रा नि व १३ । औषधे । मे । [ मे ।

**पिचटक:** । पु । नेत्ररोगे । পিচুটী রোগ ।

**पिचिट:** । पु । अग्निप्रकृतिकीटविशेषे । सु
कल्प ८ अ । See कीट ।

**पिचितम्** । क्ली । अस्थिभङ्गविशेषे । হাড়
চেপ্‌টে যাওয়া । तत्र पृथुतां गतमल्पशोफम । सु
नि १५ अ । सन्धिमुक्तभेदे । "प्रहारपीडनाभ्यान्तु
यदङ्ग पृथुतां गतम् । सास्थि तत्पिचितं विद्यात्
मज्जरक्तपरिप्लुतम् ॥" सु चि ३ अ ।

**पिच्छ (क)** । पु । मोचरसे । अम । लाङ्गूले ।
ने । क्ली । मयूरपुच्छे । अम ।

**पिच्छनम्** । क्ली । अत्यन्तपीडने । च सू १८ अ ।

**पिच्छपादी** । त्रि । सन्नामकपादरोगाक्रान्ते
(पक्षे) । रोमाल्ल शयते यस्य समन्तादेव पच्यते ।
क्लेदश्च पिच्छिलो यस्य पिच्छपादीति तं विदुः ॥"
ग द ३९ अ ।

**पिच्छभार** । पु । मयूरपुच्छे । वै निघ ।

**पिच्छल** । पु । मोचरसे । आकाशवल्ल्याम् ।
वनवारवृक्षे । वै निघ ।

**पिच्छलच्छदा (दला)** । स्त्री । उपोदि
कायां । পুঁই গাছ । बदरीवृक्षे । विका ।

**पिच्छलत्वक्** । पु । नागरङ्गवृक्षे । स्त्री ।
नागरङ्गवल्कल । वै निघ । [ वै निघ ।

**पिच्छलवोज** । पु । वनपनसे । আনারস ।

**पिच्छला** । स्त्री । शल्लीवृक्षे । रा नि व ८ ।
शाल्मलीवृक्षे । आकाशवल्ल्याम् । वै निघ । उपो
दिकायां । विका ।

**पिच्छवाण** । पु । श्येनपक्षे । শ্যেন পাখী ।
रा नि व १९ ।

**पिच्छा** । स्त्री । मोचरसे । प मु । भैष स्त्री
रोचि मधुकादितैल । वा उ ३४ अ पुष्पानुगचूर्णे ।
शिंशपावृक्षे । अ च । मण्डे । भक्तमण्ड । कोषे ।
पूगवृक्षे । कदलीवृक्षे । मे । सर्पविषे । लालायाम् ।
शाल्मलीवृक्षे । चीने । वै निघ । अश्मपादरोगे ।
ग द । कतकवृक्षे । आकाशवल्ल्याम् । वै निघ ।

**पिच्छावस्ति** । स्त्री । पिच्छिलवस्तौ । वा
चि ४ अ ।

**पिच्छावृत्त** । पु । शाल्मलीवृक्षे ।

**पिच्छितिका** । स्त्री । शिंशपावृक्षे । শিশু
গাছ । श च ।

**पिच्छिल** । पु । पिण्डालुके । प मु । बहु
वारवृक्षे । भा । क्ली । समण्डदधनि । वै निघ ।
सरसव्यञ्जनादौ । अ । स्निग्धसूपादौ । भानुदत्त ।
समण्डभक्ते । सजलव्यञ्जने । नीलकण्ठ । त्रि ।
भक्तमण्डयुक्ते । अम रा ।

**पिच्छिलक** । पु । धन्वनवृक्षे । ধামনা গাছ ।
रा नि व ९ । शाल्मलीवृक्षे । वै निघ ।

**पिच्छिलगुणकर्म्म** । क्ली । पिच्छिलद्रव्यस्य
गुणकर्म्मणि । तत्र बल्य सन्धान श्लेष्मलं गुरु । सु ।

**पिच्छिलच्छदा** । स्त्री । उपोदक्याम् ।
পুঁইশাক । प मु ।

**पिच्छिलत्वक्** । पु । धन्वनवृक्षे । ধামনা
গাছ । प मु । र मा । नागरङ्गवृक्षे । विका ।

**पिच्छिलदला** । स्त्री । बदर्याम् । কুল গাছ ।
उपोदिकायाम् ।

**पिच्छिलवस्ति** । स्त्री । निरूहवस्तिभेदे ।
"बदरैरावती शेलु शाल्मलीधन्वनाङ्कुरा । क्षीर
सिद्धा क्षौद्रयुक्ता नाम्ना पिच्छिलसंज्ञिता । अजोर
भैणरुधिरैर्युक्ता देया विचक्षणे । मात्रा पिच्छिल
वस्तीनां पलैर्द्वादशभिर्मता ॥" भा ।

**पिच्छिलफलम्** । क्ली । डिण्डिशफले ।
ঢেঁড়শ । तद्‌गुणा — बलपुष्टिकारित्व प्रमेहास्र
पित्तविषदीपनाशित्वञ्च ।

**पिच्छिलसार** । पु । मोचरसे । रा नि व ८ ।

**पिच्छिला** । स्त्री । ऊर्षिकाख्याम् । বিছাতী ।
रा नि व ५ । पीतशिंशपावृक्षे । শিশু গাছ । र
मा । कच्चु । कचु । श च । अतस्याम् । मशिना ।
रा नि व १६ । शाल्मलीवृक्षे । उपोदिकायाम् ।
मे । शल्लीवृक्षे । रा नि व ४ । वृक्षभेदे । सिंहि
दाना इति केचित् । कोकिलाक्षे । কুলেখাড়া ।
रा नि व ४ ।

**पिञ्जोडकम्** । क्ली । नेत्रपिचटे ।

**पिकी** । स्त्री । कोकिलायाम् ।

**पिकुरसः** । पु । मद्ये । वै निघ ।

**पिकेक्षणा** । स्त्री । कोकिलाक्षक्षुपे । कुले-थाडा । रा नि व ४ ।

**पिक्कः** । पु । करिपोते । श मा ।

**पिङ्गम्** । क्ली । श्योपवित्तलि । वै निघ । बालके । बाला । हरिताले । पुं । वनमूषिके । रा नि व १०।१३।१९ । त्रि । पिङ्गलवर्णे ।

**पिङ्गकपिशा** । स्त्री । तैलपायिकायां । তেলা-পোকা । हे च ।

**पिङ्गचक्षु** । पुं । कुम्भीरे । हे च ।

**पिङ्गभास** । पु । गोधिरकजातिभेदे । सु कल्प ८क्ष । See कीट । [ रा नि व ७ ।

**पिङ्ग(ल)मूलम्** । क्ली । गर्ज्जरे । গাজর্ ।

**पिङ्गलम्** । क्ली । रीतौ । পিতল । रा नि व १३ । हरिताले । पु । नकुले । स्थावरविषभेदे । हे च । पेचके । কুটুরে পেঁচা । रा नि व १९ । कुम्भीरे । राखायाम् । वै निघ । मण्डलिसर्प विशेषे । सु कल्प ४क्ष । वानरे । त्रिका । अग्नौ । पिङ्गलवर्णे ।

**पिङ्गलनामकः** । पु । शिलारसे । वै निघ ।

**पिङ्गललोहम्** । क्ली । रीतौ । পিতল । रा नि व १३ ।

**पिङ्गलसारे** । क्ली । हरिताले ।

**पिङ्गला** । स्त्री । शिंशपावृक्षे । শিশু গাছ । र मा । गोरोचनायाम् । रा नि व १२ । नकुल १४क्ष । राजरीतौ । পিতলবিশেষ । रा नि व १३ । ज्योतिष्मतीलतायाम् । वै निघ । निर्विष जलौकायाम् । सु सू १३क्ष । पक्षिभेदे । পিঙ্গলা পাখী । रा नि व १९ । कर्णिकायाम् । নাড়ী বিশেষ । हे च । सा च दक्षिणाण्डार्धस्या धनुर्वक्रा दक्षिणनासान्त गता । (सारदातिलक) । "पिङ्गला सितरक्ताभा दक्षिण पार्श्वमाश्रिता ।" योगार्णव ।

**पिङ्गलाक्ष.** । पु । पिङ्गलावर्णाक्षि । वै निघ ।

**पिङ्गलिका** । स्त्री । बकपक्षिणि । जटा । मक्षिकाविशेषे । सु कल्प ८क्ष । हरिताले ।

**पिङ्गवर्णकम्** । क्ली । गर्जरमूले । গাজরমূল । वै निघ ।

**पिङ्गसारः** । पु । हरिताले । रा नि व १३ ।

**पिङ्गस्फटिकः** । पु । गोमेदमणौ । तत्पर्याया —गोमेद, राहुरत्न, तमोयोनि, स्वर्भानव, पिङ्ग स्फटिक । गुणा,—अम्लत्व उष्णत्व दीपन पाचनत्व वातविकारनाशित्व धारणे पापनाशित्वञ्च । रा नि व १३ ।

**पिङ्गा** । स्त्री । वशी । वंशलोचने । रा नि व ६ । शमीवृक्षे । र मा । हिङ्गुनि । मे । गोरोचनायाम् । रा नि व १२ । हरिद्रायाम् । रा नि व २३ । रक्तवाहिनाडाम् । वै निघ ।

**पिङ्गाक्षः** । पु । काचे । वै निघ ।

**पिङ्गाशः** । पु । मत्स्यविशेषे । পাঙ্গাশ মাছ । क्ली । स्वर्णे । পাকা সোণা । मे ।

**पिङ्गाशी** । स्त्री । नीलीवृक्षे । मे ।

**पिङ्गास्यः** । पु । पिङ्गाशमत्स्ये । श र ।

**पिङ्गाह्वः** । पुं । पक्षिविशेषे । वङ्ग काकवट पक्षी । वै निघ ।

**पिङ्गाक्ष** । पु । विडाले । वै निघ ।

**पिङ्गी** । स्त्री । शमीवृक्षे । प सु ।

**पिच(चि)ण्ड.** । पु । उदरे । रा नि व १८ । पशुपृष्ठभागे । हे च ।

**पिचव्य. (व्या)** । पु, स्त्री । कार्पासे । हे च ।

**पिचिण्डिका** । स्त्री । पुन्द्रवर्षा । পায়ের ডিম । हे च ।

**पिचिण्डिलः** । त्रि । लम्बोदरे । हे च ।

**पिचु.** । पु । कार्पासाम् । रा नि व ४ । कार्पासतूलके । अम । तोलकद्वये । प प्र १ख । कुष्ठरोगभेदे । मे । सूक्ष्मतैलविधिभेदे तैलार्द्र पशु-धारणरूपे । तैलाक्त तूलफाहा इति । भा म ४भ योनिरोगे च । क्ली । गूले । ফুল । सु सू ५क्ष ।

**पिचुक.** । पु । मदनवृक्षे । কাঁটা ময়না । प सु । पक्वकरीरफलककार्पासे । कर्पपुष्पाद्य मदनपुष्पे । नीलीतृणे । सु चि ७क्ष । शाकुरवृक्षे । वै निघ । शस्यविशेषे । मदनवृक्षे । कार्पासाम् ।

**पिचुतु(तू)लम्** । क्ली । कार्पासे । त्रिका ।

**पिचुमन्द (मर्द)** । पु । निम्बवृक्षे । নিম্ গাছ । रा नि व ९ । त्रिदोषसन्निपातघ्न त्रि ।

**पिचुल** । पुं । झावुकवृक्षे । ঝাউ গাছ ।

अम । कार्पासवृक्षे । शल्लकाके । तिलकवृक्षे । शिम्बलवृक्ष । मे । तूलि । पटोला ।

**पिचुली** । स्त्री । मृगायाम् ।

**पिचुवर्त्ति'** । स्त्री । तूलवर्त्याम् । तूलार वाति । वद अग्न्यर्त्ताधिकारे ।

**पिचक(ट)म्** । क्ली । वङ्गे । राङ् । प मु । रा नि व १३ । शीसके । मे । [मे ।

**पिचटकः** । पुं । नेत्ररोगे । पिचुटी रोग ।

**पिच्चिट** । पु । अग्निप्रकृतिकीटविशेषे । सु कल्प ८ अ । See कीट ।

**पिच्चितम्** । क्ली । अस्थिभङ्गविशेषे । हाड़ चेप्टे याओया । तत्र पृथुता गतमस्थ्यालीकम् । सु नि १५ अ । अस्थिभग्नभेदे । "प्रहारपीडनाभ्यान्तु यदङ्गं पृथुतां गतम् । सास्थि तत्पिच्चितं विद्यात् मज्जरक्तपरिप्लुतम् ॥" सु चि २ अ ।

**पिच्छ (क)** । पु । मोचरसे । अम । लाङ्गुले । मे । क्ली । मयूरपुच्छे । अम ।

**पिच्छनम्** । क्ली । अत्यन्तपीडने । च सू १८ अ ।

**पिच्छपादी** । त्रि । तन्नामकपादरोगाक्रान्ते (अर्श) । रोमान्तं श्वयतं यस्य समन्तादेव पच्यते । क्लेदश्च पिच्छिलो यस्य पिच्छपादीति तं विदुः ॥" न द २८ अ ।

**पिच्छभार.** । पु । मयूरपुच्छे । हे निघ ।

**पिच्छल** । पु । मोचरसे । आकाशवल्ल्याम् । बहुवारवृक्षे । वै निघ ।

**पिच्छलच्छदा (दला)** । स्त्री । उपोदिकायां । पूंई गाछ । बदरीवृक्षे । त्रिका ।

**पिच्छलत्वक्** । पु । नागरङ्गवृक्षे । स्त्री । नागरङ्गवल्कले । वै निघ । [वै निघ ।

**पिच्छलबीज'** । पु । वनपनस । आनारस ।

**पिच्छला** । स्त्री । शाल्मलीवृक्षे । रा नि व ८ । शाल्मलीवृक्षे । आकाशवल्ल्याम् । हे निघ । उपोदिकायां । त्रिका ।

**पिच्छवाण** । पु । श्येनपक्षे । श्येन पाखी । रा नि व १९ ।

**पिच्छा** । स्त्री । मोचरसे । प सु । मेघ स्त्री रोचि मधुकादितृष्ट । चा च २४ अ पुष्पानुगचूर्णे । शिंशपावृक्षे । श च । मण्डे । भक्तमण्ड । कोषे । पूगवृक्षे । कदली च । मे । सर्पविषे । लालायाम् । शाल्मलीवृक्षे । पोलि । हे निघ । अश्वपादरोगे । श द । फलकवृक्षे । आकाशलतायाम् । हे निघ ।

**पिच्छावस्ति'** । स्त्री । पिच्छिलवस्ती । चा चि ८ अ ।

**पिच्छावृक्ष'** । पु । शाल्मलीवृक्षे ।

**पिच्छितिका** । स्त्री । शिंशपावृक्षे । शिशु गाछ । श च ।

**पिच्छिल'** । पु । पिण्डालुके । प सु । बहुवारवृक्षे । भा । क्ली । समण्डधनि । वै निघ । सरसव्यञ्जनादौ । भ । स्निग्धसूपादौ । भानुदत्त । समण्डभक्ते । सजलव्यञ्जने । नीलकण्ठ । चि । भक्तमण्डपूर्णे । अम रा ।

**पिच्छिलक** । पुं । धन्वनवृक्षे । धामना गाछ । रा नि व ९ । शाल्मलीवृक्षे । हे निघ ।

**पिच्छिलगुणकर्म्म** । क्ली । पिच्छिलद्रव्यस्य गुणकर्म्माणि । तच्च बल्यं सन्धानं श्लेष्मलं गुरु । सु ।

**पिच्छिलच्छदा** । स्त्री । उपोदक्याम् । पूंईशाक । प सु ।

**पिच्छिलत्वक्** । पु । धन्वनवृक्षे । धामना गाछ । प सु । र मा । नागरङ्गवृक्षे । त्रिका ।

**पिच्छिलदला** । स्त्री । बदर्याम् । कुल गाछ । उपोदिकायाम् ।

**पिच्छिलवस्ति** । स्त्री । निरूहवस्तिभेदे । "बदरैरावती शेलु शाल्मलीधन्वनाङ्कुराः । क्षीर सिद्धा क्षौद्रयुक्ता नाम्ना पिच्छिलसंज्ञिता । अजोर मेषवधिरैर्युक्ता देया विचक्षणैः । मात्रा पिच्छिल वस्तीनां पलैर्द्वादशभिर्मता ॥" भा ।

**पिच्छिलफलम्** । क्ली । डिण्डिशफले । ढेंड़श । तद्गुणा—बलपुष्टिकारित्व प्रमेहास्र पित्तविषदोषनाशित्वञ्च ।

**पिच्छिलसार** । पु । मोचरसे । रा नि व ८ ।

**पिच्छिला** । स्त्री । वृश्चिकाल्याम् । बिछाती । रा नि व ५ । पीतशिंशपावृक्षे । शिशु गाछ । र मा । कच्च्वां । कचु । श च । अतस्याम् । मशिना । रा नि व १६ । शाल्मलीवृक्षे । उपोदिकायाम् । मे । शल्लक्यां । रा नि व ४ । तृणभेदे । विछि दाना इति केचित् । कोकिलाक्षे । कुलेखाडा । रा नि व ४ ।

**पिञ्जोडकम्** । क्ली । नेत्रपिचटे ।

पिञ्ज'। पु। कर्पूरे। भीमसेनी कर्पूर। रा नि व १२। क्ली। बलि। मे।

पिञ्जकम्। क्ली। हरिताले। र मार्च।

पिञ्जट.। पु। पिचटरोगे। पिचुटी। श र।

पिञ्जनम्। क्ली। तूलधनुषि। तूलो धोना। धनुकिका।

पिञ्जरम्। क्ली। नागकेशरपुष्पे। रा नि व ६। अस्थिपञ्जरे। अटी। श्यामाके। हरिताले। अम। स्वर्णे। मे। त्रि। पीतवर्णे।

पिञ्जरकम्। क्ली। भरतस्थाम्। मशिना। प सु। हरिताले। रा नि व १३।

पिञ्जलम्। क्ली। हरिताले। प सु। कुशपत्रे। धरणी। पु। जलवेतसे। वै निघ।

पिञ्जा। स्त्री। हरिद्रायाम्। तूलके। मे।

पिञ्जानम्। क्ली। सुवर्णे। रा नि व १३।

पिञ्जिका। स्त्री। तूलनालिकायाम्। पाँईज। विका।

पिञ्जूलम्। क्ली। तूलवर्त्तिकायाम्। वै निघ।

पिञ्जूष। पु। कर्णगूथे। हे च।

पिञ्जेटः। पु। नेत्रमले। पिचुटी। श र।

पिट (क)। पु। विस्फोटके। मे।

पिट(टि)का। स्त्री। पिडकायाम्। रा नि व २०। मसूरिकायाम्। वैद्यकम्।

पिटङ्काकी। स्त्री। कटुकन्दावने। वै निघ।

पिटङ्काश.। पु। मत्स्यभेदे, पर्वतीयमत्स्ये। श कल्प।

पिटङ्कोटि (की)। स्त्री। इन्द्रवारुणीलतायाम्। प सु। [ र।

पिट्टकम् (का)। क्ली, स्त्री। दन्तकिट्टके। श

पिठ.। पु। पीडायाम्। देवनले। वै निघ।

पिठरम्। क्ली। नागरमुस्तके। मन्थनदण्डे। मे। पु। स्थाल्याम्। अम। प सु १५४।

पिडकः (का)। पुं, स्त्री। व्रणविशेषे। फुस्कुड़ि। लक्षण—"उत्पद्यतेऽल्पकण्डूशोफा चिरपाक्यु पशाम्यति। पायुन्तदेशे पिड़का सा ज्ञेयान्या भगन्दरात्॥ भगन्दरा तु विज्ञेया पिड़कातो विपर्य्ययात्। पायो स्याद्द्व्यङ्गुले देशे गूढमूला सवेदना॥' सु नि ४अ। प्रमेहजन्यविस्फोटकरोगे, प्रमेहपीड़कायाम्। शरावकादी। सा दशधा। See प्रमेहपिड़का। कुष्ठपिडकायाम्, यवप्रख्यादौ। ता पीडका। मा नि। तासां लक्षणानि पर्य्याये द्रष्टव्यानि।

पिडकालिका।' स्त्री। नेत्रमले। च र पि नि।

पिडिकापत्रः। पु। पृक्काशाके। पिडिंशाक।

पिण्डः। पु। गोपके। निर्माल्ये। प सु। गर्भे। करिगण्डमुले। अम। शरीरैकदेशे। त्रिया। देहे। जपाद्रचे। सिह्लके। बले। मे। मदनवृक्षे। रा नि व ११। क्ली। लौहे। प सु। गौलनामगन्धद्रव्ये। गन्धबोल। रा नि व ६। शरीरे। रा नि व ८।

पिण्डकः। पु। पिण्डमूलके। पिण्डालौ। रा नि व ७। गुणा—"पिण्डको वातहृ श्लेष्मी ग्राही रुच्यो महागुरुः।" अत्रि १६अ। शिलारसे। अम। क्ली। गन्धबोले। तीक्ष्णलौहे। रा नि व ६।१३। नवनीते। अम्र।

पिण्डकन्दः। पु। पिण्डालौ। रा नि व ७।

पिण्डका। स्त्री। मसूरिकायाम्। वै निघ।

पिण्डखर्ज्जूरः। पु। स्वनामख्यातवृक्षे। पिण्डिखेजुर गाछ। प सु।

पिण्डखर्ज्जूरिका (री)। स्त्री। दीपादिविदेशजातवृक्षमिष्टफलखर्ज्जूरीवृक्षे। पिण्डिखेजूर। तत्पर्य्याया,—राजजम्बू पिण्डी फलमुद्गरिका दीप्या सपिण्डा मधुरस्रवा फलपुष्पा स्वादुपिण्डा हयभक्ष्या। मे। सा द्विधा पिण्डी राजपिण्डी चेति। तयोर्गुणा—फल शैत्य स्निग्ध स्वादु गुरु दाहपित्तश्वासघ्न वीर्य्यवृद्धिकारक अग्निमान्द्यकर विषघ्नञ्च। रा नि व ११। See खर्ज्जूरी।

पिण्डगुडूचिका (ची)। स्त्री। कन्दगुडूच्याम्। रा नि व ३। [ टीर।

पिण्डगो(ड)स.। पु। मल्लपीठे। भा। श

पिण्डतगर'। पु। तगरपुष्पे। वै निघ।

पिण्डतैलम्। क्ली। वातरक्ताधिकारे तैलम्। "समधूच्छिष्टमञ्जिष्ठं ससर्ज्जरसशारिवम्। पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम्।" कटुतैल ৮ শ মম, মঞ্জিষ্ঠা, ধুনা, অনন্তমূল প্রত্যেক ২ ছটাক্। रस र।

**पिण्डतैलक.** । पु । सिह्लके । शिलारस । रा नि व १२ ।

**पिण्डपाद'(द.)** । पु । हस्तिनि । त्रिका ।

**पिण्डपुष्पम्** । क्ली । अशोकपुष्पे । जवापुष्पे । वै निघ । पद्मपुष्पे । मे । तगरपुष्पे । श र । पु । दाडिमवृक्षे । त्रिका । [ श मा ।

**पिण्डपुष्पक'** । पु । शाकविशेषे, वास्तूके ।

**पिण्डफला** । स्त्री । अलाब्वाम् । प सु । सु चि १८ । "वालेपर्येत्पिण्डफलाकमार्गौ ।" कटुतुम्ब्याम् । তিংলাউ । জটা ।

**पिण्डमुस्तक (का)** । पु, स्त्री । नागर मुस्तायाम् । रा नि व ६ ।

**पिण्डमूल(क)म्** । क्ली । पञ्चविधमूलकान्त-र्गतमूलके । गर्ज्जरमूलके । বাটুলা মূলা । तत्पर्य्याया,—गर्ज्जर गृञ्जन पिण्डक । गुणा'—कटूष्ण गुल्मवातघ्न । रा नि व ७ ।

**पिण्डयोनि** । स्त्री । योनिरोगभेदे । च द योनिरो धि ।

**पिण्डरोहिण(त)क** । पु । विकङ्कतवृक्षे । বঁইচি গাছ । रा नि व ८ ।

**पिण्डवीज' (क )** । पु । (Oleander oborum) करवीरवृक्षे । रा नि व ९ ।

**पिण्डशर्करा** । स्त्री । खण्डशर्करायाम् । ফুল-খড়ি । वै निघ ।

**पिण्डस्वेद** । पु । पिण्डेन स्वेदे । वा च २८ म ।

**पिण्डहरिद्रा** । स्त्री । ग्रन्थिहरिद्रायाम् । গিঁঠা হরিদ্রা । वै निघ ।

**पिण्डा** । स्त्री । कस्तूरीभेदे । मृगनाभि-विशेष । सा कुलत्थिकाभा किञ्चित् स्थूला । रा नि व १२ । हरिद्रायाम् । वंशपत्रीतृणे । भा । खर्ज्जूरीवृक्षे । পিণ্ডীখেজুর । पिण्डायसे । পিণ্ড-লোহ । रा नि व १३ ।

**पिण्डाञ्जनम्** । क्ली । अञ्जनविशेषे । वा उ १४ अ ।

**पिण्डात** । पु । सिह्लके । शिलारस । र मा । गन्धरसे । रस र पिप्पल्यादिलौहे ।

**पिण्डापा** । स्त्री । नाडीहिङ्गौ ।

**पिण्डाभा** । स्त्री । शर्कराभेदे । वै निघ ।

**पिण्डाभ्रम्** । क्ली । करकायाम् । श मा ।

**पिण्डामृता** । स्त्री । कन्दगुडूच्याम् । वै निघ ।

**पिण्डाम्लम्** । क्ली । चाङ्गेरीलिकुचाम्लवेतस जम्बीर कर्पूर नारङ्ग फलषाड्वसमभागमिश्रिते । "चाङ्गेरीलिकुचाम्लवेतसयुत जम्बीरकर्पूरक नारङ्ग फलषाडवस्त्विति तु पिण्डाम्लञ्च बीजाम्लकम् ।" रा नि व २२ । [ १२ ।

**पिण्डायसम्** । क्ली । तीक्ष्णलौहे । रा नि व

**पिण्डार:** । पु । विकङ्कतवृक्षे । বঁইচি গাছ । वै निघ २भ ज्व । वृक्षविशेषे । পিটুলি গাছ । मे । क्षपणमदनवृक्षे । क्ली । (Trewia mudiflora) फलशाकविशेषे । हि पिण्डारा । फल गुणा —"पिण्डार शीतल बल्य पित्तघ्न रुचिकार-क । पाके लघु विशेषेण विषशान्तिकर लघु ॥" भा पू १भ शा व ज्योतिष्मतीनस्य ।

**पिण्डाल (लु )** । पु । स्वनामख्यातकन्दशाक विशेषे । চুবড়ি আলু, গোল আলু হাতি-খোজা আলু । म पेडालु । क विलियहेण्डल । उत् घरा अलु । तत्पर्य्याया,—ग्रन्थिल पिण्डकन्द ग्रन्थि रोमश रोमकन्द रोमालू ताम्बूलपत्र लालाकन्द रोमालु । गुणा — मधुर शीत मूत्रकृच्छ्रघ्न दाहशोषमेहघ्न वृष्य गुरु सन्तर्पण । रा नि व ७ । "पिण्डालुक श्लेष्मकर गुरुविड्जिकरो मृदु ।" अत्रि १६ ष । कन्दगुडूच्यां । रा नि व ३ ।

**पिण्डालु(लू)कम्** । क्ली । रक्तालुके । গোল আলু । গোঁ আলু । हि सुथनी । गुणा —गुरु कफघ्न वातकोपनञ्च । राज । शाक सुषवशाक गुणम् । च सू २७ ष ।

**पिण्डासव** । पु । ग्रहण्यामासवविशेषे । तत्साधनविधि —"प्रास्थिकीं पिप्पलीं पिष्टा गुड मध्व विभीतकम् । उदकप्रस्थसंयुक्त यवपल्ले निधापयेत् । तस्मात्पल सुजाताग्नु सलिलाञ्जलि संयुत । पिवेत्पिण्डासवो ह्येष ।' च चि १९ ष । पिप्पलीकल्क २ श गुड २ श मधु २श वारि ४ श एकत्र कलसस्थ कृत्वा निःसप्तक मास वा यवपल्लमध्ये स्थाप्यम् ।

**पिण्डाह्वम्** । क्ली । तगरपादुके । र सा स ।

**पिण्डाह्वा** । क्ली । नाडीहिङ्गौ । रा नि व ६ ।

**पिण्डिः।** स्त्री। पिण्डिकायाम्। पायेर डिम। श टी र।

**पिण्डिकः।** पु। तुरुष्कोतिख्याते गन्धद्रव्य भेदे। शिलारस।

**पिण्डिका (ण्डी)।** स्त्री। श्वेतालिकायाम्। रा नि व ४। इन्द्रवस्त्री। "तन्मध्ये पिण्डिका तथा।" रा नि व १८। तालवृत्ते। वै निघ। अलाब्वाम्। पिण्डीतगरे। पिण्डीखर्ज्जूरे। मे। नेत्राभिष्यन्दरोगे नेत्रकर्म्मभेदे। तदुक्तं—"युक्त भेषजकल्कस्य पिण्डो धवलमाक्या। वस्त्रखण्डेन सम्बद्धा नेत्राभिष्यन्दनाशिनी। स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता। रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिवत्तौ युधैरयमिति॥" भा। पिण्डे। सा कौ श्वभमारणे।

**पिण्डिकोद्वेष्टनम्।** क्ली। जान्वधो जङ्घा मांसपिण्डस्य दण्डादिपीडनेनेव वेदनायां। पायेर डिमे वेदना। मा नि।

**पिण्डितः (कल्कः)।** पु। शिलारसे। प सु। See सिह्लक। रा नि व १२। क्ली। कांस्य धातौ। वै निघ।

**पिण्डितैलम्।** क्ली। शिलारसे। वै निघ।

**पिण्डिनी।** स्त्री। गिरिकर्णिकायाम्। अपराजिता। रा नि व ३।

**पिण्डिरिका।** स्त्री। मञ्जिष्ठायाम्। तण्डुली यके। वै निघ।

**पिण्डिला।** स्त्री। कर्कटीभेदे, गोडुम्बायाम्। गोरुक। श च।

**पिण्डी।** स्त्री। पिण्डीतगरे। अलाबौ। पिण्ड खर्जूरे।

**पिण्डीतकः।** पु। कृष्णमदने। काल यम्ना। सु चि १० २५श। मदनवृक्षे। रा नि व ८। सि यो छर्दि चि। भा म ४ग गर्भचि। फणिज्झक वृक्षे। विश्व। क्ली। पिण्डीतगरे। तगरपादुका। विश्व।

**पिण्डीतकफलम्।** क्ली। कृष्णमदनफले। पाण्डुवर्णमदनफले। सु चि २५श। मदनकफले। वै निघ।

**पिण्डीतगर (क)।** पु, क्ली। तगरपुष्प विशेष। तगरपादुका। कोङ्कणे पिण्डीतगरनाम्ना प्रसिद्ध। पिका। रा नि व १०। रस र विष चि। [९]

**पिण्डीतरुः।** पु। महापिण्डीतरुवृक्षे। रा नि व

**पिण्डीपुष्पः।** पु। अशोकवृक्षे। रा नि व १०।

**पिण्डीरः।** पु। दाडिमवृक्षे। मेका। समुद्र फेने। श टी रा। नकुल ११श।

**पिण्डोद्भवा।** स्त्री। सुरायाम्। वै निघ।

**पिण्डोलिः।** पु। उच्छिष्टे। वै निघ। त्रि। भुक्तसमुज्झिते। हे च।

**पिण्या (का)।** स्त्री। ज्योतिष्मतीलतायाम्। लता फट्की। बर उच्छे। प मु। वै निघ।

**पिण्याकः।** पु, क्ली। तिलकल्के। खलि। तकिटे। तिलकूटो। रा नि व १९। "तिलादीनां निष्पीड़ित कल्क उक्तस्तैलतिलादिपिण्ड।" हेमाद्रि। च सू २श तैलव्यापद्ययवाग्वाम्। गुणा—ग्लानिकरो रूक्ष विष्टम्भी दृष्टिविकारकृच्च। वा सू ६श। सिह्लके। शिलारस। रा नि व १२। हिङ्गौ। कुङ्कुमे। हैलवर्ण्याम्। लवणथोटी। पीलकन्दे। च द ग्रन्थि चि।

**पितामहः।** पु। मुञ्जतृणे। मुँज। पितु पितरि। वै निघ।

**पितृग्रहः।** पुं। बालरोगभेदे। भूतोन्माद ग्रहविशेष। तज्जुष्टलक्षण—"प्रेतानां स दिशति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्य वस्त्र। मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्ट॥" मा नि। "रोमहर्षो सुहुर्म नि।" वा उ ३श।

**पितृज।** त्रि। शरीरे पितुर्जातेषु केशश्मश्रु नखदन्तास्थिलोमशिरास्नायुधमनीषु। च शा ३श।

**पितृतर्पणम्।** क्ली। तिले। रा नि व १६।

**पितृप्रसू।** स्त्री। सायङ्काले। अम।

**पितृप्रियः।** पु। मार्कवे। भीमराज। रा नि व ४। स्त्री। अगस्त्यवृक्षे। भृङ्गराजे। कालशाके। रा नि व २३।

**पितृभोजन।** पु। माषे। माष कलाइ।

**पित्तम्।** क्ली। गोरोचनायां। च द उन्माद चि। "सपित्त स्थितमङ्गं।" (Fel) Gall or bile. पाचकाग्न्यपरनामक शरीरस्थतेजोधातौ। पित्त। पीत् झरा। तत्पर्याया,—मायु,

१५ष न्यग्रोधादि । बीजगुणा—गुरु सरं दाह ज्वरव्रणाघ्न । रा नि व ११ । मधुरं स्निग्धं रूच्य वातपित्तघ्न । राज । च सू २४ष । तैल विभीतकतैलगुणं । पियालमज्जा मधुरो वृष्य वातपित्तघ्न । सु सू ४६ष । मज्ज नियास उदरामयघ्न यीवामासवन्धिशीर्फे च हित । See मखद्र ।

पियालास्थिज: । पु । पियालफलमज्जायाम् । पियाल आँठीर शस्य । भेद मूलफि पुराखण्ड ।

पेरजम् । क्ली । पेरोजेतिख्याते उपरत्नभेदे । See पेरोजम् ।

पेलिपिच्छिका । स्त्री । शिशीर्मातृकाग्रह भेदे । या एकादशे दिने मासि वर्षे वा गृह्णाति । तेन बालस्य ज्वरगात्रभङ्गादिर्भवति । च द बाल रोग चि ।

पेलुका । पु । पीलुवृक्षे । श र ।

पेलुनी (पर्णी, पत्नी) । स्त्री । मूर्व्वायाम् । मोरटायाम् । र मा ।

पिल्ल । पु । क्लिन्ननेत्ररोगे । श्रम । वा उ १६ष ।

पिल्लका । स्त्री । करेणुकायाम् । श मा ।

पिशङ्ग । पु । पिङ्गलवर्णे ।

पिशाच (ग्रह) । पु । भूतग्रहविशेषे । पिशाच ग्रहलक्षण यथा—"उद्धस्त कृशपरुषोऽचिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोल । बह्वाशी विजन वनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाच जुष्ट ॥" मा नि ।

पिशाचघ्न । पु । श्वेतसर्षपे । प मु ।

पिशाचद्रु (वृक्ष) । पु । शाखोटवृक्षे । শেওড়া গাছ। त्रिका । र मा ।

पिशाचिका (ची) । स्त्री । सूक्ष्मजटा मांस्याम् । See आकाशमांसी ।

पिशितम् । क्ली । मांसे । रा नि व १८ । स्त्री । जटामांस्याम् । रा नि व १२ ।

पिशितरोहिणी । स्त्री । मांसरोहिण्याम् । वै निघ ।

पिशितोदकम् । क्ली । कुङ्कुमे । वै निघ ।

पिशिनी (ता), पिशी । स्त्री । जटामांस्याम् । रा नि व १२ ।

पिशीतक. । पु । गोधूमे । वै निघ ।

पिशु' (ना) । स्त्री । स्पृक्कायाम् । शकुग्रवा । रा नि व १२ । (ना) ग्रन्थिपर्णे । গেঁঠেলা । वै निघ ।

पिशुनम् । क्ली । कुङ्कुमे । रा नि व १२ । मे । पु । नगरे । काके । कार्पासे । वै निघ । त्रि । क्रूरे ।

पिशून' । पु । काके । स्त्री । (ना) स्पृक्कायाम् ।

पिष्ट(क)म् । क्ली । शीपके । सीसे । अक्षि भङ्गविशेषे । सु । पु । नन्दिवृक्षे । वै निघ । तिलकल्के । তিলকুটা । रा नि व १६ । पु, क्ली । शुक्लगताक्षिरोगभेदे । लक्षणम्—"उत्सन्न सलिल निभोऽथ पिष्टशुक्लो बिन्दूय स भवति पिष्टक सुवृत्त ।' सु उ ४थ । "श्लेष्ममारुतकोपेन शुक्ले मांस समुन्नतं । पिष्टवत् पिष्टक विद्धि मलाक्ता दर्शसन्निभम् ।" भा म ४भ । तण्डुलचूर्णादिकृत भक्ष्यद्रव्यविशेषे । পিটে । तत्पर्याया,—पूप अपूप आपूप पिष्ट । सा गुणा—"पिष्ट प्रायकर रुक्ष विदाहि गुरु दुर्जरम् ।" शालि तण्डुलपिष्टकगुणा—'शालिपिष्टमया भक्ष्या कफ पित्तविनाशना ।' वैदलकृतपिष्टगुणा—"वैदला गुरवो भक्ष्या विष्टम्भिष्टमारुता ।" गुडादिकृत पिष्टगुणा—"सगुडा सतिलाश्चैव सक्षीरक्षौद्र शर्करा । भक्ष्या वृष्याश्च बल्याश्च गुरवो वृष्या परा ॥" स्नेहसिद्धगोधूमकृतभक्ष्यगुणा—"सस्नेहा स्नेहसिद्धाश्च भक्ष्या गोधूमसम्भवा । गुरवस्तर्पणा वृष्या बलोपचयवर्द्धना ॥" राज २प ।

पिष्टका । स्त्री । पिष्टविदले । ডাইল বাটা ।

पिष्टपर्णी । स्त्री । पृश्निपर्ण्याम् । पिठाकरञ्ज इति ख्याते करञ्जभेदे ।

पिष्टपचनम् } क्ली । पिष्टकपचनपात्रे ।
पिष्टपाकभृत् } তেলানী । अम हे च ।

पिष्टपाचक । त्रि । पिष्टकपाककारिणि ।

पिष्टपायस । पु, क्ली । कृशरायाम् । खिचुड़ी । प मु ।

पिष्टपूर । पु । घृतभर्जितगोधूमकृतखाद्यद्रव्ये । পুরপিটে । वटके । বড়া । त्रिका ।

पिष्टमेह । पु । प्रमेहरोगविशेषे । अत्र नर सपुलक पिष्टरसतुल्य मेहति । लक्षण—"संहृष्ट रोमा पिष्टेन पिष्टवद्बहुल सितम् ।' मा नि ।

**पीतकायता ।** स्त्री । पित्तजरोगे ।

**पीतकावेरम् ।** क्ली । कुङ्कुमे । पित्तले । मे ।

**पीतकाष्ठम् ।** क्ली । पद्मकाष्ठे । पद्मकाष्ठ । पीतचन्दने । रा नि व १२ । पु । हरिद्रुवृक्षे । रा नि व ९ । [याम् । रा नि व ० ।

**पीतकीलका (ला) ।** स्त्री । आवर्त्तकीलता

**पीतकुरव (क) ।** पु । पीतझिण्टीक्षुपे । पीत झाँटी । रा नि व १० । See किङ्किरात ।

**पीतकुष्माण्डम् ।** क्ली । वैदेशिककुष्माण्डे । विलाति कुमड़ा । गुणा —"अपर पीतकुष्माण्ड गुरु पित्तकर परं । अग्निमान्द्यकरं स्वादु श्लेष्मघ्न वातशोषनम् ॥" आत्रेय ।

**पीतकुसुम. ।** पु । पीतझिण्टीक्षुपे । पीत झाँटी । रा नि व १० । See किङ्किरात ।

**पीतगन्धम् ।** क्ली । पीतचन्दने । रा नि व १२ ।

**पीतगन्धक ।** पु । गन्धके । वै निघ ।

**पीतघोषा ।** स्त्री । पीतपुष्पघोषालतायाम् । झिङ्ग । पीत घोषा । तत्पर्य्याया,—स्व ल फला कोषफला कर्कोटकी शतकी राजक महाजाली । प मु ।

**पीतचन्दनम् ।** क्ली । कलम्बक इति द्राविड देशप्रसिद्ध पीतवर्णचन्दनकाष्ठे । मलेन्द्रीति मद । तत्पर्य्याया,—पीतगन्ध कालेय पीतक माधवप्रिय कालेयक पीतकाष्ठ बर्बर कालीयक कालीय पीताभ हरिचन्दन हरिप्रिय कालसार कालानु सार्य्यक । गुणा —रक्तचन्दनतुल्यगुण व्यङ्ग नाशनम् । भा । वातघ्न । मद । शीतल तिक्त कुष्ठकण्डूविचर्चिकादद्रुश्रमिघ्न कान्तिकरश्च । रा नि व १२ । कुङ्कुमे । दारुहरिद्रायाम् । हरिद्रायाम् । वै निघ ।

**पीतचम्पक ।** पु । स्वर्णचम्पके । जटा ।

**पीतजाति ।** स्त्री । स्वर्णजातिवृक्षे । वै निघ ।

**पीतझिण्टी ।** स्त्री । पीतपुष्पझिण्टीक्षुपे । पीत झाँटी । हरिकाश्चनाम् । रा नि व ४ ।

**पीततण्डुल ।** पु । कङ्गुधान्ये । कानो धान । रा नि व १६ । मज्जतरौ । भाँगगाछ । वै निघ । क्ली । हरिकाश्चनाम् । रा नि व ० ।

**पीततण्डुलिका ।** स्त्री । सर्प्पाक्षे । सा प गाछ । वै निघ ।

**पीततुण्ड ।** पु । पक्षिविशेषे, कारण्डवपक्षिणि । तिका ।

**पीततैला ।** स्त्री । ज्योतिष्मतीलतायाम् । लताफट्की । रा नि व ३ । वा सू १५ अ अर्कादि । "मल्लकपुष्पी पीततैलोदकीर्य्या ।"

**पीतदन्तता ।** स्त्री । पित्तजन्यदन्तरोगे ।

**पीतदारु ।** पु क्ली । दारुहरिद्रायाम् । रा नि व ६ । सु चि १९ अ । सरलायाम् । सरल काष्ठे । र मा । हरिद्रायाम् । वै निघ । देव दारुणि । र मा । हरिद्रुवृक्षे । रा नि व ९ । किराततिक्ते । पूतिकरञ्जे । वै निघ । आम्नक पुष्पवृने ।

**पीतदुग्धा ।** स्त्री । स्वर्णक्षीर्य्याम् । शेयाल काँटा । हि चोक । क्षीरिण्याम् । क्षिदइ । रा नि व ५ । शाल्मल्याम् । वै निघ ।

**पीतद्रु ।** पु । देवदारुभेदे, सरले । प मु । दारुहरिद्रायाम् । रा नि व ६ ।

**पीतद्रुम ।** पु । हरिद्रावृक्षे । वा चि ६ अ । सरलदेवदारुणि । दारुहरिद्रायाम् । अम ।

**पीतन (क) ।** पु । आम्रातकवृक्षे । आमड़ा गाछ । प्लक्षवृक्षे । रा नि व ११।२३ । क्ली । कुङ्कुमे । हरिताले । पीतदारुणि । आम्रातकफले । वै निघ । [निघ ।

**पीतनखता ।** स्त्री । पित्तजन्यनखरोगे । वै

**पीतनाश ।** पु । इङ्गुदवृक्षे । आनारिस । वै निघ ।

**पीतनी ।** स्त्री । शालपर्ण्याम् । मद ।

**पीतनेत्रता ।** स्त्री । पित्तजनेत्ररोगे । भा ।

**पीतपराग ।** पु । पद्मकेसरे । वै निघ ।

**पीतपर्णी ।** स्त्री । वृश्चिकाल्याम् । बिछाटी । ग ध । [पिच्छ ।

**पीतपाकी (इन्) ।** पु । वाग्यालकभेदे । प

**पीतपाठी (इन् ।** पु । चित्रकण्ठ । वै निघ ।

**पीतपादप ।** पु । पृथुसिम्बश्योणाकवृक्षे । बड़ शोणा गाछ । रा नि व ९ । पीतलोध्रवृक्षे । वै निघ । शारी । रैष ।

**पीतपादा ।** स्त्री । शारिकायाम् । शालिक

**पूपः** । पु । पिष्टके । अम । क्षुद्रपनसे । आनारस । वै निघ ।

**पूपला** । स्त्री । पिष्टकविशेषे । बड़ा । हे च ।

**पूपलिका** । स्त्री । पिष्टकविशेषे । पुलीविशेष । सा गुरु पुष्टिकरी च । च चि २अ । च सू २७अ ।

**पूपालिका (ली) (पि[लि]का)** । स्त्री । पिष्टकविशेषे । विका । हे च । सु चि २६अ । रावणकृतकुमारतन्त्रे ।

**पूय(न)म्** । क्ली । पुंस्त्वदतिस्त्याने क्लेदे । पूँज । श च । पूयकारगण यथा—"तक्रान्तैर्नवधान्यादियोऽय वर्ग उदाहृत । दोषसञ्जननो ह्येषो विज्ञेय पूयवर्द्धन ॥" सु ।

**पूयरक्तः** । पु, क्ली । नासारोगविशेषे । तल्लक्षणं यथा—"दोषैर्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु । नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥" सु उ २२अ । 'निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् । तत् पूयरक्तमाख्यात शिरोदाहरुजाकरम् ॥" वा उ १९अ ।

**पूयशोणित'** । पुं । पूयरक्तरोगे ।

**पूय(या)स्राव** । पु । नेत्रसन्धिगतरोगविशेषे । चक्षे पूँज पड़ा । तल्लक्षण—"पाक सन्धौ संस्रवेद्यस्तु पूय पूयास्रावो नैकरूप प्रदिष्ट ।" सु उ २अ । अयस्तु नेत्ररोगविशेषे । अ द २०अ ।

**पूयारि** । पु । निम्बवृक्षे । श च ।

**पूयालस** । पु । नेत्रसन्धिगतरोगे । लक्षणं यथा—"पक्व शोफ सन्धिज संस्रवेद्य सान्द्र पूय पूति पूयालस स ।" सु उ २अ ।

**पूयासम्** । क्ली । पूये । वै निघ ।

**पूरः** । पु । मातुलुङ्गवृक्षे, बीजपूरवृक्षे । टोवा लेबुर गाछ । प मु । खाद्यद्रव्यभेदे । पूर । विका । क्ली । दारुगुरुणि । रा नि व १२ ।

**पूरकः (कारु.)** । पुं । मातुलुङ्गवृक्षे । "मातुलुङ्गे तु पूरक ।" रा नि व ११।२२ । वै निघ । क्ली । बीजपूरकफले । सियो मदा चि ।

**पूरणम्** । क्ली । वस्तिनेत्रप्रभृतिभिर्यन्त्रे यथादौ तैलादिपूरणकर्मणि । सु सू ७अ । सुगन्धवृणे । नागरमुस्तायाम् । श मा । पूरणार्थे पक्वतैले । वाधुमान्यप्रणमेदनाविषये । सु सू २२अ । पु । पुन र्नवायाम् । रस चि ८अ सिद्धिसारपोटे । विष्णुतैले । धरणि ।

**पूर(रि)णी** । स्त्री । शाल्मलीवृक्षे । अम ।

**पूराम्लम्** । क्ली । वृक्षाम्ले । तेँतुल । रा नि व ६ ।

**पूरि(लि)का** । स्त्री । पूरभरितापूपे । बड़ा, कचुरी प्रभृति । तत्साधन यथा—"माषाणां पिष्टिका युक्तात् लवणार्द्रकहिङ्गुभि । तया पिष्टिकया पूर्णा समिता कृतपोलिका । तप्ततैलेन पक्वा सा पूरिका कथिता बुधै ॥" गुणा—रुच्या स्वादी गुरु स्निग्धा बल्या पित्तासदूषिका । चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी । तथैव घृतपक्वापि चक्षुष्या रसवित्तहृत् ॥" भा पू ४अ ।

**पूरितम्** । क्ली । भर्त्ते । वै निघ ।

**पूरुष** । पु । मनुष्ये, पुरुषे । वै निघ ।

**पूर्णक** । पु । ताम्रचूडे । Cोबरा । मे ।

**पूर्णकोषा** । स्त्री । यवपिष्टमयभक्ष्यद्रव्ये । पूरपूलि । सु चि १०अ ।

**पूर्णकोष्टा (ष्ठा)** । स्त्री । नागरमुस्तायाम् । रा नि व ६ ।

**पूर्णगर्भा** । स्त्री । पूरणपोलिकायाम् । पूर पिठे । वै निघ ।

**पूर्णचन्द्र(गाभ्र)रसः** । पु । यक्ष्मणां रस । पाठ—"सूतङ्गन्धञ्चाभ्रकञ्च गुडूचीं यष्टीतोयैर्मर्द्दयेदेकयामम् । चूर्णं शङ्ख मौक्तिकं लौहकिट्टं भस्मीभूतं सूततुल्यञ्च दद्यात् । भूकुष्माण्डैर्वासकं सद्भिमद्याज्ञीकृत्वा भूधरे तं पुटेत्तु । चूर्णं कृत्वा नागवल्लीरसेन दद्यादेवं मर्द्दयित्वैकमाषम् । सध्या व्याध्यां पूर्णचन्द्र रसेन्द्रम् ॥" रस चि । अन्य पूर्णचन्द्ररसायने—कज्जलि लौह अभ्र प्र द तो रौप्यभस्म २ तो वङ्ग ४ तो स्वर्ण ताम्र कांस्य प्र १ तो जातीफल लवङ्ग त्वक एला जीरक कर्पूर प्रियङ्गु मुस्तक प्र २ तो । कुमारीविकल्प्य रक्तरसैर्भावयित्वा एरण्डपत्रवेष्ट्य धान्यराशौ २ दिनं स्थाप्यम् । वटी चणाभा । भैष ।

**पूर्णपर्णी** । स्त्री । पृश्निपर्ण्याम् ।

**पूर्णबीज** । पु । मातुलुङ्गवृक्षे । रा नि व ११ ।

**पूर्णिका** । स्त्री । नासाच्छिन्नीपक्षिणि । विका ।

**पूर्थ्य' (र्व्व)** । पु । गुरुवृक्षे । वै निघ ।

**पूर्व्वकर्म्म**। क्ली। रोगोत्पत्ते प्राक् तत्तद्व्याधि प्रति यदादौ क्रियते कर्म्म तस्मिन्। त्रिविधकर्म्मा द्यकर्म्मेयि। तानि च पूर्व्वपश्चात् प्रधानरूपाणि भेदे। तत्र शल्यतन्त्रे शस्त्रकर्म्म, काये लङ्घनादि विरेकान्तं कर्म्म, शस्त्रीयस्य पाचन स्नेहन स्वेद मर्दनेति। सु सू ५ अ।

**पूर्व्वमारुत**। पुं। पूर्व्वदिग्भववायौ।

**पूर्व्वरूपम्**। क्ली। भाव्यामयसूचके न तु दोष विशेषसूचके चिह्ने। तच्च द्विविध सामान्यविशेष भेदेन। "पूर्व्वरूपन्तु तदयेन विज्ञाद्भाविनमामयम्। सामान्य तत दोष णां विशेषैरनधिष्ठित। विशिष्ट मौषहान्त स्यात् विशेषैर समन्वितम्। पूर्व्वरूप विशिष्ट स्यात् व्यक्त तद्रूपवर्ज्जम्।" भा। "प्राग्रूप यन लक्ष्यते। उत्पित्सुरामयो दोषविशेषे णानधिष्ठित। लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद् यथायथम्॥" मा नि।

**पूर्व्ववायु**। पु। पूर्व्वदिग्भवमारुत। पूबे हाওয়া। गुणा —"पूर्व्वं सुमधुर स्निग्धो लवण यैव मारुत। गुरुर्विदाहजननो रक्तपित्ताभि वर्द्धन। क्षतानां विषजुष्टानां व्रणिन श्लेष्मलाश्च ये। तेषामेव विशेषेण सदा रोगविवर्द्धन। वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम्। तेषामेव विशेषेण व्रणक्लेदविवर्द्धन॥" सु सू २० अ।

**पूर्व्वसन्ध्या**। स्त्री। प्रातःकाले।

**पूर्व्वाग्र (ग्र)**। पु। लाजायाम्। थई। श चि।

**पूर्व्वाह्ण**। पु, क्ली। अह्न पूर्व्वभागे, अयञ्च भाग वसन्तलक्षणसूचक। सु सू ६ अ।

**पूर्व्वद्यु (स्)**। पु। अव्य। पूर्व्वदिने।

**पूलक**। पु। वटिप्रोथे। পৌদের পেলো।

**पूष**। पु। पौषे मासि। ब्रह्मदारुवृक्षे। তুঁত গাছ। अम।

**पूषक**। पु। पारिशवृक्षे। তুঁত, পলাশ পিপুল। रा नि व ८।

**पूषा**। स्त्री। पाठायाम्। रा नि व ६।

**पृक्का**। स्त्री। पिड़िङ्गनामकशाके। পিড়ি শাক। प सु। हि पुरी। उत् फिरिङ्गिशाक। तत्पर्य्याया,—सहस्रमला पिशुना देवी लता लघु समुद्रान्ता वधू कोटिवर्षा लङ्कापिका लङ्कायिका लङ्कारिका रक्तामलक् ब्राह्मणी कुटिला देव पुत्रिका मनु मालात्रिका मालानो लघ्वी पञ्च गुप्तिरक्ता चन्द्रकान्ता मरुत् माला स्पृक्का कोटी वर्षा लङ्कोपिका वर्षालङ्कायिका तस्कर चोरक चण्ड देवपुत्री। गुणा —'पृक्का स्वादी हिमा वृष्या तिक्ता त्रिदोषनुत्। कुष्ठकण्डूविषस्वेद दाहाश्मज्वररक्तहृत्।" भा पू १ भ। सु सू ३८ अ एलादि। पृक्कापुष्पे। चक्रपाणि सहाराज प्रसारणोतैले, अष्टादशशतिकप्रसारणीतैले। लता कस्तूर्य्याम्। वै निघ।

**पृथक्छद**। पु। अक्षोटवृक्षे। वै निघ।

**पृथक्त्वचा**। स्त्री। मूर्व्वायाम्। र मा।

**पृथक्पत्र**। पु। रक्तरवृक्षे। वै निघ।

**पृथक्पर्णिका (र्णी)**। स्त्री। पृश्निपर्णीक्षुपे। रा नि व ४। वै निघ २भ जीर्णज्व चि। मूर्व्वायाम्। मूर्गी। रा नि व ३।

**पृथगालु**। पु। पिण्डालौ। চুবড়ি আলু। হাতি খোজা আলু। प सु।

**पृथग्बीजः**। पु। भल्लातकवृक्षे। रा नि व ११।

**पृथाज**। पु। अर्जुनवृक्षे। रा नि व ९।

**पृथिका**। स्त्री। शतपद्याम्। श ग।

**पृथिवि (वी)**। स्त्री। कृष्णजीरके।

**पृथिवीकन्द**। पु। भूकन्दे। वै निघ।

**पृथिवीगुणा**। पुं। अस्थिचर्म्मनखमांसरोमसु। रस र ज्व चि।

**पृथिवीपति**। पु। ऋषभकौषधे। म।

**पृथिवीभवम्**। क्ली। खनिकाक्षारे। সোরা। वै निघ।

**पृथु**। स्त्री। हिङ्गुपत्राम्। रा नि व ६। कृष्ण जीरके। प सु भा। स्थूलकृष्णजीरके। মোটা কৃষ্ণ জীরে। गुणा —कटुतिक्तोष्णा वातगुल्मघ्नी आध्मानहरी दीपनी च। पुनर्नवायाम्। मेदायाम्। शारिवायाम्। रा नि व २३। तद्गुणे। रा नि व २। अहिफेने। श र।

**पृथुक**। पु, क्ली। चिपिटके। চিড়ে। हि चुडा। प सु। "हरितधान्यानि निस्तुषभृष्टमुसल हतानि पृथुकाश्चिपिटसञ्ज्ञा।" अरुण। "आर्द्रवी ऽप्यर्द्धपक्वास्तु तताम् पृथुका स्मृता।" रा नि व १६। गुणा —बल्या कफविष्टम्भकराश्च। वात

६ञ । स्वादव स्निग्धा हृद्या कामवर्द्धनाय । रा नि व १६ । सद्गुधस्य तस्य गुणा—"सचीरा ह हृद्या श्लया बल्या भिन्नमलाय ते ।" भा । एक वर्षीये शिशौ । अर्द्धवर्षीये शिशौ । ७ मासेर शिशु । रा नि व १८ ।

**पृथुकन्दकम्** । क्ली । तृणविशेषे । गुण्ठतृण । वै निघ । विश्व ।

**पृथुका** । स्त्री । बालिकायाम् । हिङ्गुपत्र्याम् । श च । भृष्टतण्डुलायाम् । चिड़े । वै निघ ।

**पृथुकालुकी** । स्त्री । रक्तालुभेदे । लाल आलू । भा पू १भ ।

**पृथुकृष्णः** । पु । जीरके । वै निघ ।

**पृथुकोल.** । पु । राजबदरे । रा नि व ११ ।

**पृथुगन्धा** । स्त्री । गन्धभृत्याम् । वै निघ ।

**पृथुच्छदः** । पु । शरपत्रकुशे । रा नि व ८ । अचोटवृक्षे । वै निघ ।

**पृथुपत्रः (क.)** । पु । रक्तरसोने । रा नि व ७ ।

**पृथुपलाशिका** । स्त्री । शट्याम् । रा नि व ६ ।

**पृथुरोमा (न्)** । पु । मत्स्यभेदे । अर्क चि ।

**पृथुलः** । पु । दर्भे । गुन्द्रातृणे । वै निघ ।

**पृथुला** । स्त्री । गुण्डासिनीतृणे । रा नि व ८ । हिङ्गुपत्र्याम् । जटा ।

**पृथुवीजः (कः)** । पुं । मसूरे । मूलविकलाय । प सु । रा नि व १६ । विकङ्कतवृते । वै निघ ।

**पृथुशिम्ब' (म्ब) (म्बी)** । क्ली । श्योनाक भेदे । रा नि व ९ । पीतलोध्रे । अश्विशिम्ब्याम् । वै निघ । [ भ ।

**पृथुशिरा** । स्त्री । कृष्णजलौकायाम् । सु सू १३ ।

**पृथुशृङ्गक.** । पु । मेषविशेषे । दुम्बा । वै निघ ।

**पृथुस्कन्धः** । पु । वनशूकरे । रा नि व १९ ।

**पृथूदरः** । पु । मेषे । धारा ।

**पृथ्वि(थ्वी)का** । स्त्री । जीरके । मद व २ । हिङ्गुपत्र्याम् । सु चि २४ । स्थूलैलायाम् । रा नि व २३ । कृष्णजीरकभेदे । शुक्लपुनर्नवायाम् । रा नि व ६ । कृष्णजीरके । च सू ५ष । च द र वि चि । भकवृक्षे । एलायाम् । च म । चादित्य भक्तायाम् । हुड़हुड़िया । वै निघ । [ व १० ।

**पृथ्वीकुरवक.** । पु । श्वेतमन्दारके । रा नि

**पृथ्वीजम्** । क्ली । गड़लवणे । रा नि व ६ ।

**पृदाकुः** । पु । हस्तिनि । वृश्चि । व्याघ्रे । सर्पे । श्रम । वृश्चिके । व्याघ्रे । मे । श्मशौ । चित्रके ।

**पृश्निः (श्नी)** । स्त्री । पृश्निपर्ण्याम् । चाकुलिया । श र । सु चि १७श । वारिपर्ण्याम् । पाना ।

**पृश्निका** । स्त्री । जलवृक्षविशेषे । श मा । पृश्निपर्ण्याम् ।

**पृश्निपर्णिका (र्णी)** । स्त्री । (Hemionites cordifolia Uraria lagopoides Syn Doodia lagopodioides) स्वनाम ख्याततिक्ताशाकवृषे । चाकुलिया । हि पीठवन, पीतवन, पठौनी । म रोगरा । क नविपलवीने । ते कोलाकुपोना । उत् कष्टपणि । तत्पर्य्याया,—पृथक्पर्णी चित्रपर्णी अङ्घ्रिवल्लिका क्रोष्टुविन्ना सिंहपुच्छी सिंहलाङ्गली कलशि धावनि गुहा तन्वी पुच्छिका क्रोष्टुकपिटपर्णी लाङ्गली क्रोष्टुपुच्छी क्रोष्टुपुच्छिका पुच्छिका क्रोष्टुकमेखला पूर्णपर्णी कलशी दीर्घा शृगालवृन्ता त्रिपर्णी सिंहपुच्छिका दीर्घपत्रा अतिगुहा घृष्टिला चित्रपर्णिका कोकलसि कलसी कदला काङ्गन्तु चक्रकुल्या चक्रपर्णी शीर्षमाला महागुहा शृगालविन्ना धमनी मेखला लाङ्गलिका ब्रह्मपर्णी दीर्घपर्णी सिंहपर्णी पृष्टिपर्णी अङ्घ्रिपर्णी धावनी । सु चि ८श । गुणा—"त्रिदोषघ्नी दृष्योष्णा मधुरा सरा । हन्ति दाहज्वरश्वासरक्तातिसार तृड्वमी । भा पू १भ गु व । कटु उष्णा कासार्त्ती सारघ्नी वातरोगज्वरदाहव्रणोन्मादघ्नी च । रा नि व ४ । च द ज्व चि । एतद्धननमैकाहिकज्वरे हितम् । च द ज्व चि । सु सू ३८श ।

**पृषत्** । पु । हरिणे ।

**पृषत.** । पु । श्वेतविन्दुहरिणविशेषे । तत्पर्य्यायौ,—रङ्कु सारङ्गपृषक । "पृषतश्चन्द्रविन्दु स्याद् रिष्यात् किञ्चिदल्पक ॥" एतन्मांसगुणा—"स्वादु शीतल धारक लघु दीपन रुच्य श्वासज्वरत्रिदोषघ्नम् ।" भा । रोहितमत्स्ये । मण्डलिसर्पविशेषे । सु कल्प ४श । स्त्री । हरिणीभेदे । मे ।

**पृषदाज्यम्** । क्ली । दधिमिश्रितघृते ।

**पृषन्ति.** । पुं । जलविन्दौ । [ द चि ।

**पृष्टिपर्णी** । स्त्री । पृश्निपर्ण्याम् । चि क क म

**पृष्ठम्** । क्ली । तनुपश्चाद्भागे । रा नि व ८ । [१० ।

पृष्ठग्रन्थिः। पुं। गड्डुरोगे। कूँज। रा नि व

पृष्ठग्रह'। पु। अश्वस्य वातव्याधौ। लक्षण यथा—"सम्य पृष्ठोन्नतश्चैव स्तब्धौ विषमस्य यस्य च। तस्य पृष्ठग्रह रोगमूर्द्धयेवस्य निर्दिशेत्।" ज द ५१९४।

पृष्ठचक्षुः। पुं। कर्कटे। वै निघ।

पृष्ठदृष्टि'। पु। भल्लूके। रा नि व १९।

पृष्ठमर्म्म। क्ली। पृष्ठवर्त्तिचतुर्दशमर्म्मसु। तद्यथा—कटीकतरुणे, कुकुन्दरे, नितम्बौ, पार्श्वसन्धौ, वृहती, अंसफलके, अंसौ। सु शा ६ अ।

पृष्ठरुचम्। क्ली। मरिचे। वै निघ।

पृष्ठवंश। पुं। मेरुदण्डे, पृष्ठास्थनि। পীঠের শিরদাঁড়া। हे च। सर्वस्य शिरो मारुमात्रेण भवति। हृखबोध।

पृष्ठशृङ्ग। पु। आरण्यछागे। हे च।

पृष्ठश्रृङ्गी (इन्)। पु। महिषे। श र। नपुंसके। मे। मेषे। वै निघ।

पृष्ठचिति। पु। नन्दिवृक्षे। वै निघ।

पृष्ठास्थि। क्ली। कशेरौ। মেরুদণ্ড। रा नि व १८। तानि च ३५। च शा ७अ।

पृष्ठ्यः। पु। अश्वे। अम। क्ली। पृष्ठास्थि समूहे। वै निघ।

पृष्णि। स्त्री। पार्ष्णिभागे। उणा।

पेच (क)। पु। उलूकपक्षिणि। পেঁচা। श र। अम। तत्पर्य्याया,—उलूक ऊलुक वायसाराति शक्रारव्य दिवान्ध वक्रनासिक हरिनेत्र दिवाभीत नक्ताशी घोचू घधर काकभीरु नक्तचारी निशाचर कौशिक कृपनाशन रक्तनासिक भीरुक घालु धाधा राति। See प्रवाह।

पेचकी (इन्)। पु। करिणि। श र।

पेचनो }
पेचिका } स्त्री। केमुकवृक्षे। কেউ গাছ।

पेचिल। पु। गिरिदे। হাতী। विका।

पेचु (क)। पु। मुचुकुन्दवृक्षे। মুচুকুন্দ গাছ। केमुकवृवे। কেঁউ গাছ। र मा। 'माड़ीचशाके। पेचुके। কচু। विका।

पेचुका। स्त्री। पेचुके। কচুর শাক। केमुके। কেঁউ। र मा।

पेचुनी (ली)। स्त्री। पेचुकशाके। কচুর শাক। विका। केमुके। কেঁউ। र मा।

पेटकः (टिका, टी)। पु, स्त्री। (Abutilon Indicum) कुबेराख्याम्। পেটারি। र मा। हि कुङ्गनी। पारस दरखते देरा। आर मम्नुलघोर। ता टञ्ची। भैष ज्याल चि। च द। "पेटी पाठामूलात्।" पाटलावृक्षे। केमुके।

पेडम्। क्ली। घृते। अमृते। उणा।

पेडा(डिका)। स्त्री। पेटिकायाम्। পেটারী। वमाट् के। वै निघ। पाटलावृक्षे।

पेलम्। क्ली। अमृते। घृते।

पेयम्। क्ली। अष्टविधान्नान्यतमान्ने। रा नि व २०। जले। मे। दुग्धे। श च।

पेया। स्त्री। अल्पसिक्थपेयद्रव्ये। सा च षड्दश गुणैर्जले सिध्यति। मण्डविशेष। "तोये षड्दश गुण सिद्धा पेयाल्पसिक्थका।" प सु। सिक्थ समन्विता पेया। 'पेया सिक्थसमन्विता।" प प्र २ख। तण्डुलापेचया एकादशगुणे वारिणि सिद्धा। च द ज्व चि। "मिद्ध्या प्राक्कृता पेया तक्रदाडिमतण्डुलै।" इति च लक्षणम्। हेमाद्रि। गुणा—मलानुलोमनी पथ्या दीपनी पाचनी क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरघ्नी च। वा सू १५च। 'द्रवाधिका घना सिक्था चतुर्दश गुणे जले। सिद्धा पेया बुधैर्ज्ञेया।" "पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा।" प प्र २ख। आद्रके। আদা। प सु। शतपुष्पायाम्। श च। मल्लमण्डे। मे। कषाये। वै निघ।

पेयु(यू)ष। पु, क्ली। नवप्रसूताया गो सप्त दिनाभ्यन्तरीयदुग्धे। গাঁজলা দুধ। "आसप्तरात्र प्रसवात् चीरं पेयुषमुच्यते।' र मा। प्रत्यग्रघृते। वै निघ।

पेर(रो)जम्। क्ली। स्वनामख्यातोपरत्नविशेषे। पेरोजा इति पारस्ये। तच्च श्यामाद्वहरितभेदेन द्विविधम्। गुणा—अतिकषाय मधुरम् अति दीपन शूलादिहरं तस्य योगेन स्थावरजङ्गमभय विषविष हन्यात्। रा नि व १३।

पेलम्। क्ली। अण्डकोषे। হোল। हे च। मुष्काणि। वै निघ।

पेलो (इन्)। पुं। घोटके। वै निघ।

**पेलुवास** । पु । कालसरटे । वै निघ ।

**पेश** । पु, क्ली । स्वर्णधातौ ।

**पेशस्कृत्** । पु । कीटविशेषे । कुमुरे पोका । वै निघ । पेशस्कृत् इति शब्दकल्पद्रुम ।

**पेशि:** । स्त्री । डिम्बे । अम । आटकादि छिदने । वै निघ । आमादिशम्लाटी । आमचुर आदि । खण्डीकृताद्र्र्कशम्लाटी । "हरितार्द्रकस्य शम्लकृताला दीर्घाकारा अवयवा पेशय उच्यन्ते ।" वा चि ७ अ ।

**पेशी (शी)** । स्त्री । जटामांस्याम् । रा नि व १२ । मांसपिण्ड्याम् । मां सपेशी । साकल्येन पञ्च पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु । कोष्ठे षट्षष्टि, ग्रीवां प्रत्यूर्द्ध चतुस्त्रिंश चेति । तत्र पादाङ्गुलिषु १५ । पदे १० । पादोपरिकूर्च्चसन्निविष्टा १० । गुल्फयोः १० । गुल्फजान्वन्तरे २० । जानुनि ५ । ऊरौ २० । वङ्क्षणे १० । शतम् एवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । पायौ ३ । मेढ्रे १ । सेवन्यां १ । वृषणयोः २ । स्फिचोः १० । वस्तिशिरसि २ । उदरे ५ । नाभ्यां १ । पृष्ठोर्द्ध सन्निविष्टा ५×५ । पार्श्वयोः ६ । वक्षसि १० । अक्षकांसौ प्रति समन्तात् ७ । हृदयामाशययोः २ । यकृत्प्लीहोण्डुकेषु ६ । ग्रीवायां ४ । हन्वोः ८ । काकलकगलयोः २ । तालुनि २ । जिह्वायां १ । ओष्ठयोः २ । घोणायां २ । नेत्रयोः २ । कर्णयोः २ । गण्डयोः ४ । ललाटे ४ । शिरसि १ । इत्येवमेतानि पञ्च पेशीशतानि । "शिरा स्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणाम् । पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥" स्त्रीणाञ्च विंशतिरधिका । दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च, यौवने तासां परिवृद्धि । अपत्यपथे चतस्रः तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च प्रवृत्ते द्वे । गर्भच्छिद्रसंश्रितास्तिस्र । शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव । सु शा ५ अ । "यथार्थं सुषमा युक्तो वायुः स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशीर्विभजते तथा । स्त्रीणामपि भवन्त्येताः किञ्चिच्छ्रितिविस्तराः । गर्भाशये गर्भमार्गे योनौ च स्तनयोरपि ॥" भा । पक्षिडिम्बे । पाखीर डिम । अम ।

**पेशीकोष** । पुं । अण्डे । डिम । अटी ।

**पेश्यगण्डम्** । क्ली । मांसगोलके । वै निघ ।

**पेषण:** । पुं क्ली । निशारचोद्धे । ढेँकाटा गिङ । खले । क्ली । पीड़ने । चूर्णने । अम ।

**पेषणि: (णी)** । स्त्री । पेषणशिलायाम् ।

**पेषिणी (णी)** । स्त्री । जटामांस्याम् ।

**पेहिता** । क्ली । प्रसारण्याम् । गन्धभादुलिया । वै निघ ।

**पैङ्गि** । पुं । ऋषिविशेषे । च ।

**पैज(ञ्जु)प** । पुं । ऋषौ । ह च ।

**पैठरम्** । क्ली । स्थालीपक्वमांसादौ । अम ।

**पैत्त: (त्तिक)** । पु । तिलवृक्षे । तिल गाछ । पशु । पित्तप्रकृते रोगे । रा नि व २० ।

**पैत्तिकी** । स्त्री । योनिव्यापद्विशेषे । लक्षणं यथा— "यथास्वैर्दूषणैर्दुष्टं पित्तं योनिमुपाश्रितम् । करोति दाहपाकोषाः पूतिगन्धज्वरान्विताम् । भृशोष्णभूरिकुणपनीलपीतासितार्त्तवाम् । सा व्यापत् पैत्तिकी ॥" मा उ २२ अ ।

**पैष्टी** । स्त्री । विविधधान्यविकारजाते मद्यमद्ये । धेनो मद । एषा मादकत्वे हीनतमा । "पैष्टी पुनर्विविधधान्यविकारजाता ख्याता मदाधिकतया च च पूर्व्वपूर्व्वा ।" प्रस्तुतविधिर्यथा— "शक्तुक्षौद्रसिद्धामशुष्कोदकसमन्वितम् । पक्वं सन्तापयेत् किञ्चित् स्थापयित्वा दिनद्वयं ॥ अपेऽथनि तु संधारे शैवल तत्र निक्षिपेत् । शृङ्गबेरं मरिचञ्च मातुलुङ्गं तथैव च ॥ एतेषामेव सन्धानात् पैष्टीमद्यं प्रकीर्त्तितम् ॥" गुणा—कटूष्णा तीक्ष्णा मधुरा अग्निदीपनी च । रा नि व १४ । "पैष्टी सन्दीपनी रुच्या कफकृद्वातनाशिनी । पित्तला पाण्डुरोगाणां कारिणी बहुधा मता ॥" अत्रि १८ अ ।

**पैष्टिकम्** । क्ली । पैष्टीमद्ये । विर ।

**पोगण्ड:** । पु । अपोगण्डे । दशवर्षीय बालक । ह ला ।

**पोटगल:** । पुं । नले । नल । रा नि व ८ । खागड़े । थागडा । र.मा । वदरचे । मत्स्यभेदे । मी । वैकरञ्जजातीयसर्पविशेषे । अथ राजिलेन गोनसीं वैपरीत्येन वा जात । सु कल्प ४ अ । काशतृणे । चिका ।

**पोटा** । स्त्री । स्त्रीपुंसलक्षणायां नार्य्याम् । दासा । चुल्लिकायाम् । भा ।

**पोटाह्निका।** स्त्री। गुञ्जायाम्। वै निघ।

**पोटिकः।** पुं। विस्फोटके। क्वचित्।

**पोड'।** पुं। कपालास्थितले। रा नि व १८।

**पोत. (क')।** पु। शिशौ। नैमाषिकशिशौ। रा नि व १८। दशवार्षिककरिणि। ३ च।

**पोतकी।** स्त्री। उपोदिकायाम्। पूँई, पूँइ। भा मि ४भ गर्भ चि। श्यामाकपक्षिणि। रा नि व १९।

**पोताण्डः।** पु। अश्वस्य मुष्करोगभेदे। लक्षण —"भूमौ पक्षौ तुरङ्गस्य मुष्कौ यस्य भवेदनौ। मिकसम्भेन युक्तस्य तस्य पोताण्डमादिशेत्॥" भ द ५ भ।

**पोताधानम्।** पु। शिशुमीनपुञ्जे। माछेर पोनार झाँक्। गुणा—"पोताधानन्तु सर्व्वेषां सुस्निग्धं लघु रोचनम्।" राज ३प।

**पोतास।** पुं। कर्पूरविशेषे। भीमसेनी कर्पूर। रा नि व १२।

**पोतिका।** स्त्री। मतालाचणे। रा नि व ४। मालवारदेशीयोपोदिकाविशेषे। मूलपोतिकायाम्। रा नि व ७।

**पोत्रम्।** क्ली। वज्रे। शूकरमुखाग्रभागे। थोप्ना। मे।

**पोत्रायुध'।** पु। शूकरे। रा नि व १९।

**पोत्रिदंष्ट्राजम्।** क्ली। शूकरदन्तजरवे। वै निघ।

**पोत्री (इन्)।** पु। शूकरे। अम।

**पोथकी।** क्ली। बालानां नेत्रवर्त्मशरोगविशेषे। लक्षणं—'कण्डूस्रावान्विता गुर्व्वी रक्तसर्षपसन्निभा। पिड़काश्च रुजावत्य पोथक्य इति सञ्ज्ञिता॥" सु उ ३भ।

**पोदिका।** स्त्री। कलम्बीशाके। प सु।

**पोल (क)।** स्त्री। कटिप्रोथे। पाछार पेलो। च टी भ।

**पोलिका (ली)।** स्त्री। पिष्टकभेदे। पा-ला-रुटी। त्रिका। यथा—"कुर्य्यात् समितयावीव तन्वीं पर्पटिका ततः। स्वेदयेत्तप्तके तान्तु पोलिका सा जगुर्बुधा।" गुणा—मण्डकवत्। भा।

**पोयः।** पुं। पोषणे।

**पोषयित्नु'।** पुं। कोकिले। उणा।

**पोष्टा (ष्ट्र)।** पु। पूतिकरञ्जे। श च। (त्रि)। पोषकै।

**पौगण्डम्।** क्ली। पोगण्डावस्थायाम्। तच्च पञ्चाब्दात् दशमाब्दपर्य्यन्तम्। "कौमार पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशं यौवनञ्च ततः परम्॥" रा नि व १८।

**पौण्डरीयः (क)।** पु, क्ली। प्रपौण्डरीकवृक्षे। पुण्डरिया गाछ। रा नि व १२।

**पौण्ड्र्यम्।** क्ली। प्रपौण्डरीके। पुण्डरिया।

**पौण्ड्र (ण्ड्र) क.।** पुं। पुण्ड्रके। पुँडि आख। र मा। श मा। लावणचिथि। वै निघ।

**पौतवम्।** क्ली। परिमाणे। च टी भ।

**पौतिनासिक्यम्।** क्ली। नासिकारोगे। पीनसे। पीनस रोग। निद्रा।

**पौ (त्ति) त्तिकम्।** क्ली। पुत्तिकानाममक्षिका निरायोजिते घृतवर्णमधुनि। पौत्तिक मधु। जटा। "अग्रजा मक्षिका पिङ्गा पुत्तिका इति कीर्त्तिता। तज्जात मधु यन्मद्वि पौत्तिक समुदाहृतम्॥" गुणा—रूक्षम् उष्ण रक्तपित्त दाहघ्न घृतवर्णञ्च। रा नि व १४।

**पौत्तिकशर्करा।** स्त्री। पौत्तिकमधुजातशर्करायाम्। गुणा—तन्मधुतुल्या। रा नि व १४।

**पौनर्णव।** पुं। सन्निपातज्वरभेदे। लक्षण —'उत्क्षिप्य च स्वमङ्ग क्षिपत्यधस्तात् नितान्त मुच्छ्वसिति। त पौनर्णवमुष्ट विचिन्त्यकष्ट विजानीयात्॥" भ मु ज्वरम्। [ १५ ]

**पौपिक।** त्रि। अपूपनिर्म्माणदक्षे। मु कल्प

**पौरम्।** क्ली। सुगन्धतृणे। रामकर्पूर। अम। पुं। पौले। नखीनामगन्धद्रव्ये। वै निघ।

**पौरस।** पुं। नखीनामगन्धद्रव्ये। वै निघ।

**पौरुषम्।** क्ली। शुक्रधातौ। रा नि व १८। मैहने। सु नि १भ। ऊर्द्ध विस्तृतदोःपाणिपुरुष परिमाणे। त्रिका। इह जगति क्रते कर्म्मणि। "सत् पौरुष यदिह कर्म्म दृष्टम्।" च सा ३भ। रोहितवृक्षे।

**पौरुष।** पुं। नरे। पुन्नागवृक्षे। त्रिका।

**पौरोगव।** पुं। पाकशालाध्यक्षे। अम।

**पौलिः** । स्त्री । पौलिकायाम् । पाकावस्थागत यवादौ । श्रम ।

**पौषः** । पु । वर्षस्य नवमे मासे । श्रम ।

**पौष्करम्** । क्ली । पुष्करमूले । पुष्करमूल । कुष्ठभेदे । कुडविशेष । रा नि व ६ । मद व १ । सि यो यक्ष्म चि वयोदशाङ्गगुग्गुलौ । "पौष्कराति विषे ।" सि यो कफज्व चि निम्बादि । "शटीभूनिम्ब पौष्करम् ।" पद्ममूले । इक्षुक्षीरकादमोदके । एरण्डमूले । वै निघ श्वास चि दशमूलयवाग्वाम् । स्थलपद्मे । वै निघ ।

**पौष्करमूलम्** / **पौष्कराह्वयम्** } क्ली । पुष्करमूले । मद व १ ।

**पौष्टिकम्** । क्ली । पुष्टिकरौषधे । पुष्टिकरद्रव्य गणे । यथा—'चतुर्जा तु तुगाक्षीरी चन्द्रसूरी ऽष्टवर्गक । द्वीपान्तरवचा बिल्व त्वक् पत्र नाग केशरम् । तालीशपत्र त्वक्क्षीरी त्वचा गोक्षुर रोहिणी । कपिकच्छूशालीयमल्लीभूफल पौष्टिको गण ।" अत्र चि । क्षीरकाशि गात्राच्छादनवस्त्र भेदे । कापडे । गुणा —आयुष्यत्व घनचिक्कणत्व शुचित्व रूपविराजनत्वञ्च । राज ।

**पौष्यम्** । क्ली । । पुष्परेणौ । वै निघ ।

**पौष्य(ष्पि)कम्** । क्ली । पुष्पाञ्जने । रा नि व १३ । वै निघ ।

**प्रकरम्** । क्ली । अगुरुकाष्ठे । मे ।

**प्रकशो** । स्त्री । शूकरोगे । निदानम् ।

**प्रकाण्ड** । पु । तरौ स्कन्धप्रभृत्यन्तभागे । गुँड़ि । रा नि व २ ।

**प्रकाण्ड(त)र'** । पु । हचौ । श च ।

**प्रकाश(क)म्** । क्ली । कांस्ये । काँसा । द्र च ।

**प्रकाश(क)ज्ञाता** । पु । कुक्कुटे । श च ।

**प्रकीर्णः** । पु,क्ली । पूतिकरञ्जे । नाटा करञ्जा । रा नि व ९ । चामरे । विका । [ मे ।

**प्रकीर्णकम्** । क्ली । चामरे । श्रम । पु । अश्वे ।

**प्रकीर्य (क.)** । पु, स्त्री । पूतिकरञ्जे । नाटा करञ्जा । र मा । वा सू १५अ । "श्वेत वाह्प्रकीर्या ।" रीठाकरञ्जे । रिठा । रा नि व ९।१३ । कण्टकीकरञ्जे । "कण्टकीविटपकरञ्जे ।" ह.सू २९अ कफशमने । ड । च सू ४अ कृमिघ्ने ।

**प्रकुञ्चः** । पु । पले । ८ तोला । च क १२अ ।

**प्रकुलम्** । क्ली । सुन्दरदेहे । विका ।

**प्रकृतिः** । स्त्री । शक्तौ । शिश्ने । योनौ विका । आहारौषधद्रव्याणां स्वाभाविके गुर्वादि गुणयोगे । च वि १अ । आकाशादिपञ्चतन्मात्र बुद्धि मूलप्रकृतिरहङ्कारश्चेत्यष्टमहाभूतसमुदायस्य कारणे । च शा १अ । अष्टरूपमखिलस्य जगत सम्भवहेतुरव्यक्त नाम । महत्तत्त्वादय सप्त महत् नहङ्कार पञ्चतन्मात्राश्चेति । प्रकृतिर्महानहङ्कार पञ्च तन्मात्राणीति अष्ट प्रकृतय । प्रकृतिपुरु साधर्म्यम्—अनादित्वम् अनन्तत्वम् अलिङ्गत नित्यत्व सर्व्वगतत्वञ्च । वैधर्म्यं यथा—सा च अचेतन त्रिगुणा बीजधर्म्मिणी प्रसवधर्म्मिणी अमध्यस्थ धर्म्मिणी चेति । पुरुषस्तु तद्विपरीतधर्म्मेति तथा गुणा —सत्त्वरजस्तमांसीति । भा पू १भ स्वभावे । वातादिभेदेन प्रकृतय सप्त । "शुक्र शोणितसंयोगे यो दोषमुत्कटो भवेत् । प्रकृतिर्जाय तेन ॥" सु शा ४अ । "शुक्रासृग्गर्भिणी भोज्यचेष्टागर्भाशयान्तरे । य स्याद्दोषोऽधिकस्तेन प्रकृति सम्प्रदिता ॥" तेषु—जागरूकोऽल्पकेश वातप्रकृति । अकालपलितादि पित्तप्रकृति श्यामकेशादि श्लेष्मप्रकृति । एव द्विन्द्वादिदर्शने द्विप्रकृति । भा ।

**प्रकृतिभोजनम्** । क्ली । स्वाभाविकाहारे च सू १५अ ।

**प्रकृतिवर्णः** । त्रि । गात्रसवर्णे । च सू १८अ

**प्रकृतिविघातः** । पु । प्रकृतेर्विकृतिजनको पयोगे । स च कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगरूप । यच्चान्यदपि किञ्चित् श्लेष्म पुरीषप्रत्यनीकभूत तस्मादिति । च वि ७अ ।

**प्रकोथ** । त्रि । पूतिभावापन्ने । पचा । "प्रकोथोदकावगाहनात् ।" सु चि २३अ ।

**प्रकोप (नम्)** । पु, क्ली । क्षोभे । चाञ्चल्ये । वै निघ । वातादीनां सङ्क्षोभहेतौ । ते च बहुधा तत्र वातस्य प्रकोपन बलवद्विग्रहादि । पित्तस्य क्रोधशोकभयादि । कफस्य दिवास्वप्नादि । पित्त प्रकोपनमेव पित्तस्येति । ऋतुभेदे वातादिप्रकोपो यथा—"वर्षासु वायु कुप्यतेऽन्त शरत्सु क्षीणो वायु कुप्यते पित्तरोगे । लोहितं पित्त ग्रीष्मे श्लेष्मकुक्षे हेमन्ते वा चीयमानस्तथापि । कोप याति श्लेष्मरोगो वसन्ते तथाप्यहानि श्लेष्मरोगस्य

चीणे । पित्त याति कोपितां ग्रीष्मकाले दृष्टा शान्तिं पैत्तिकी वार्षिके च ॥” अथ वायुप्रकोप —“तथा वातमूत्रदुरीषस्य रोधात् कषायातिशीता निशाजागरेषु । व्यवायेऽथ वाह्यश्रमाद्यातिभुक्त्याध्वनि प्रायशो भाषणेनातिभीत्या । सुरुचैरतिक्षारतिक्तैः कटुभिस्तथा दोलाप्रकोष्टकैर्यानमार्गे । रथे वा खरे कुञ्जरे मन्दिरे वा भवेन्मारुतस्य प्रकोपो नरस्य । सुशीते दिने दुर्द्दिने स्नानपीते पराह्णे निशाजागरे वासरे च । वर्षासु वै केवल याति कोप मरुत्संचितो याति वै भुक्तजीर्णे । मसूरा कलायाश्च निष्पावकाश्च महामाषशुभ्रा यवायामला स्यु । सदा चामला लघुकाद्या प्रदिष्टा हिमा कङ्गुनीवाररक्ताश्च शाल्या । तथा कोरदूषश्च श्यामाक एते कृतं चौदनश्च यवागूस्तत वा । कलिङ्गानि वास्तूक चिल्लीकपूत्य पलाण्डुस्तथा रञ्जन कन्दशाकम् । इमान् सेवितात्ययमेति प्रकोप समीरस्य चोक्त तुरासम्भवस्तु । अतो यवतो रक्षणीय मनुष्ये शुभ वैद्यसे त्व सदा रोगशान्तिम् ॥” अथ पित्तप्रकोप —“अत्युष्णकटम्लरूक्षैर्विदाहै द्रव्यै समिन्धुसुरा सेवनेम । घर्म्मेण क्रोधेन वा स्वेदनेन व्यवायेन वा याति कोपञ्च पित्तम् । कुलत्थाढकीयूषमूलाकशिग्रु पटोलस्य पाराजिकाशाकमेव । निशाजागरेष्वापि क्षुद्धि श्रमे वा घनान्ते शरत्सु प्रकोप प्रदिष्ट । मध्याह्ने वा चोष्णकाले शरत्सु भृश वासरे मध्यमे वा निशीथे । जीर्णे रसे भुक्तमात्रे प्रकोप प्रदिष्ट कोविदै स्यात्पित्तकोप ॥” अथ कफप्रकोप — निशाजागरे वासरे वातिनिद्रासुशीतोदकसेवने शीतले वा । पय पानपीयूषेक्षुभिस्तिलैस्तु तथा भोजने कन्दशाकैस्तथापि । अतिस्निग्धससेवने भोजने च प्रदिष्ट कफस्य प्रकोपो वसन्ते । दिनान्ते प्रभाते निशान्ते नरस्य प्रकोप प्रदिष्टोऽपभुक्ते च जीर्णे । प्रदिष्टो बुधै कोविदैरेव रोग प्रकोपोत्पत्तिजन्यो हि कष्टप्रयुक्त । सुशीतेऽथवा शीतकाले निशान्ते नरस्य प्रकोप प्रदिष्टोऽपि भुक्ते । न जीर्णे प्रदिष्ट सुधी रोगवेग निदान कफस्येति चोक्त सुधीभि ॥” अथ द्वन्द्वजप्रकोप —“यदा विपर्य्यासगते ऋतौ च प्रकोपन यस्य तथा प्रदिष्ट । तत्सेवमानस्य नरस्य रोग स्याद्द्वन्द्वजो नाम विकारकारी । यस्मिन् ऋतौ वातविकार उक्तस्तस्मिन् यदि श्लेष्मविकोपनानि । ससेवते वा पवनस्तदास्य भवेत् प्रकोप कफपित्तयोश्च । यस्मिन् मरुत्कुप्यति सेवते य पित्तस्य कोपप्रकराणि तानि । विपर्ययो वा ऋतुधान्ययोश्च स पित्तवातप्रभवस्तदा स्यात् ॥” अथ सन्निपातोत्पत्ति —“विपर्य्यासागते काले रसे विपरिसेविते । तदा स्यात् सन्निपातो हि रोगोपद्रवकारक ॥” इति । भावप्र ।

**प्रकोष्ठ** । पु । कूर्परपाणिमध्यभागे । रा नि व १८ । कनुइयेर नीचे हस्ततल पर्य्यन्त ।

**प्रक्रिया** । स्त्री । औषधादिक्रियायाम् । चिकित्सायाम् ।

**प्रक्लिन्न** । त्रि । अतिक्लेदयुक्ते ।

**प्रक्लिन्नवर्त्मा** । पु । नेत्ररोगविशेषे, क्लिन्नवर्त्म-रोगे । भा ।

**प्रक्लेद** । पु । आर्द्रतायाम् । भा ४भ ना रो दि । “प्रक्लेदमायाति च धूप्यते च ।”

**प्रक्वथित** । त्रि । शृते । प्रमथ्यारूपेण शृते । वा चि ९म ।

**प्रखर** । पु । अश्वादि । त्रिका । कुक्कुरे । अश्वतरे । मे ।

**प्रगण्ड** । पुं । कूर्परांसमध्यभागे । कनुइ हइते बगल पर्य्यन्त । रा नि व १८ ।

**प्रगतजानु (क)** । त्रि । दूरगतजानौ ।

**प्रगन्ध** । पु । पर्पटके । रा नि व ५ ।

**प्रग्रह** । पु । कर्णिकारवृक्षे । मे । सु कल्प ८म । तुलासूत्रे । अम । हस्ते । सुवर्णे । वै निघ । कर्णिकारवृक्षे । रा नि व ९ ।

**प्रग्राह** । पु । तुलासूत्रे । मे ।

**प्रघण** । पु । ताम्रपात्रे । लौहमुद्गरे । मे ।

**प्रघन** । पु । मुद्गजातिभेदे । वै निघ ।

**प्रचण्ड** । पु । शुक्लकरवीरे । मे । त्रि । अत्युष्णे ।

**प्रचण्डमूर्त्ति** । पुं । वरुणवृक्षे । श च ।

**प्रचण्डा** । स्त्री । श्वेतदूर्व्वायाम् । रा नि व ८ ।

**प्रचय** । पु । उच्चये । भा ।

**प्रचल** । पु । मयूरे । वै निघ । (क) । सौम्यकीटविशेषे । सु कल्प ८म ।

**प्रचला** । स्त्री । सरटे । गिरगिटी । वै निघ ।

**प्रचलाक** । पुं । सर्पे । मयूरपुच्छे । मे । सु चि १८श ।

**प्रचलाकी (इन्)** । पुं । सर्पे । मयूरे । त्रिका ।

**प्रचलाङ्ग** । पुं । मयूरशिखायाम् । व निघ ।

**प्रचलित'** । पु । सद्योव्रणविशेषे । वै निघ ।

**प्रचार** । पं । अम्लस्य अंगिकाविशेषे । लक्षण —"प्रच्छादयति यद्वृष्टिं मांस पद्मलवर्द्धितम् । प्रचारकाख्यं तं विद्यान्नेत्ररोग कफान्वितम् ।" भ द ३०ष ।

**प्रचेतसी** । स्त्री । कट्फलवृक्षे । रा नि व ९ ।

**प्रचेलम्** । क्ली । पीतचन्दने । श च । पीतमुद्गे । वै निघ ।

**प्रचेलकः** । पु । अश्वे । श मा ।

**प्रचेलुकः** । पु । मानभेदे । पानि । तिका ।

**प्रचोद(दि)नी** । स्त्री । कण्टकार्य्याम् । अम । दुरालभायाम् । वै निघ ।

**प्रच्छर्दनम्** । क्ली । वमने । भेष ।

**प्रच्छर्दिका** । स्त्री । वान्तौ । हे च ।

**प्रच्छादनम्** । क्ली । नेत्रच्छदे । भ द २ष । उत्तरीयवस्त्रे । हे च ।

**प्रच्छानम्** । क्ली । छेदने, रक्तस्रावे । सु कल्प १ष । सु चि क्षुद्ररो चि "प्रच्छानैर्वा जलौकाभि ।"

**प्रजननम्** । क्ली । गर्भधारणे । योनौ । मे ।

**प्रजल्पः** । पुं । अतिभाषणे । वै निघ ।

**प्रजा** । स्त्री । सन्ततौ । जने । अम ।

**प्रजाता** । स्त्री । प्रसूतायाम् । अम ।

**प्रजादा** । स्त्री । पुत्रदातीलतायाम् । रा नि व ४ ।

**प्रजादानम्** । क्ली । रौप्ये । श च ।

**प्रजाहितम्** । क्ली । जले । श मा । [ १६ ।

**प्रज्ञविप्रियः** । पु । पष्टिकधान्ये । रा नि व

**प्रज्ञापराध** । पुं । अहितसेवनातिव्यवायादौ । तदुक्तं—"धीधृतिस्मृतिविभ्रष्ट कर्म्म यत् कुरुते ऽशुभम् । प्रज्ञापराधं तं विद्यात् सर्व्वदोषप्रकोपनम् । कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम् । ज्ञातानां स्वयमर्थानामहितानां निषेवणम् ।" च ।

**प्रणा(ना)ल(ली)सः** । पु । नीलझाकि । वालुकि । प सु ।

**प्रणालिका (ली)** । स्त्री । जलनिर्गममार्गे । ड्रारा । मध्यनलिकायाम् । नश्च दिवार नलि । च द नस्याधिकारे ।

**प्रतति (ती)** । स्त्री । लतायाम् ।

**प्रतना (नी)** । स्त्री । गोजिह्वायाम् । গোজিয়া শাক । रा नि व ४ । वाग्भट्टके । वै निघ ।

**प्रतमकः** । पु । श्वासरोगभेदे । तमकश्वास । लक्षणं—"ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकन्तु तम् । उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः । तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति । मज्जतस्तमसीवास्य विद्यात् प्रतमकं तु तम् ॥" मा नि ।

**प्रतरः (सन्धिः)** । पुं । ग्रीवोरंगतसन्धौ । स च ग्रीवापृष्ठदण्डयोः सन्धि । भा । सु शा ५ष ।

**प्रतलः** । पुं । संहतविस्तृताङ्गुलिकरे । হাতের তেলো । रा नि व १८ ।

**प्रतानवान्** । पु । सोमलताभेदे । सु चि २९ ष । See सोम ।

**प्रतानिका (निनी)** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া । शारिवायाम् । अनन्तमूल । रा नि व ५।१२ ।

**प्रतापः (वान्)** । पु । अर्कवृक्षे । शुक्लार्के । रा नि व १० ।

**प्रतापतपन. (रस.)** । पु । सन्निपातज्वराधिकारे रस । "गन्धकं हिङ्गुलं सूतं तालकं लोहटङ्कणे । खर्परं साचिकाक्षारं मञ्जिष्ठां हिज्जलं समं । रसेन मर्द्दितं सम्यग् निर्गुण्डीदन्तिशुण्ठयोः । अष्टयाममथो चैषां निरुध्य सिकतावये । ततः सिद्धं समादाय रक्तिकामार्द्रकेण च । सेवेत ॥" रस को । [ अम ।

**प्रतापसः** । पुं । श्वेतार्के । শ্বেত আকন্দ ।

**प्रतिकर्म्म** । क्ली । प्रतिक्रियायाम् । उपाये । सु कल्प ५ष । प्रसाधने । अम ।

**प्रतिका** । स्त्री । जवापुष्पवृक्षे ।

**प्रतिकीर्ण.** । त्रि । मलादिव्याप्ते । च द ।

**प्रतिखुरः** । पु । मूढगर्भभेदे । "नि स्सृतहस्तपादशिरा कायसङ्गी प्रतिखुर ।" सु शा ८ष ।

**प्रतिगन्धा** । स्त्री । सोमराज्याम् । रा नि व ४ ।

**प्रतिघ.** । पु । मूर्च्छायाम् । श र ।

**प्रतिघ्नम्** । क्ली । अङ्गे । श च ।

**प्रतिच्छाया** । स्त्री । जलादर्शातपादिषु प्रतिफलितशरीरच्छायायाम् । প্রতিবিম্বিত শরীরের ছায়া । "प्रतिप्रमाणस्थाना जलादर्शातपादिषु ।

छाया या सा प्रतिच्छाया या च वर्णप्रभाश्रया ॥” च द ७ च ।

**प्रतिजिह्वा (ह्विका)** । स्त्री । मूलजिह्वायाम् । आलजिह्वा । रा नि व १८ । त्रिका ।

**प्रतिज्ञा** । स्त्री । साध्यवचने । “प्रतिज्ञा नाम साध्यवचनं, यथा नित्य पुरुष इति ।” च वि ८ च ।

**प्रतिज्ञाहानि** । पु । पूर्व्वप्रतिगृहीताया प्रतिज्ञाया पर्य्यनुयोगेन परित्यागे । च वि ८ च ।

**प्रतितन्त्रसिद्धान्त** । पु । सिद्धान्तविशेषे । See सिद्धान्त ।

**प्रतितूणी** । स्त्री । वातव्याधिविशेषे । लक्षण —“गुदोपस्थोत्थिता सैव प्रतिलोमं विधाविता । वेगैः पक्वाशयं याति प्रतूणी चेह सोच्यते ॥” मा नि । “तूण्याञ्च प्रतितूण्याञ्च प्रशस्ता स्नेह वस्तय । पिबेद्वा स्नेहलवण पिप्पल्यादिमथाम्बुना । उष्णेन रामठचारमगाढमथवा घृतम् ॥” सु नि १ च ।

**प्रतिनिका** । स्त्री । प्रसारण्याम् । श्वारिकायाम् ।

**प्रतिपत्रफला** । स्त्री । चुद्रकारवेल्लिकायाम् । रा नि व ७ ।

**प्रतिपर्ण्ण(व)शिफा** । स्त्री । द्रवन्त्याम् । दन्तीभेद । रा नि व ५ ।

**प्रतिपिष्ट** । त्रि । अस्थिद्वयपिष्टे, उत्पिष्टे । हाडे हाडे थेंतो हओया । मा म ३ भ ।

**प्रतिबन्धक** । पुं । वृचे । गाछ ।

**प्रतिबला** । स्त्री । अतिबलायाम् । चि क क प्र द चि ।

**प्रतिमर्ष** । पु । शिरोबस्तिविशेषे । स चा वाल प्रयोज्य । ‘जन्मप्रभृति बालस्य प्रतिमर्षो विधीयते ।” रत्नमालासयह । ईषदुत्सिङ्घनात् स्नेहो यावद्वक्त्र प्रपद्यते । नस्ये निषिक्तं विद्यात् प्रतिमर्षं प्रमाणत । प्रतिमर्षश्च नस्यार्थं करोति न च दोषभाक् ॥” प प्र ४ ख । तत्र चत्वार षट् अष्टौ वा बिन्दव यथाबल शिरोविरेक स्नेहस्य मात्रा । सु चि ४० च वा छ २ च । स चतुर्द्दशसु कालेषूपादेय । तद्यथा—“तल्पोत्थितेन प्रचालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवाया ध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्दितवता दिवास्वप्नोत्थितेन सायञ्चेति । तल्पोत्थितादौ यथाक्रम गुणा —तल्पोत्थितेनासेवित प्रतिमर्ष रात्रावुपचितनासास्रोतोगत मलमुपहन्ति मन प्रसादञ्च करोति । प्रचालितदन्तेनासेवित दन्तानां दृढता वदनसौगन्ध्यञ्चापादयति । गृहान्निर्गच्छता सेवित नासास्रोतस क्लिन्नतया रजोधूमौ वा नाबाधते । व्यायाममैथुनाध्वपरिश्रान्तेन सेवित श्रममुपहन्ति । मूत्रोच्चारान्ते वा सेवित दृष्टिगुरुत्वमपनयति । कवलाञ्जनान्ते दृष्टि प्रसादयति । अभुक्तवता सेवित स्रोतसां विशुद्धि लघुताञ्चापादयति । वान्तेनासेवित स्रोतोविलग्न श्लेष्माणमपोह्य भक्तकाङ्क्षामापादयति । दिवास्वप्नोत्थितेनासेवित निद्राशेष गुरुत्व मलञ्चापोह्य चित्तैकाग्र्य जनयति । सायञ्चासेवित सुखनिद्रा प्रबोधञ्चेति । सु चि ४० च ।

**प्रतिमा (नम्)** । स्त्री, क्ली । करिणो दन्तद्वयमध्यवर्त्तिशुण्डभागे । गजदन्तबन्धे । त्रिका ।

**प्रतिमूषिका** । स्त्री । छुछुन्दर्य्याम् । वै निघ ।

**प्रतियत्न** । पु । रचनायाम् । त्रिका ।

**प्रतिरम्भ** । पु । रुन्तापे । निदा ।

**प्रतिलोम** । पु । विलोमे ।

**प्रति(ती)वाप** । पु । क्वाथे चूर्णादिप्रक्षेपे । र चि ३ च । कल्के । सु चि २२ च । धातुभस्मीकरणे । गलितस्य धातो द्रव्यान्तरस्यावचूर्णने । ष टी का । पानीयौषधविशेषे । च द विद्र चि ।

**प्रतिबिम्बदर्शक** । पुं । दर्पणे । वै निघ ।

**प्रतिविषा** । स्त्री । अतिविषायाम् । आतइच । च द च सा चि । “हिङ्गुप्रतिविषाभया ।”

**प्रतिविष्णुक** । पु । मुचुकुन्दवृचे । रा नि व १० । चौरिणीभेदे । वै निघ ।

**प्रतिबीजम्** । क्ली । तारनागाभ्रहेमक्षतपारद निबन्धनद्रव्ये । “नागाभ्र वाङ्गतारे हेम्नि च द्वादशे गुणे । प्रतिबीजमिद श्रेष्ठ पारदस्य निबन्धन ॥” र चि ३ च ।

**प्रतिश्या (श्या) (य)** । स्त्री, पु । नासारोगविशेषे । तस्य निदानम्—“अवश्यायानिलरजोभाष्यातिस्वप्नजागरै । नीचात्युच्चोपधानेन पीतेनान्येन वारिणा । अत्यम्बुपानरमणच्छर्दिवाष्पग्रहादिभि । क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गता । जनयन्ति प्रतिश्याय वर्द्धमान चयप्रदम् । तत्र वातात् प्रतिश्याये मुखशोषो भृशक्षव । घ्राणोप

रोधनिरोधदत्तमङ्गशिरोव्यथा । कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ । स्वरसादश्चिरात् पाक शिशिराच्छकफस्रुति । पित्तात्तृष्णाज्वरघ्राण पिटिकासम्भवभ्रमा । नासाग्रपाको रूक्षोष्णताम्र पीतकफस्रुति । कफात्कासोऽरुचि श्वासो वमथु गात्रगौरवम् । माधुर्य्यं वदने कण्डू स्निग्धशुक्लघना स्रुति । सर्व्वजो लक्षणै सर्व्वैरकस्माद्वृद्धिमान्तिमान् । दुष्ट नासाशिरा प्राप्य प्रतिश्याय करोत्यसृक् । उरस सुप्तता ताम्रनेत्रत्व श्वासपूतिता । सर्व्व एव प्रतिश्याया दुष्टता यान्त्युपेक्षिता ।" वा उ १९ अ । रस र हाल चि । "प्रतिश्याशास कासके ।" भा म १म श्लेष्म ज्व चि । "प्रतिश्यायो ऽरुचि कास ।" पीनसरोगे । निद्रा ।

**प्रतिष्ठा** । स्त्री । जनीपादेयतयावस्थाने । च सू १९ अ ।

**प्रतिष्ठापना** । स्त्री । परप्रतिज्ञाया प्रति विपरीतार्थाया स्थापनायाम् । यथा—अनित्य पुरुष इति । च वि ८ अ ।

**प्रतिसमाधानम्** । क्ली । रोगमुक्तिकरणे । वै निघ । [ निघ ।

**प्रतिसर.** । पु । व्रणपट्टी । प्रभातकाले । वै

**प्रतिसार (णम्)** । पु, क्लो । लवणे कटु चूर्णैश्च व्रणघर्षणे । "लवणै कटुचूर्णैश्च घृष्यते यद्व्रण बुधै । प्रतिसारस्तत प्रोक्त ॥" अ द १२ अ । घर्षणे । सु चि २२ अ । दन्तजिह्वा मुखानां चूर्णकल्कावलेहैरङ्गुल्या शनै घर्षणे । 'वरस्य मुखदौर्गन्ध्य मुखशोषं तथा तृषाम् । अरुचि दन्तपीडाश्च निहन्ति प्रतिसारणम् ।" भा ।

**प्रतिसारी (इन्)** । त्रि । सारकद्रव्यमात्रे । वै निघ ।

**प्रतिसूर्य्य (क)** । पु । सरटे । विका । विश्व । तन्नामकगोधिरकजातौ । सु कल्प ८ अ ।

**प्रतिसोमा** । स्त्री । महिषवल्लीलतायाम् । रा नि व ३ । लघुसोमलतायाम् । वै निघ ।

**प्रति(ती)हास.** । पु । करवीरवृक्षे । द्रव्यौ गोष्ठ । रा नि व १० । श्वेत । शुक्लकरवीरे । वै निघ ।

**प्रतिस्तुत्** । स्त्री । हिक्कायाम् । हेचि । वै निघ ।

**प्रतीक.** । पु । शरीरावयवे । रा नि व १८ । प्रतीके । भा पु १म भाग । विलोमे । मे ।

**प्रतीकार:** । पु । चिकित्सायाम् । श मा ।

**प्रतीनाह:** । पु । कर्णरोगे । लक्षणम्—"वातेन शोषित श्लेष्मा स्रोतो लिम्पेत्ततो भवेत् । रुग्गौरव पिधानञ्च स प्रतीनाहसञ्ज्ञक ॥" वा उ १७ अ । नासारोगभेदे । "उच्छ्वासमार्गन्तु कफ सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ।" मा नि ।

**प्रतुण्डक:** । पु । जीवकशाके । वै निघ ।

**प्रतुद:** । पु । श्येनश्येनकाकादिपक्षिजातौ । ते प्रतुद्य निष्कृष्य भक्षयन्तीति प्रतुदरूपा प्रामा । तन्मांसगुणा—सद्य स्वादु गुरूष्ण स्निग्ध मन्थ पित्तदाहरक्तकरञ्च । रा नि व १७ । एतदर्कगुणा. —"कफपित्तहरो ग्राही बद्धविण्मूत्रको भवेत् ।" अर्क षि ।

**प्रतूणी** । स्त्री । प्रतितूणीनामरोगभेदे । See प्रतितूणी ।

**प्रतोली** । स्त्री । ग्रीवामेढ्रश्रोत्रेषणबन्धनभेदे । सु सू १८ अ । लक्षण—"मुत्तोली पुटिका प्रोक्ता कालबन्धरुन्धका ।" इति भानुमती टी । "कौपी नाकारा मत्स्यधारणजलयन्त्रवत् बहुच्छिद्रा मुत्तोली प्रतोली वा ।" वा ।

**प्रत्यक्पर्णी** । स्त्री । रक्तापामार्गे । भा पू १ भ । द्रवन्त्याम् । रा नि व ५ ।

**प्रत्यक्पुष्पी** । स्त्री । अपामार्गक्षुपे । रा नि व ४ । सु सू ४३ अ । च सू १।४ अ । वा सू १५ अ अर्कादि । "प्रत्यकपुष्पी पीततैलोदवीर्य्या ।" मूषिकपर्ण्याम् । दन्तीवृक्षे ।

**प्रत्यक्श्रेणी** । स्त्री । दन्त्याम् । श्वेत । च सू १ अ । श्रुतश्रेणीक्षुपे । रा नि व ४ । द्रवन्तीक्षुपे । रा नि व ५ । आखुकर्ण्याम् । इन्दुवर्णी । वि मूषाकाणी । रा नि व ३ । क्षुद्रदन्तीक्षुपे । र मा ।

**प्रत्यग्गन्धा** । स्त्री । स्वर्णयूथिकायाम् वै निघ ।

**प्रत्यङ्गम्** । क्ली । अङ्गावयवेषु । तानि मस्तको दरपृष्ठनाभिललाटनासाचिबुकबस्तिग्रीवा इत्यता एकैका । कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषण पार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे विंशतिरङ्गुलय । एव प्रत्यङ्गविभाग । तस्य पुन सङ्ग्रामम् । यथा—त्वच कला धातव मला दोषा यकृत् प्लीहा फुस्फुस उण्डुक हृदयम् आशया अन्त्राणि वृक्कद्वयं स्रोतांसि कण्डरा जालानि कूर्चा रज्जव

येवन्च सदात्मा सोमस्वा चम्मोनि सम्मय चायव पेश्व मन्माचि भिरा धमन्य योगवज्ञानि च। विशेषा पर्य्यायेषु गम्या । सु श्रा ५ ष ।

**प्रत्यङ्गिरा** । स्त्री । कण्टकभिरीषवृत्ते । "पिबति च प्रत्यङ्गिराक्षमवम् ।' च द भप विष चि । श्वेतपुनर्नवायाम् । कुलिकावृत्ते ।

**प्रत्यञ्जनम्** । क्ली । चञ्जनेन नेत्रप्रसाधने । চোখে কাজল দেওয়া। च द । [ निघ ।

**प्रत्यनीक.** । त्रि । प्रतिकूले। चसाध्ये। वै

**प्रत्यनुयोग** । पुं । चनुयोगस्यानुयोगे। यथा —"चनुयोगस्य पुन को हेतु इति।" च वि ८ च ।

**प्रत्यय** । पुं। हेतौ। भा। रन्ध्रे। शब्दे। चम। ति। स्वादौ। हेच ।

**प्रत्यवसानम्** । क्ली । भोजने। र मा । रा नि व २० ।

**प्रत्यश्मा (न्)** । पु । गिरिसिनिकायाम् । গিরিমাটী। त्रिका ।

**प्रत्यष्ठीला** । स्त्री । वातव्याधिविशेषे। लचणं यथा—"एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीं। प्रत्यष्ठीलामिति वदेत् जठरे तिर्य्यगुत्थिताम् ॥" मा नि । सु नि १ च । "प्रत्यष्ठीलाष्ठीलकयो गुल्मेऽभ्यन्तरविद्रधौ। क्रियाहिङ्गादिचूर्णंच शस्यते ऽत्र विशेषत ॥"

**प्रत्यक्षम्** । क्ली । इन्द्रियग्राह्ये। चम । तच षड्विध चाक्षुषादिभेदेन। "प्रत्यक्ष नाम तद्यदा त्मना पञ्चेन्द्रियैश्च स्वयमुपलभ्यते। तत्रात्मप्रत्यक्षा सुखदु खेच्छाद्वेषादय । शब्दादयस्तु इन्द्रिय प्रत्यक्षा ।" च वि ८ च ।

**प्रत्याध्मान** । पुं। वातव्याधिविशेषे। लचणम् —"विमुक्तपार्श्व हृदयं तदेवामाशयोत्थितम्। प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम् ॥" मा नि। तत् चिकित्सा—"प्रत्याध्माने समुत्पन्ने कुर्य्यादमन लङ्घने। दीपनादि प्रयुञ्जीत पूर्व्ववद्वस्तिकर्म्म च ॥"

**प्रत्यानाह** । पु । चानाहवाते। निदा ।

**प्रत्युद्गार** । पु । वायुजन्यरोगभेदे। वै निघ ।

**प्रत्यु(त्यू)ष** । पु, क्ली । प्रभाते। च टी भ ।

**प्रथमकुसुम** । पुं। शुक्लमरुवकवृत्ते। वै निघ ।

**प्रथमनवनीतम्** । क्ली । प्रसवात् प्रथमदिना न्तरजातनवनीते। वै निघ ।

**प्रथितालुकी** । स्त्री । रक्तालुभेदे। भा ।

**प्रथुक.** । पुं । चिपीटके। চিঁড়ে।

**प्रदर** । पु । (Fluor albus) तन्नामक स्त्रीरोगादिशावरोगे । প্রদর, পত্রদন। "रज प्रदीर्य्यते यस्मात् प्रदरस्तेन स स्मृत ।" निदानादि यथा—"विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच। यानाध्वशोकादतिकर्षणाच्च भाराभिघाता च्छयनाद्दिवा च। त श्लेष्मपित्तानिलसन्निपातैश्चतु प्रकारं प्रदरं वदन्ति।" इति। लक्षण यथा— "असृग्दरं भवेत्सर्व्वं साङ्गमर्द्दं सवेदनम् । श्लेष्मात् सक्लीमामाव दृष्याद्वाऽल्पज्वरान्विता। दुर्गन्धा चौष्ण रक्ताच नामसाध्या विवर्जयेत् ॥' कफाद्यथा— चाम पिच्छ पाण्डुतुषोदकाभ सवति। पित्तात् पीतनीलश्यामसुष्ण सवेग रक्त सवति। वातात् रुक्षम् चरुण फेनिलमल्पमल्पञ्च सवति। चन्यच— यद्यौद्रसर्पिर्हरितालवर्णं कुणप मज्जप्रकाशञ्च सवेत्। मा नि ।

**प्रदरान्तकलौहम्** । क्ली। प्रदराधिकारे लौहे। "लौहं ताम्र हरीताल वङ्गमभ्र वराटिका। त्रिकटु त्रिफला चित्र विडङ्ग पटुपञ्चकम्। चविका पिप्पली शृङ्ग वचाहवुषपाकलम्। शटी पाठा देवदारु एला च इन्द्रदारकम्। एतानि समभागानि सचूर्ण्य वटिकां कुरु। शर्करामधुसंयुक्त घृतेन भावयेत् पुन । रक्त शीत तथा नील पीतं प्रदरदुस्तरम् ।" লৌহ, তামা, হরিতাল, বঙ্গ, অভ্র, কড়িভস্ম, ত্রিকটু, ত্রিফলা, চিতামূল, বিড়ঙ্গ, পঞ্চলবণ, চই, পিপুল, শঙ্খভস্ম, বচ, হবুষফল, কুড়, শটী, আকনাদি, দেবদারু, এলাইচ, বীজতাড়কের বীজ, প্রত্যেক চূর্ণ সমভাগ, মধু ও চিনি সংযোগে ঘৃতের সহিত ভাবনা দিয়া বটী করিবে। र स र ।

**प्रदिग्धमांसम्** । क्ली । पक्वमांसव्यञ्जनविशेषे। "मांस बहुघृतेभृष्ट सिक्त चौद्राम्बुना मुहु । जीरकाद्यै समायुक्त परिपक्व तदुच्यते। तदेव घृतसक्ताच्च प्रदिग्धं सविजातकम ॥" See मांसम ।

**प्रदीपन** । पुं । चित्रकवृत्ते। वै निघ २ भ चर्श चि राजवल्लभरसे। स्थावरविषभेदे। लचण यथा —"वर्णतो लोहितो य स्याद्दीप्तिमान्दहनप्रभ । महादाहकर. पूर्व्वं कथित स प्रदीपन ॥' भा ।

**प्रदीप्ता** । स्त्री । लाङ्गलिकायाम् । विषलाङ्गलिका । वै निघ ।

**प्रदेशः** । पुं । स्वारब्धस्यातीतेन सम्पादने । "प्रकृतस्यातिक्रान्तेन साधनं प्रदेश । यथा देवदत्तस्यानेन शल्यमुद्धृत तस्माद्यज्ञदत्तस्याप्ययमेव उद्धरिष्यतीति ।" सु उ ६५अ ।

**प्रदेश(शि)नी** । स्त्री । तर्ज्जन्यङ्गुली । रा नि व १८ । शस्त्रविशेषे । सा च अग्रपर्व्वप्रदेशप्रमाणा मुद्रिका दशाङ्गुला च कर्त्तरीति कथ्यते । सु सू ८ अ ।

**प्रदेह** । पु । अनुलेपनाभ्यङ्गादौ । सु सू १८अ ।

**प्रधमनम्** । क्ली । नस्यविशेषे । "षडङ्गुला द्विवक्त्रा या नाडी चूर्णं तया धमेत् । तीक्ष्णद्रौलमित वक्त्रवातै प्रधमन हितम् ॥" भा । "प्राणमार्गेण यच्चूर्णमर्थ्यते सुखवायुना । प्रधमन तदिख्यातम् ।" अ द १२अ । सु सू ७अ मूर्च्छाचि विकट्वादिनस्यं ।

**प्रधानकर्म्म** । क्ली । रोगोत्पत्तौ यत् क्रियते द्वितीय कर्म्म तत । प्रणपाचनरोपणादौ वा । वमन विरेचनवस्तिनस्यशिरोमोक्षणेषु वा । आतङ्कोत्पत्तौ यत् क्रियते कर्म्म तत वा । सु सू ५अ ।

**प्रनाल(श)क** । पु । वास्तुकशाके । जीवशाके । वै निघ ।

**प्रपथ्या** । स्त्री । हरीतक्याम् । रा नि व ११ ।

**प्रपदम्** । क्ली । पादाग्रभागे । "पादाग्र प्रपद मतम् ।" रा नि व १८ ।

**प्रपन्नाडः** । पु । चक्रमर्द्दवृक्षे ।

**प्रपा** । स्त्री । पानीयशालायाम् । जलेर घर । अम ।

**प्रपाकी (इन्)** । पु । गर्द्दभाण्डवृक्षे ।

**प्रपाणम्** । क्ली । उत्तरौष्ठे । "उत्तरौष्ठ प्रपाण स्यात् ।" अ द ३अ ।

**प्रपार्ष्णि. (क)** । पु । करस्याधोभागे, पाणि तले । হাতের তেলো । "करस्याध प्रपाणि स्यात् ।" रा नि व १८ । च चि ८अ । (क) मणिबन्धात्कनीष्ठिपर्य्यन्ते करभागे । च द ८अ ।

**प्रपात.** । पु । भगौ, प्रपतनस्थाने । सु कल्प ५अ ।

**प्रपादिक** । पु । मयूरे । वै निघ ।

**प्रपानकम्** । क्ली । पाना इति शरवत् इति च ख्याते नानारसपेयद्रव्ये । यथाम्रपानकादि । पाना, शरवत् । भा । "आममाम जले खिन्न मर्द्दित दृढपाणिना । सिताशीताम्बुसंयुक्त कर्पूरमरिचान्वितम् । प्रपाणकमिद श्रेष्ठ भीमसेनेन निर्म्मित, सद्योरुचिकर बल्य शीघ्रमिन्द्रियतर्पणम् ।"

**प्रपीड़नम्** । क्ली । व्रणविदारण पूयादिशोषण साधने । तत्साधन द्रव्याणि यथा—"द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीडन । यवगोधूम माषाणां चूर्णानि च समासत ॥"

**प्रपुण्डरीकम्** । क्ली । प्रपौण्डरीके । पुंण्डरिया । च चि ४अ ।

**प्रपुन्नटिः** । पु । चक्रमर्द्दवृक्षे ।

**प्रपुना ( न्न, न्न ) टः ) ड., लः )** । पुं । (Cassia Tora) चक्रमर्द्दवृक्षे । চাকুন্দা । तें तगरिशचेट्टु । ता, तविततगरयी । हा टरीट । रा नि व ४ ।

**प्रपुन्नाटच्छदः** । पु । चणकवृक्षे । वै निघ । चक्रमर्द्दपत्रे ।

**प्रपुराणघृतम्** । क्ली । अतिपुरातनघृते । खुब पुरान घृत । "लाक्षारससनिभ शीत प्रपुराणमत परम् ।" सिद्धौ उन्माद चि ।

**प्रपुराणधान्यम्** । क्ली । पुराणधान्यके । अति पुरातन धान । च चि ५अ ।

**प्रपूरिका** । स्त्री । कण्टकार्य्याम् । श च ।

**प्रपीटकः** । पुं । अश्वस्य पादरोगभेदे । लक्षण यथा—"प्रपीटक विजानीयात् ग्रन्थिभि कूर्च्चसम्भवै । आमण्डकास्थिसङ्काशै ग्रन्थिभिश्चातिकण्टकै ॥" ज द ३९अ ।

**प्रपौण्डरी(ण्ड्र)कम्** । क्ली । (Root stock of nymphaea lotus) शालपर्णीपत्रतुल्यपत्रे क्षुद्रविटपिनि । पुंण्डरिया । हि पुंडेरी । म पुण्डरीक । तें पुंडरीकमनुगीविध्यानमु । गुणा — मधुरं कटिनरचक्षुष्य तिक्त शीतल रक्तपित्तव्रणघ्न ज्वरदाहतृषाघ्नच । रा नि व १२ । च द क्षागाद्य घृते । तन्नामककन्दविषे । सु कल्प २अ । See कन्दविषम् ।

**प्रबल.** । त्रि । बलवति । पु । पल्लवे । श मा । मस्तरे । स्त्री । प्रसारणीलतायाम् । वै निघ ।

**प्रबला** । स्त्री । प्रसारण्याम् । रा नि व ५ ।

**मकरी** । पु । सन्निपातज्वरविशेषे । [ भा । प्र र ।

**मकुर' (ल)** । पु । वकुलवृक्षे । कोरके । है

**मकु(कू)लक.** । पु । दन्तीवृक्षे । श टी र । श मू २०श ।

**मकुष्ट (ष्ठ') (क)** । पु । (*Phaseolus aconitifolius*) वनमुद्गे । वनमुग । हि मुष्ट, मोट मुगानी । सं वनमुद्गभेदः । मकुष्टक इति मालवदेशे प्रसिद्ध । तत्पर्य्याया,—मयष्ट मयष्ट राजमुद्ग वनमुद्ग कृमीलक श्मत अरण्यमुद्ग वल्लीमुद्ग । गुणा —कषाय मधुर रक्तपित्तघ्न ज्वरदाहघ्न पथ्य रुचिकृत् त्रिदोष हरश्च । रा नि व १६ । "मरक्तपित्तकफवातहन्ता श्रीण कषायो मधुर. प्रदिष्ट । ग्राही सुशीतो गुदकीलगुल्म मकुष्ठक सर्व्वगदान् निहन्ति ॥" अवि १५श । तत्सूपगुणा —"मकुष्ठसूपोऽल्पबल पाचनो दीपनो लघु । चक्षुष्यो हृद्यो हृद्य पित्तघ्नो वातरोगनुत् ॥" द्रव्यगुण ।

**मकेरुक'** । पु । कृमिरोगे, पुरीषजकृमिविशेषे । च वि ७श ।

**मक्कल. (ल्ल)** । पु । वातजशूलरोगे । गर्भ मोचनान्ते मातृशोणितजशूलार्त्तिविशेषे । হেঁতাল ব্যথা । लक्षण—"वायु प्रकुपित कुर्य्यात्स रुध्य रुधिर सुतम् । सूताया हृच्छिरोवस्तिशूल मक्कल सञ्ज्ञकम् ॥" मा नि ।

**मक्कुलम्** । क्ली । शिलाजतुनि । श र ।

**मक्कोल** । पु । खटिकायाम् । खडि । "मक्कोलो धवलेखा च कठिनी कक्खटी खटी ।" त्रिकां ।

**मखप्रभु** । पु । हंसप्रोमलतायाम् । वै निघ ।

**मखान्नम्** । क्ली । पद्मबीजसदृशबीजे । हि मखाना । "मखान्न पद्मबीजाभ पानीयफल मित्यपि ।" गुणा —"मखान्न पद्मबीजस्य गुणैस्तुल्य विनिर्दिशेत् ।" भा ।

**मगधम्** । क्ली । पिप्पलीमूले । वै निघ श्री थि मूलादिगुल्याम् ।

**मगधजा** । स्त्री । पिप्पल्याम् । पिपुल गाछ । च निघ वि ज्व चि ।

**मगधजाफलम्** । क्ली । पिप्पल्या । पिपुल । च द गुल्म चि भार्गीषट्पलकघृत ।

**मगधा** । स्त्री । पिप्पल्यां । प मु । वै निघ २ भ कर्णकण्ड चि ।

**मगधोद्भवा** । स्त्री । पिप्पल्यां । रा नि व ६ । सि यो अग्निमान्द्यचि ।

**मघम्** । क्ली । औषधे । पुष्पविशेषे । श र ।

**मघा (घो)** । स्त्री । औषधविशेषे । धरणि । धान्यविशेषे । मे ।

**मघोनी** । स्त्री । पूर्व्वदिशि ।

**मङ्कुर** । पु । मकुरे ।

**मङ्गलच्छदा (च्छाय)** । स्त्री, पु । प्लक्ष वृक्षे । पाकुड़ गाछ । रा नि व ११ ।

**मङ्गलप्रदा** । स्त्री । हरिद्रायाम् । शमीवृक्षे । वै निघ ।

**मङ्गला** । स्त्री । शुक्लदूर्व्वायां । श र । हरिद्रायां । रा नि व ६ । नीलदूर्व्वायां । रा नि व ८ । करञ्जभेदे । श च । मङ्गलागुरुणि । रा नि व १२ । ऋद्धौ । वृद्धौ । नायमाणायाम् । वै निघ ।

**मङ्गलागुरु** । क्ली । मङ्गल्यागुरुणि । रा नि व १२ ।

**मङ्गल्यम्** । क्ली । दधनि । अम्लदधनि । मे । स्वर्णे । सिन्दूरे । रा नि व १३ । कृष्णागुरुकाष्ठे । प मु । श्रीखण्डचन्दने । শ্বেত চন্দন । रा नि व १२ । पु । बिल्ववृक्षे । र मा । मसूरके । रा नि व १६ । जीवकक्षुपे । रा नि व ५ । नारिकेलवृक्षे । कपित्थवृक्षे । रा नि व ११ । रीठाकरञ्जे । रा नि व ९ । अश्वत्थवृक्षे । मे । जलमधूक वृक्षे । वै निघ ।

**मङ्गल्यक** । पु । मसूरकलाये । भा पू १भ धा व ।

**मङ्गल्यकुसुमा** । स्त्री । शङ्खपुष्प्याम् । भा ।

**मङ्गल्यनामधेया** । स्त्री । जीवन्तीवृक्षे । जटा ।

**मङ्गल्यपुष्पी** । स्त्री । शङ्खपुष्प्याम् । वै निघ ।

**मङ्गल्या** । स्त्री । चीडानामदेवदारुभेदे । प्रियङ्गौ । मङ्गलागुरुणि । रा नि व १२। हेमपुष्प्यां । मसूरे । मूर्व्वायां । दूर्व्वा । र मा । ऋद्धौ । रा नि व ५।२३ । शमीवृक्षे । रा नि व ८।२३ । अध पुष्प्यां । চোর কাঁটকি । गोरोचनायां । हरिद्रायां । दूर्व्वायां । प मु । शुक्लवचायां । रा नि

व ८। माषपर्ण्यां। रा नि व ३।२३। जीवन्ती लतायां। वचायां। च्छड़ी। रा नि नि व ३।५ ६।२३। महाबलायां। रा नि व २३। मल्लिका पुष्पवृक्षे। मुद्गपर्ण्याम्। वै निघ।

**मङ्गल्यागुरु**। क्ली। स्वनामा केदारदेशे प्रसिद्धागुरुणि। गुणा—शीतल गन्धाढ्य यौग वाहिकञ्च। रा नि व १२।

**मङ्गल्याह्वा**। स्त्री। वायमाणालतायाम्। रा नि व ५।

**मङ्गुरः**। पु। मत्स्यविशेषे। मागुर माछ। वै निघ।

**मड्ड(ड्डु)कम्**। क्ली। मड्डावाद्ये। जांझिश्रा। हारा।

**मच्छः**। पु। मत्स्यसामान्ये। श र।

**मज्जकृत्**। क्ली। अस्थनि। हे च।

**मज्जगतज्वरः**। पु। तदाश्रितज्वरविशेषे। मज्जागतज्वर। लक्षण यथा—"तम प्रवेशन हिक्का कास शैत्य वमिस्तथा। अन्तर्दाहो महाश्वास मर्मच्छेदश्च मज्जगे। मज्जगके क्रिया नीता मरण तत्र भाषितम्॥" वै निघ।

**मज्जदमनी**। स्त्री। बन्ध्याकर्कोटक्याम्। वै निघ।

**मज्जनम्**। क्ली। स्नाने। जटा। मज्जायां। श च।

**मज्जफलम्**। क्ली। माजूफलमिति प्रसिद्ध वणिग्द्रव्ये। भैष वाजी।

**मज्जमेह**'। पु। मज्जगत मेहरोगविशेषे। "मज्जाभ मज्जमिश्र वा मज्जमेही प्रमेहति।" मा नि।

**मज्जरः**। पु। तृणविशेष। माञ्जुर तृण। सं पवना। क र्नले। गुणा—मधुर धेनुदुग्ध करश्च। रा नि व ८।

**मज्जसमुद्भवम्**। क्ली। शुक्रे। ह च।

**मज्जा** (न्) । पुं, स्त्री। ह्यादेरन्त सारभागे। सार। श म। अस्थि गह्वरस्थ स्नेहभागे। स च शान्वस्थिमध्यग तस्य कर्म पूरणम्। "मेदोऽस्थ्य धाविश्व स्यात स मज्जा कथितो बुधैः।" भा पाददारोदि। "अस्थि यत् व्याधिना पक्व तस्य सारो भवेद्यत्। य स्नेहवत् पृथग्भूत स मज्जेत्य भिधीयते॥" इति स्वरूपम्। मज्जस्थान यथा—"स्थूलास्थिषु विशेषण मज्जा त्वभ्यन्तरे स्थित।" भा। तृतीया मेदोधरा नाम, मेदोहि सर्व्व भूतानामुदरस्थमण्वस्थिषु महत्सु मज्जा भवति। सु शा ४च। अस्थिसारे। आँटिर शाँस। रा नि व १८। गुणा—"यस्य यस्य फलस्येह वीर्य्यं भवति यादृश। तस्य तस्यैव वीर्य्येण मज्जानमपि निर्द्दिशेत्॥" सु सू. ४६च। मज्ज गुणा—"बलशुक्ररसश्लेष्ममेदोमज्जविवर्द्धन। मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हित॥" च। वातघ्नी पित्तकफबलकरी मासतुल्यगन्धरूपा च। कुम्भीरमहिषमज्जगुणा—मधुरा वृष्यौ बल्या च। मत्स्यमज्जगुणौ—शैत्यमुष्णत्वञ्च। राज।

**मज्जा(नु)गतम्**। क्ली। काण्डभग्ननामास्थि भङ्गरोगे। "अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जान मुन्नयति।" सु नि १५च।

**मज्जाजः**। पु। भूमिजगुग्गुलौ। रा नि व १२।

**मज्जामेह**.। पु। मज्जगतप्रमेहे। निदा।

**मज्जारजाः**। पु। गुग्गुलौ। वै निघ।

**मज्जावहस्रोतः**। पु। मज्जधातुवाहिन्यां नाड्याम्। तस्य मूलम् अस्थीनि सन्धयश्च। च वि ५च।

**मज्जारस' (सार)**। पु। शुक्रे। रा नि व १८। समलतायाम्। मनशाविशेष। वै निघ।

**मज्जासारम्**। क्ली। जातीफले। रा नि व १२।

**मज्जिका**। स्त्री। लक्ष्मणाकन्दे। वकभ्रियाम्। वै निघ।

**मञ्चकपत्री** / **मञ्चिपत्रम् (त्री)** स्त्री, क्ली। सुरपर्ण्याम्। रा नि व १०। गुणा—तिक्ता उष्णा पित्तला विषघ्नी कफवातज्वरकास क्रमिघ्नी। वै निघ।

**मञ्चकाश्रय**'। पु। मत्कुणायाम्। मत्कुण। रा नि व १९।

**मञ्जरम्**। क्ली। मुक्तायां। श र। तिलकवृक्षे। श र। मयूर्यां। विका।

**मञ्जरि**। प। मञ्जर्यां। श म।

**मञ्जरी (का)**। स्त्री, पु। मल्लतस्यां। प ह। मुक्तायां। तिलकवृक्षे। श र। तुलस्यां। रा नि व १९। वेतसलतायाम्। अशोकवृक्षे। वै निघ।

**मणिरामः** । पु । ग्रन्थरत्नमालाकर्त्तरि ।

**मणिवर'** । पु । हीरकमणौ । हीरे । भा ।

**मणिवोज'** । पु । दाडिमवृक्षे । रा नि व ११ । जीरके । वै निघ ।

**मणीचकम्** । क्ली । चन्द्रकान्तमणौ । चाँदि रूपा । तिका । पु । चन्द्रकान्तमणौ । वै निघ । मत्स्यरङ्कपक्षिणि । माछराङा पाखी । हारा ।

**मणीवकम्** । क्ली । पुष्पे । हे च ।

**मण्टपी** । स्त्री । चुद्रोपोदिकायां । रा नि व ७ ।

**मण्डूरम्** । क्ली । मण्डूरे । मण्डूर । वै निघ ।

**मण्ड. (कः)** । पु । वटकाकारपिष्टकविशेषे । हि माँड़ा । यथा—"समितां मर्द्दयेदाज्यैर्जलेनापि च सम्यक् । अस्यास्तु वटकाकृत्वा पचेत्तापिपि नीरसम् । एला लवङ्ग कर्पूर मरिचाद्यैरलङ्कृते । मज्जयित्वा सितापाके ततस्तत्र समुद्धरेत् । अयं प्रकार सुसिद्धो मण्ड इत्यभिधीयते ॥" गुणा—"मण्डस्तु वृष्यो हृद्यो बल्य सुमधुरो गुरु । पित्तानिलहरो रुच्यो दोषाग्नीनां सुपूजित ॥" रा नि व १० ।

**मण्डम्** । क्ली, पु । सारे । पिच्छे । दध्यादय सरे । माड़, भातेर माड़ । क्ली । मस्तुनि । मे ।

**मण्ड** । पुं । एरण्डवृक्षे । प मु । यवादि साधितसिक्थकरहितद्रव्यविशेषे । मण्ड, माड़ । "सिक्थकैर्रहितो मण्ड ।" स च चतुर्द्दशगुणाम्बु साधित सिद्ध अर्थात् तण्डुलपरिमाणापेक्षया ऊनविंशगुणजले सिद्ध । "मण्डश्चतुर्द्दशगुणे ।" च द ज्व चि । "जले चतुर्द्दशगुणे तण्डुलानां चतुष्पल । विपचेत्स्त्रावयेन्मण्ड सभक्तो मधुरो लघु । नीरे चतुर्द्दशगुणे सिद्धो मण्डस्त्वसिक्थक ॥" प म २ख । गुणा—"तण्डुलानां सिक्थहीना पेया चाग्निप्रदीपनी । ग्राहिणी लघुशीता च पाचनी वातलोमनी । धातूनाञ्चैव नाडीनां मृदुत्वस्वेदकृन्मता । तृषाश्रमाग्लानी पित्तासिसारकफदोषहा ॥" वै निघ । अष्टगुण वारिसिद्धे मण्डे । स चाग्निमान्द्ये हित । सि यो अग्निमा चि । गुणा — "क्षुद्बोधनो बस्तिविशो धनश्च प्राणप्रद शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायु जयेदष्टगुणो हि मण्ड ॥" राज श्प । नेके । चूनके । शाकभेदे । म । मस्तुनि । सारे । पिच्छे । हे च ।

**मण्डकः** । पु । मण्ड । कासीपुष्पवृक्षे । पिष्टक विशेष । हिं माड़ा । "वारिणा कोमलाकृत्वा समितां साधु मर्द्दयेत् । घृतपाकमयी सघा लोप्त्रीं समक प्रसारयेत । अधोमुखघटस्यैतां विस्तृताम्रपिपर्द्दहि । मृदुना वह्निना साध्य सिद्धो मण्डक उच्यते ॥ दुग्धेन साज्यखण्डेन मण्डक मर्द्दयेन्नर । अथवा सिद्धमांसेन सतक्रवटकेन वा ॥" गुणा—"मण्डकी वृष्यो हृद्यो बल्यो रुचिकरो भृश । पाकेऽपि मधुरी ग्राही लघु दीपनवातघ ॥" भा । लोप्त्री—लिपी ।

**मण्डन** । पु । मधुमाधवीलतायाम् । वै निघ २भ शैलूषादिचूर्णे ।

**मण्डपः** । पुं । माधवीलतायाम् । वै निघ ।

**मण्डपा** । स्त्री । निष्पाव्यां । रा नि व १६ ।

**मण्डपारोह.** । पु । सुखालौ । रा नि व ७ ।

**मण्डपी** । स्त्री । क्षुद्रपर्णोपोदक्यां । क्षुद्रपत्र पूँई । रा नि व ७ ।

**मण्डयन्त** । पु । अन्ने । उणा ।

**मण्डयन्ती** । स्त्री । नार्य्याम् ।

**मण्डरी** । स्त्री । झुर्झुरिकायाम् । हारा ।

**मण्डल(क)म्** । क्ली । पिटकवन्मण्डलयुक्तचर्म्म रोगे । चाका दाग । कोठरोगे । शीतपित्तरोगे । रा नि व २० । मा नि । नखीनामगन्धद्रव्ये । श च । पु । उदररोगे । सर्पभेदे । हस्तोऽङ्के व्रण बन्धभेदे । 'मण्डल वेष्टनाकार विद्ध्यादिति लक्षण ।" सु सू १८ । कुक्कुरे । त्रिका । अष्टचत्वारिंशद्दिवसेषु । ४८ दिन । "सप्ताय मण्डल पयादर्कं निष्काशशेषत ।" धर्म वि ।

**मण्डलकुष्ठम्** । क्ली । सप्तमहाकुष्ठान्तर्गत कुष्ठरोगभेदे । तल्लक्षणम्,—"श्वेत रक्त स्थिर स्त्यान स्निग्धमुत्सन्नमण्डल । कृच्छ अन्योन्य संयुक्त कुष्ठ मण्डलमुच्यते ॥ मा नि ।

**मण्डलच्छदा** । स्त्री । शुक्लपुनर्नवायाम् । वै निघ ।

**मण्डलपत्रिका** । स्त्री । रक्तपुनर्नवायाम् । रा नि व ५ । [ सु कल्प ८ष ।

**मण्डलपुच्छका'** । पु । तन्नामकप्राणहरकीटे ।

**मण्डलग्रुल्भाक्** । पु । चामारस तिर स्याति वृक्षे । वै निघ ।

**मण्डलसन्धि ।** पु । कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाकारसन्धौ । सु शा ५ ष ।

**मण्डला ।** स्त्री । कुमार्य्याम् । घृतकुमारी । दूर्व्वायाम । वै निघ ।

**मण्डलाग्रम् ।** क्ली । मण्डलमिवाग्रं यस्येति । स्वनामख्यातषडङ्गुलशस्त्रविशेषे । लक्षण यथा— "षड्भागे मण्डलं वृत्तङ्गुरसंस्थानमेव वा । मण्डलाग्रस्य नामोयात्प्रमाणन्तु षडङ्गुलम् ॥ सु सू ८ ष । डल्लण ।

**मण्डली (इन्) ।** पुं । वटवृक्षे । रा नि व ११ । सर्पे । त्रिका । गोनससर्पे । रा नि व १९ । कृष्णकक्लासे । हे च । विड़ाले । श मा । कर्कटे । गोनससर्पजातौ । "दीर्घा मण्डलिनो भोगा मण्डलै र्विविधैश्चिता । प्रांशवो मन्दगमना —॥" वा उ ३६ ष । वै निघ । तद्भेदा —आदर्शमण्डलश्वेत मण्डलरक्तमण्डलचित्रमण्डलपृषतरोध्रपुष्पमिलिन्दक गोनस वृद्धगोनस पनस महापनस वेणुपत्रक शिशुक मधुकषायकलुषपारावतहस्ताभरणचित्रकैणीपदा इति । तद्दष्टलक्षणमाह—मण्डलिदष्टस्य प्रथमे वेगे रक्तं दुष्टं पीतीभवति । तेन च पीताङ्गता दाहश्च । द्वितीये श्वयथुः । तृतीये दंशपरिक्लेदादय । चतुर्थे ज्वरो दाहश्च । पञ्चमे सर्व्वशरीरदाहश्च भवति । वा उ ३६ ष । स्त्री (ली) । दूर्व्वायां । हारा । घृतकुमार्य्याम् । गुडूच्याम् । वै निघ ।

**मण्डा ।** स्त्री । मेधिकायां च सु । मद्ये । हारा । आमलक्याम् । मे ।

**मण्डूक ।** पु । भेके । व्याङ् । स अष्टविध— कृष्ण सार कुहक हरित रक्त यववर्णाभ भृकुटी कोटिका इति । तद्दंशे दंशकण्डू पीतफेनागमश्च । सु कल्प ८ ष । पृथुशिम्बश्योणाकवृक्षे । वड़ शोँटा श्योणागाछ । रा नि व ९ । पुण्डरीकवृक्षे । पुण्डरिया । वै निघ । मण्डूकपर्ण्याम् । थूनकुड़ि, मेष च पि चि वृषायतीगन्ध्याम् । अश्वस्य खुरतल प्रदेशे । श द ।

**मण्डूकत्ता (ताप) ।** स्त्री, पु । अश्वस्य पादरोगविशेषे । लक्षण यथा—"मण्डूकतापो मण्डूकतो प्रदेशमाश्वस्य जायते । अभिघातसमुत्थेन दुष्टकर्द्दमकेन च ॥" ज द २९ ष ।

**मण्डूकपर्ण ।** पु । श्योणाकवृक्षे । श्यम । पाटलावृक्षे । वै निघ । श्योणके । म ।

**मण्डूकपर्णी ।** स्त्री । (Hidrocotyle Asiatica ) Asiatic Penny wort स्वनाम ख्यातशाके । थानकुड़ि, थुनकुनि । हि खुलखुड़ि, ब्रह्ममाण्डूकी । तै मण्डूकब्राह्मी । ता वल्लरीकेरी । वम् ब्रह्मी । 'तत्पर्य्याया —भेकपर्णी भेकी सुपर्णी मण्डूकपर्णिका मण्डूकपर्णिनी ब्रह्ममण्डूकिका मण्डूकी त्वाष्ट्री दिव्या महौषधी । रा नि व २३ । गुणैर्ब्राह्मीसदृशी । गुणा —कासघ्नी स्वादुपाकरसा हिमा च । राज ५ प । भैष । महाभवद्यां । अस्य पत्र कुष्ठ उपदंशे च परमहितं । चर्म्मरोगे नाड़ीव्रणे च हितम् । दृष्टफलम् । मञ्जिष्ठायां । रा नि व ६ । २३ । च सू ४ ष । आदित्यभक्तायाम् । रा नि व ४ । २३ । पृथुशिम्बश्योणाकवृक्षे । वड़ शोँटा श्योणा गाछ । रा नि व ९ । शालपर्ण्याम । पाटलायाम् । वै निघ । ब्राह्म्यां । ब्रह्मी शाक । भा उ रसायने । "मण्डूकपर्ण्याः स्वरस । तदभावे मञ्जिष्ठा ग्राह्या ।" ब्राह्मीमेहे । सु चि ९ ष ।

**मण्डूकमाता ।** स्त्री । ब्राह्मीक्षुपे । ब्राह्मी शाक । रा नि व ५ ।

**मण्डूका ।** स्त्री । मञ्जिष्ठायां । श मा । मण्डूकपर्ण्यां । थूनकुड़ि । प सु । आदित्यभक्तायां । हड़हड़िया । रा नि व ४ ।

**मण्डूकी ।** स्त्री । मण्डूकपर्ण्याम् । थूनकुड़ि । र मा । आदित्यभक्तायां । रा नि व ४ । ब्राह्मीक्षुपे । रा नि व ५ । जलशुक्तौ । सु चि १ ष । अश्वस्य खुरतलभागे । ज द २ ष । भेकपत्न्यां ।

**मण्डूरम् ।** क्ली, पु । लौहमले । मण्डूर । तत्पर्य्याया,—सिंहानं शूलघातन लौहमल लौहचूर्ण किट्ट अयोमल लौहज कृष्णचूर्ण लोष्ट । प सु । अस्य मारणविधि —"अथाङ्गारैधमेत् किट्ट लौहजं तद्गवां जले । सेचयेत्तप्तत्तप्त सप्तवार पुन पुन । चूर्णयित्वा तत क्वाथेद् गुडैस्त्रिफली द्रवै । आलोड्य भजयद्वह्नौ मण्डूर जायते वरम । यल्लौह यद्गुणा प्रोक्ता तत्किट्टे चापि तद्गुणा । शतोर्द्धमुत्तम किट्ट मध्यञ्चाशीतिवार्षिकम । अधम षष्टिवर्षीय ततो हीनं विषोपमम् ॥" रस चि ७ ष ।

**मण्डूरवटक ।** पु । पाण्डुरोगे औषधम् । "त्रिफला त्र्यूषण मुस्तं विडङ्ग चव्यचित्रकौ । दार्व्वी त्वक् माक्षिको धातु ग्रन्थिको देवदारु च । एता

**मत्सरः** । पु । मक्षिकायां । विका ।

**मत्स्यकाली (क्षी)** । स्त्री । उपोदिकायाम् । वै निघ । [ जटा ।

**मत्स्यगन्धा** । स्त्री । जलपिप्पल्यां । रा नि व ४ ।

**मत्स्यगन्धि** । स्त्री । मत्स्याक्ष्याम् । उक्तो शाक । (का) । शूकनासायाम् । वै निघ ।

**मत्स्यगर्भ** । पु । मत्स्यगर्भे ।

**मत्स्यघण्ट** । पु । व्यञ्जनविशेषे । माछेर घण्ट । श च । See मत्स्य ।

**मत्स्यण्डिका (ण्डी)** । स्त्री । गुडकृतमिष्टद्रव्यभेदे । मिछिरि, नबात् । शर्करायां । रा नि व १४ । मात्गुड़ । "इचो रसो य सपक्को घन किञ्चिद्द्रवान्वित । मन्द यत् स्यन्दते तस्मात् तन्मत्स्यण्डी निगद्यते ।' गुणा —"मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी हृद्या रक्तदोषापहा स्मृता ॥" भा । मत्स्यण्डिका खण्डशर्करा विमलजाता उत्तरोत्तर शीतस्निग्धगुरुमधुरतरा भवन्ति । सु सू ४५ अ ।

**मत्स्यण्डफलितम्** । क्ली । खटीशर्करायाम् । वै निघ ।

**मत्स्यनाशक (नाशन)** । पुं । मत्स्यरङ्ग पक्षिणि । माछराङा पाखी । कुररपक्षिणि । विका । है च ।

**मत्स्यपित्तम्** । क्ली । मीनपित्ते । माछेर पित्त । रसशुद्धि —"मत्स्यादिपित्त संयुक्त निम्ब द्रावैर्विभावित । दिनान्त शुद्धिमायाति सत्य गुरुवचो यथा ॥" सा कौ ।

**मत्स्यपित्ता** । स्त्री । कटुरोहिण्यां । कट्की । रा नि व ६ ।

**मत्स्यपुटपाक** । पु । पुटेन मत्स्यपाकभेदे । तत्साधन दग्धमत्स्यतुल्यमेव ।

**मत्स्यभिन्ना** । स्त्री । कटुकायाम् । कट्की । रा नि व ६ ।

**मत्स्यभेदिनी** । स्त्री । कटुकायां । रा नि व ६ ।

**मत्स्यरङ्ग (ङ्ग, क)** । पु । जलकाके । माछराङा । हारा ।

**मत्स्यराज** । पु । रोहितमत्स्ये । विका । "सुन्दरो रोहित श्रेष्ठ प्रकुलश्च विशेषत । मत्स्यराज इति प्रोक्त ।' रस चि ८ अ ।

**मत्स्यर्को** । पु । शफरीमत्स्ये । च शा ८ अ ।

**मत्स्यलम्** । क्ली । मत्स्यसंयुक्तव्यञ्जने ।

**मत्स्यविन्ना** । स्त्री । कटुकायाम् ।

**मत्स्यवेधनी** । स्त्री । मीनरङ्गी । माछराङा । जटा । वडिशे । श र ।

**मत्स्यशकलम्** । क्ली । मीनशल्के । मत्स्यचर्मणि । भा म कृष्ठ चि । स्त्री । कटुक्यां । भा म १भ विषमज्व चि । "गुडूचीकामरदारु मत्स्यशकला ।"

**मत्स्यसङ्घात** । पु । मत्स्यसमूहे ।

**मत्स्यसन्तानिक** । पुं । मत्स्यव्यञ्जनभेदे । यथा—"दग्धे ऽङ्गारे सलवणो विमर्दरिकपक्कृत । साद्रक कटुतैलेन मत्स्यसन्तानिको भवेत् ॥" श च ।

**मत्स्या** । स्त्री । कटुकाम् । वै निघ ।

**मत्स्याक्षी** । स्त्री । गण्डदूर्वायाम् । रा नि व ८ । हिलमोचिकायां । शिञ्चे । विका ।

**मत्स्याण्डम्** । क्ली । मीनाण्डे । माछेर डिम । गुणा —"मत्स्यकूर्म्मखगाण्डानि स्वादुवाजीकराणि च । कटुपाकानि रुच्यानि वातघ्नं मकराणि च ॥" राज ३ प ।

**मत्स्याण्डी** । स्त्री । शर्करभेदे । धाँड़ गुड़ ।

**मत्स्यादनी** । स्त्री । जलपिप्पल्यां । रा नि व ४ । मूर्खलायाम् । मत्स्याक्ष्याम् । शिञ्चे । काकमाच्याम् । गण्डदूर्वायाम् । मण्डूकाम् । रा नि व २३ । [ विका ।

**मत्स्याशन** । पु । मत्स्यरङ्गे । माछराङा ।

**मत्स्याक्षकम्** । क्ली । ब्राह्म्याम् । पवाङ्गचन्दने । भा म ४भ बाल चि । "मत्स्याक्षक शङ्खपुष्पी । सु शा १० अ । पत्तूरे । वा उ ३९ अ ।

**मत्स्याक्षिका** । स्त्री । गण्डदूर्वायाम् । वै निघ ।

**मत्स्याक्षी** । स्त्री । हिलमोचिकायां । शिञ्चे-शाक । हि मछेछी, मछरिया । म जलब्राह्मी । र मा । विका । सोमलताविशेषे । गुणा — शीतला कष्या ब्रणघ्नी च । रा नि व ५ । "मत्स्याक्षी । ग्राहिणी शीता कुष्ठपित्तकफास्रजित् । लघुस्तिक्ता कषाया च स्वाद्वी कटुविपाकिनी ॥" भा गुव । काकमाच्यां । रा नि व ४ । गण्डदूर्वायां । रा नि व ८ ।

শটী, সৈন্ধবলবণ, ধনিয়া, কাঁকড়াশৃঙ্গী, তালীশপত্র, কট্‌ফল, নাগেশ্বর, যমানী, বনযমানী, যষ্টিমধু মেথি, জীরা, কৃষ্ণজীরা, প্রত্যেক চূর্ণ সমভাগ। ঈষদ্ ভর্জিত সবীজ সিদ্ধিচূর্ণ ঐসমস্তচূর্ণের সমান সর্ব্বসমষ্টি-সমান চিনি। ঘৃত ও মধু তত দিবে যাহাতে মোদক বান্ধা যায়। অন্যো মহামদনমোদকঃ —ত্রৈলোক্যবিজয়াপত্রং সবীজং ঘৃতভর্জিতম্। সমং মিলিতচূর্ণেন পশ্চাৎ চূর্ণয়েদতিচিক্কণম্। শতাবরীজমেব বিদারিকন্দজং রজঃ। বলাতিবলয়োশ্চৈব মূলবল্কলজং রজঃ। গোক্ষুরস্য বীজাদ্রজো বানরীবীজতঃ। এতদর্দ্ধীকৃতং যাব ... তাবদ্যাদিজং রজঃ। তস্মাত্রিগুণ কার্য্যং ত্রৈলোক্যবিজয়ারজঃ। অবেহ্য শতাবর্য্যা বিদার্য্যা স্বরসৈ তথা। পয়সাথ সম তস্মিন্ গোলয়িত্বা সম্যক্। গোলয়িত্বা সিতাশ্চৈব মকরন্দার্থ তুল্যা। পচেদবহিতো বৈদ্যো মন্দমন্দেন বহ্নিনা। তত পাকক্রমং দৃষ্ট্বা ভ্রষ্টা চৈবাসিতং তিলং। বদ্ধা বতারিতে দদ্যান্মোদকার্থে ভিষগ্বরঃ। ত্রিকটু ত্রিসুগন্ধঞ্চ সৈন্ধবং সধনীয়কং। জাতীকোষফলঞ্চৈব চাবকং জীরকদ্বয়ম্। শটী কুন্দুরখোটিশ্চ মুস্তা মধুরিকা মুরা। মাংসী তালীশপত্রঞ্চ পত্রং বারেন্দ্রমেব চ। গ্রন্থিপর্ণং ক্রিয়া চৈব তথৈব শতপুষ্পিকা। চবিকা দেবদারুশ্চ প্রিয়ঙ্গু লবঙ্গকং। সরলং শৈলজঞ্চৈব সর্ব্বমেতদ্বিচূর্ণয়েৎ। অথ যদ্যত্র যুক্তং দ্রব্যং তদ্ভর্জ্জয়েৎ। ভর্জয়িত্বা ক্রমৎ চূর্ণ মকরচূর্ণস্য পাদিকং। সৈন্ধবং স্বাদুসাম্যং দেয়ং কটুকমেব চ। ততঃ সুমিলিতং কৃত্বা মোদকং পরিকল্পয়েৎ। মুষ্টিমাত্রকে চূর্ণে চূর্ণ সুপর্ণী তথা। লোটয়েন্মোদকানেতান্ নিধায়ৈনং যথোচিতং॥” ইতি শতাবরীচূর্ণ, ভূমিকুষ্মাণ্ডচূর্ণ বেড়েলার মূলচূর্ণ গোরক্ষচাকুলিয়ার ছালচূর্ণ, গোক্ষুর বীজ চূর্ণ, কুলেখাড়ার বীজচূর্ণ, আলাকুশী বীজচূর্ণ, প্রত্যেক সমভাগ মিলিত ২ প। ঘৃতভর্জ্জিত সবীজ সিদ্ধিচূর্ণ ৮প শর্করা ৩২ প। পাকার্থ—শতমূলীরস, ভূমিকুষ্মাণ্ডরস এবং দুগ্ধ প্রত্যেক ৮প (মতান্তরে দুগ্ধ ১৬ প) একত্র গুলিয়া পাক করিবে। পাকসিদ্ধ হইলে নামাইয়া, তাহাতে কৃষ্ণতিলের চূর্ণ ২ প প্রক্ষেপার্থ ত্রিকটু গুড়ত্বক্, তেজপত্র, এলাইচ, সৈন্ধব ধনিয়া, জায়ফল, জয়িত্রী, বালা জীরা, কৃষ্ণজীরা, শটী, কুন্দুরখোটী মুতা, মৌরী, মুরামাংসী, জটামাংসী, তালীশপত্র তেজপত্র, পচাপাতা, গেঁঠেলা, হরীতকী শুলফা, চই, দেবদারু, প্রিয়ঙ্গু লবঙ্গ সরলকাষ্ঠ, শৈলজ। ইহাদের মধ্যে যে যে দ্রব্য ভর্জনোচিত, গন্ধবৃদ্ধির জন্য তাহা ভাজিয়া চূর্ণ করিবে। এই সকল দ্রব্যের চূর্ণ প্রত্যেক সমভাগ মিলিত ২ প সৈন্ধব ও ত্রিকটুচূর্ণ যে পরিমাণে দিলে স্বাদু হয় সেই পরিমাণ বিবেচনা করিয়া দিতে হইবে। মোদক প্রস্তুত হইলে, সেই মোদক ত্রিকটু ও ত্রিজাতকচূর্ণে আলোড়িত করিয়া ভাণ্ডে তুলিয়া লইবে। রত্ন র।

**মদনমোদনী**। স্ত্রী। গন্ধিকারিকায়াম্। বৈ নিঘ।

**মদনমোহন**। পু। কপোতপক্ষিণি।

**মদনরিপু**। পু। মদনফলে। বৈ নিঘ।

**মদনশলাকা**। স্ত্রী। শারিকায়াম্। কামোন্মাদকৌষধে। ত্রিকা। কোকিলায়াম্। শ র।

**মদন(শা)সারিকা**। স্ত্রী। সারিকায়াম্। শালিক পাখী। জটা।

**মদনা**। স্ত্রী। কস্তূর্য্যাম্। ধাতক্যাম্। সুরায়াম্। হে চ। [বৈ নিঘ।

**মদনাঙ্কুশ**। পু। শিশ্নে। ত্রিকা। নখে।

**মদনাগ্র(ক)জ**। পু। কোদ্রবধান্যে। কোদোধান। শব্দ।

**মদনায়ুধম্**। ক্লী। যোনৌ। শব্দ। কাম বৃদ্ধিক্ষুপে। রা নি ব ৪।

**মদনালয়**। পু। স্ত্রীযোনৌ। পদ্মে। বৈ নিঘ।

**মদনাহ্ব**। পু। মদনবৃক্ষে। রা নি ব ৮। স্ত্রী (হ্বা)। অক্ষোটবৃক্ষে। বৈ নিঘ।

**মদনী**। স্ত্রী। মদিরায়াম্। নেতি। শব্দ। কস্তূর্য্যাং। মৃগনাভি। রা নি ব ১২। মদ্যে। রা নি ব ১৪। ধাতকীবৃক্ষে। অতিমুক্তকে। মদমল্লিকা। রা নি ব ১০।

**মদনীয়হেতু**। পু। ধাতকীবৃক্ষে। ধাইফুলের গাছ। বা সূ ১৫ দিষ্কুন্দর। "উগ্রাস্পীত মদনীয়হেতু।"

**मदनीया।** स्त्री । मञ्जिकावृत्ते । वै निघ ।

**मदनेच्छाफलः।** पु । आम्रवृत्ते । आमगाछ । रा नि व ११ ।

**मदभञ्जिनी।** स्त्री । शतमूल्याम् । श च ।

**मदमत्तः।** पु । महाकरञ्जवृत्ते । वै निघ ।

**मदमादिनी।** स्त्री । कोङ्कणदेश गणिकारी नामप्रसिद्धे पुष्पवृत्ते । रा नि व १० ।

**मदयन्तिका (न्ती)।** स्त्री । नवमल्लिकायां । काठमल्लिका । र मा । त्रिपुरमल्लिकायां । प मु । भेद कुन्दरो चि महानीललेति । च द र वि च । वा चि २च ।

**मदयित्नु।** क्ली । मद्यं । मे ।

**मदरागः।** पु । कुक्कुटपक्षिणि ।

**मदरोगः।** पु । मदात्ययरोगे । रा नि व २० ।

**मदव्याधिः।** पु । पानात्ययरोगे । रा नि व २० । See मदातङ्क ।

**मदशाकः।** पु । उपोदिकायाम् । रा नि व ७ ।

**मदशौण्डः।** पु । जातीफलवृत्ते । वै निघ ।

**मदसारः।** पु । तूलवृत्ते । रा नि व ९

**मदस्थानम्।** क्ली । सुरापानस्थाने । त्रिका ।

**मदहस्तिनिकः (नी)।** पु । महाकरञ्जवृत्ते । डहर करञ्ज । रा नि व ९ ।

**मदहेतुः।** पु । धातकीवृत्ते । वैद्यक ।

**मदा।** स्त्री । धातकीवृत्ते । वै निघ भ सा चि ग्रहणीचूर्णे, कुटजचूर्णे । यक्ष्मी चि पाठादिचूर्णे । कस्तूर्याम् । मृगनाभि । चि क क प्रदर चि ।

**मदाढ्य।** पुं । तालवृत्ते । कदम्बवृत्ते । रा नि व ९ । आम्रवृत्ते । रा नि व ११ । स्त्री । लोहितझिण्ट्याम् । रक्तझाँटी । श च ।

**मदातङ्कः (त्यय.)।** पु । पानात्ययरोगे । तस्य निदानादिकं यथा—"ये विषस्य गुणा प्रोक्तास्तेऽपि मद्ये प्रतिष्ठिता । तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्यय । किन्तु मद्य स्वभावेन यथैवान्नं तथा स्मृतम् । अयुक्तियुक्तं रोगाय युक्तियुक्तं यथा मतम् । प्राणा प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून् । विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् । विधिना मात्रया काले हितैरन्नैर्यथाबलम् । प्रहृष्टो य पिबेन्मद्यं तस्य स्यादमृतोपमम् । स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् । भवेदायुःप्रकर्षाय बलायोपचयाय च । काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च । विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणा ॥ बुद्धिस्मृतिप्रीतिकर सुखश्च पानान्ननिद्रारतिवर्द्धनश्च सपाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्य प्रथमो मदो हि ॥ अव्यक्तबुद्धिस्मृतिवाग्विचेष्ट सोन्मत्तलीलाकृतिरप्रशान्त । आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्त पुरुषो मदेन ॥ गच्छेदगम्यांश्च गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसञ्ज्ञ । ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्र ॥ चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रिय । कार्याकार्यविभागज्ञ मृतादप्यपरो मृत । को मदं तादृशं गच्छेदुन्मादमिव चापरम् । बहुदोषमिवामूढ कान्तारं स्ववश कृती ॥ निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यं । आपादयेत् कष्टतमान् विकारान् आपादयेच्चापि शरीरभेदम् ॥ क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन । व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि । अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथाबलेन । उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान् विकारान् । पानात्ययं परमदं पानाजीर्णमथापि वा । पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम् । हिक्काश्वासशिर कम्पपार्श्वशूलप्रजागरै । विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् । तृष्णादाहज्वरस्वेदमोहातिसारविभ्रमै । विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् । छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवै । विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् । ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्यय ॥" मा नि । तत्र सन्निपातजमदात्ययो दशभेद । यथा—"उत्कर्षेण यदा लेको मध्येन द्वौ सदा हि स । उत्कर्षेण यदा लेको मध्येन द्वौ तदा हि स । उत्कर्षेण यदा द्वौ तु मध्यैनेको द्वितीयक । एको मध्येन दोष स्यात् द्वावल्पेन तृतीयक । उत्कर्षेणैक एव स्यात् अल्पेन द्वौ चतुर्थक । उत्कर्षेण यदा द्वौ तु अल्पेनैकश्च पञ्चम । एको ऽल्पेन तु मध्येन द्वौ दोषाविति षष्ठक । उत्कर्षेण समस्ता स्युरेवं भवति सप्तम । मध्येन सर्वेऽपि यदा तदा भवति चाष्टम । अल्पेन सर्वेऽपि यदा तदा तु नवम स्मृत । अल्पैकमध्यमत्कर्षो मध्यैनेक इति स्फुटा । सन्निपातस्य मुनिना दश भेदा प्रकीर्तिता ॥" वा चि ७च ।

**मदाद्या** स्त्री । रक्तझिण्टीवृत्ते ।

**मदाम्बर'**। पु। मत्तहस्तिनि।

**मदार:**। पुं। शूकरे। मृगनाभौ। वै निघ। गजे। विश्व।

**मदार्मद'**। पुं। फलिकमत्स्ये, राजयीवमत्स्ये। फलुई माछ। त्रिका।

**मदालापी (रागी) (इन्)**। पु। कोकिले। शब्दमा।

**मदाह्न**। पु। कस्तूर्य्यां। मृगनाभि। त्रिका।

**मदिर:**। पु। रक्तखदिरे। शब्द। मत्तखञ्जने। शब्दर।

**मदिरा**। स्त्री। मद्यसामान्ये। रा नि व १४। तत्पर्य्याया,—हलिप्रिया हाला परिस्रुता वरुणात्मजा गन्धोत्तमा प्रसन्ना इरा कादम्बरी कश्य मद्य प्रसन्नेरा मायिका कपिशी गन्धमादिनी माधवी कत्तोय मद कापिशायन कपिशिका वारुणी मत्ता सीता चपला कामिनीप्रिया मदगन्धा माध्वीक मधु सन्धानं आसव अमृता वीरा मेधावी मदनी सुप्रतिभा मनोज्ञा विधाता मादनी हली सरक गुणारिष्ट मधुलिका मदोत्कटा महानन्दा सीधु मैरेयं वनवल्लभा कारण तत्त्व मदिष्टा परिस्रुता कल्प स्वादुरसा गुण्डा हारहूर मार्द्वीक मदना देवसृष्टा कापिश अब्धिजा। गुणा—"हिक्काश्वासप्रतिश्यायकास वर्चोग्रहारुचौ। वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता॥" च सू २७अ। See मद्यम्। मत्त खञ्जनपक्षिणि।

**मदिरासख (व)**। पु। आम्रवृक्षे। जटा।

**मदिष्ठा**। स्त्री। मद्ये। हेच।

**मदोत्कट**। पु। मत्तगजे। कपोते। वै निघ।

**मदोत्कटा**। स्त्री। मद्ये। रा नि व १४। माधवीसुरायाम्। वै निघ। अतसीक्षुपे। तिस गाछ। रा नि व १६। इवल्यां। व्यांकुड। मद।

**मदोद्रेक**। पु। महानिम्बे। घोड़ा निम। रा नि व ९।

**मदोदग्रा**। स्त्री। मार्य्याम्।

**मद्गु**। पु। जलकाके। पानकौड़ी। च सू २७अ। प्लवजातीयपक्षिविशेषे, मत्स्यरङ्गे। माछराङा। गुणा—वातघ्न स्निग्ध वृष्टमल हृद्य रक्तपित्तहर हिमद। राज २प।

**मद्गुमूषिक:**। पु। वृषमर्कटे, पर्वमृगे। सु सू ४६अ।

**मद्गुर' (क')**। पु। मत्स्यभेदे। मागुर माछ। तन्मांसगुणा—मधुर स्निग्ध स्वादिष्ट शुक्र करं गुरु च। राज। शब्दर।

**मद्गुरसी**। स्त्री। शृङ्गीमत्स्ये। शिङ्गी माछ। शब्दर। See शृङ्गीमत्स्य।

**मद्यम्**। क्ली। तरलमादकद्रव्यविशेषे। मद। हि दारु। मद्यसामान्यगुणा—मधुराम्ल कफ वातघ्न मलकर कान्तिकरञ्च। मद्य त्रिविध गौडी माध्वी पैष्टी चेति तानि अम्लमद्यानि। अन्यच्च सौगन्धिकादिद्रव्यान्तरयोगेन विविध भवति। अन्ये तु तेषां द्वादश भेदानाहु। तानि सर्व्वाणि गौड्यादिष्वेवान्तर्भवन्तीति न पृथगुक्तम्। रा नि व १४। विशेषा स्वस्वपर्य्यायेषु मृग्या। "गौडी माध्वी तथा पैष्टी निर्य्यासा कथितापरा। इति चातुर्विधा ज्ञेया सुरास्तासां प्रभेदका। भेदेन द्वादश प्रोक्ता सुरा सौवीरका रसे। शीधुगाडी च मत्स्यण्डी गुडेन प्रभवास्त्वय। माध्वीक माधुक माध्व मधुना सयुता सुरा। पैष्टीष्वरिष्टकास्तन्तु तण्डुलप्रभवास्त्वय। मृद्वीकारससम्भूता ताल माडूसमुद्भवा। निर्य्यासा सा तु विज्ञेया तासां वच्मि गुणागुणान्॥' अत्रि २९अ। नव मद्य अजातरसप्रसादमनतिक्रान्तसंवत्सरं सर्व्वविकार जनक वातादिजनकञ्च। "हिजै स्त्रीभिस्तु न ग्राह्य यद्यप्युन्मीवयेन्मृतम्।" रा नि व १४। "नव मद्यमभिष्यन्दि गुरु वातादिकोपन। अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च।" इति नव मद्यम्। "चिरस्थित जातरस दीपन कफवातजित्। रुच्य प्रसन्न सुरभि मद्य सेव्य मदावहम्॥' इति पुराण। "तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यत। सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकाशित्वाच्च वह्निना। समेत्य हृदय प्राप्य धमनीरूर्द्धमागतम्। विक्षोभ्ये न्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्।" चतुर शीतिरिति चरक। तद्योनयो नव, धान्यफलमूल सारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनय शर्करा चेति। ताश्चतुरशीतिविधा हिंसकरा आसवा आयन्ते, यथा—फलजा षड्विंशति, मूलजा एकादश, सारजा विंशति, पुष्पजा द्वौ, काण्डजा चत्वार, त्वग्जाश्चत्वार, शर्करासवश्चैक, धान्यजाश्च षट्। इति। च सू २५अ। तत्साधने

**मदनीया** । स्त्री । मल्लिकावृक्षे । वै निघ ।

**मदनेच्छाफलः** । पु । आम्रवृक्षे । आमगाछ । रा नि व ११ ।

**मदभञ्जिनी** । स्त्री । शतमूल्याम् । श च ।

**मदमत्तः** । पु । महाकरञ्जवृक्षे । वै निघ ।

**मदमादिनी** । स्त्री । कोङ्कणदेशे गणिकारी नामप्रसिद्धे पुष्पवृक्षे । रा नि व १० ।

**मदयन्तिका (न्ती)** । स्त्री । नवमल्लिकायां । काठमल्लिका । र मा । त्रिपुरमल्लिकायां । प सु । मेप पुष्परोचि महानीलतैलि । च द र पि च । वा चि २च ।

**मदयित्नु** । स्त्री । मद्ये । मे ।

**मदरागः** । पु । कुक्कुटपक्षिणि ।

**मदरोगः** । पु । मदात्ययरोगे । रा नि व २० ।

**मदव्याधिः** । पु । पानात्ययरोगे । रा नि व २० । See मदातङ्क ।

**मदशाकः** । पु । उपोदिकायाम् । रा नि व ७ ।

**मदशौण्डः** । पु । जातीफलवृक्षे । वै निघ ।

**मदसारः** । पु । तूलवृक्षे । रा नि व ९

**मदस्थानम्** । क्ली । सुरापानस्थाने । त्रिका ।

**मदहस्तिनिकः (नी)** । पु । महाकरञ्जवृक्षे । डहर करञ्ज । रा नि व ९ ।

**मदहेतुः** । पु । धातकीवृक्षे । वैद्यक ।

**मदा** । स्त्री । धातकीवृक्षे । वै निघ भ सा चि शुण्ठीचूर्णे, कुटजचूर्णे । भद्रश्री चि पाठादिचूर्णे । कस्तूर्याम् । मृगनाभि । चि क क मदर चि ।

**मदाढ्य** । पु । तालवृक्षे । कदम्बवृक्षे । रा नि व ९ । आम्रवृक्षे । रा नि व ११ । स्त्री । लोहितझिण्ट्याम् । वकुण्टी । श च ।

**मदातङ्क. (त्यय)** । पु । पानात्ययरोगे । तस्य निदानादिकं यथा—"ये विषस्य गुणाः प्रोक्तास्तेऽपि मद्ये प्रतिष्ठिताः । तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः । किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् । अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् । प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून् । विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् । विधिना मात्रया काले हितैरन्नैर्यथाबलं । प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् । स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितं । भवेदायुःप्रकर्षाय बलायोपचयाय च । काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च । विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥ बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्द्धनश्च । सम्पाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः । आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ गच्छेदगम्यांश्च गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः । ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः ॥ चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः । कार्य्याकार्य्यविभागज्ञो मृतादप्यपरो मृतः ॥ को मदं तादृशं गच्छेदुन्मादमिव चापरम् । बहुदोषमिवामूढः कान्तारं स्ववशः कृती ॥ निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यं । आपादयेत् कष्टतमान् विकारान् आपादयेच्चापि शरीरभेदम् ॥ क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन । व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि । अत्यम्लभक्षावततोदरेण साजीर्णभुक्तेन तथाबलेन । उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान् विकारान् । पानात्ययं परमदं पानाजीर्णमथापि वा । पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम् । हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः । विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् । तृष्णादाहज्वरस्वेदमोहातिसारविभ्रमैः । विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् । छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः । विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् । ज्ञेयस्त्रिदोषजश्चापि सर्व्वलिङ्गैर्मदात्ययः ॥" मा नि । तत्र सन्निपातजमदात्ययो दशभेदः । यथा—"उत्कर्षेण यदाल्पेको मध्येन द्वौ तदा हिम । उत्कर्षेण यदाल्पेको मध्येन द्वौ तदा हिम । उत्कर्षेण यदा द्वौ तु मध्येनैको द्वितीयकः । एको मध्येन दोषः स्यात् द्वावल्पेन तृतीयकः । उत्कर्षेणैक एव स्यात् अल्पेन द्वौ चतुर्थकः । उत्कर्षेण यदा द्वौ तु अल्पेनैकश्च पञ्चमः । एकोऽल्पेन तु मध्येन द्वौ दोषाविति षष्ठकः । उत्कर्षेण समस्ताश्चेद्भवति सप्तमः । मध्येन सर्व्वेऽपि यदा तदा भवति चाष्टमः । अल्पेन सर्व्वेऽपि यदा तदा तु नवमः स्मृतः । अल्पेनैकतरास्त्र्यो मध्येनैकः इति स्फुटाः । सन्निपातस्य मुनिना दश भेदाः प्रकीर्त्तिताः ॥" वा चि ७च ।

**मदाघ्रा** स्त्री । रक्तझिण्टीवृक्षे ।

मधूरि। गान्धारीवृक्षे। रा नि व ९। यष्टिमधुनि। भा म ४भ कर्पूरी चि त्रिफलाद्यघृते। मधुरवीज पूरके। मिष्ट लेबु। रा नि व ११। नीलीवृक्षे। मे। प्रसारण्याम्। वै निघ।

**मधुपाका।** स्त्री। षड्भुजायां, खर्मुजा इति ख्यातायां फलशाकलतायाम्। रा नि व ७।

**मधुपालिका।** स्त्री। गान्धारीवृक्षे। श मा।

**मधुपीलु'।** पु। महापीलुवृक्षे। आखरोट। रा नि व ११।

**मधुपुष्प।** पु। मधूकवृक्षे। मउलगाछ। इ महुया। र मा। रा नि व २३। अशोकवृक्षे। रा नि व १०। शिरीषवृक्षे। रा नि व ९।२३। वकुलवृक्षे। रा नि व १०। दन्तीवृक्षे। रा नि व २३।

**मधुपुष्पा।** स्त्री। दन्तीवृक्षे। रा नि व ६। धातकीवृक्षे। वै निघ। नागदन्तीवृक्षे। रा नि व ५।

**मधुपुष्पी।** स्त्री। अवाक्पुष्प्यां। চোরহুলী। दन्तीवृक्षे। पुत्रञ्जीववृक्षे। वै निघ।

**मधुप्रिय'।** पु। भूमिजम्बूवृक्षे। जटा।

**मधुफल।** पु। मधुनारिकेलवृक्षे। रा नि व ११। विकङ्कतक्षुपे। श च। राजादनीवृक्षे। क्षीर्णी। रा नि व। मधुखर्जूरीवृक्षे। वै निघ।

**मधुफला।** स्त्री। मधुपाकायाम्। खर्बुजा। मातुलुङ्गवृक्षे। कपिलद्राक्षायाम्। वै निघ। वा सू १५ष। [ नि व ११।

**मधुफलिका।** स्त्री। मधुखर्जूरिकायां। रा

**मधुबहुला।** स्त्री। वासन्तीलतायाम्। বাসন্তী গাছ। रा नि व १०। गुरुयूथिकायाम्। वै निघ।

**मधुबिम्बी।** स्त्री। कुन्दुरु लतायाम्। কুঁদরুকী। वै निघ।

**मधुबीज।** पु। दाडिमवृक्ष। वै निघ।

**मधुभवा।** स्त्री। मधुशर्करायाम्। वै निघ।

**मधुमज्जा।** पु। अक्षोटवृक्षे। আখরোট গাছ। रा नि व ११।

**मधुमती।** स्त्री। गान्धारीवृक्षे। मूर्व्वायां। रा नि व ३।९। काश्मीरदेशीयनद्यां तद्गुणा —अग्निदीपनं तथा चन्द्रभागा जलवदाश्रयम्। रा नि व १४।

**मधुमत्त' (त्ता)।** पु, स्त्री। महाकरञ्जवृक्षे। रा नि व ९।

**मधुमल्ली।** स्त्री। मालतीलतायाम्। श मा।

**मधुमस्तकम्।** क्ली। पिष्टकान्नविशेषे। लक्षण —"समिता वेष्टिता मध्ये मधु दत्त्वा शृता घृते। मधुमस्तकमुद्दिष्टं तद्दृष्यं गुरु दुर्जरम्॥" राज २ प। नि। मधुना उपलिप्ते। भा म ४भ।

**मधुमक्षिका।** स्त्री। मधुकरमक्षिकाविशेषे। মৌমাছি। अम।

**मधुमाधवक।** पु। पलाशवृक्षे। वै निघ।

**मधुमाध्वीकम्।** क्ली। मधूकपुष्पमद्ये। वै निघ। मद्ये। अटीभ।

**मधुमानी।** स्त्री। मधुन अष्टपर्व्वसु। शिशी कास चि वासाकुष्माण्डे। "पिप्पलीकुडवञ्चैव मध- मानीं प्रदापयेत्।"

**मधुमारक।** पु। भ्रमरे। [ कम्।

**मधुमालती।** स्त्री। मालतीपुष्पवृक्षे। वैद्य

**मधुमाक्षिकम्।** क्ली। स्वर्णमाक्षिके। भा।

**मधुमूलम्।** क्ली। रक्तालुके। মৌ আলু। श च।

**मधुमेह।** पु। प्रमेहरोगविशेषे। মধুমেহ। निदानादि। "सर्व्व एव प्रमेहास्तु कालेनाप्रति कारिणः। मधुमेहत्वमायान्ति तदासाध्या भवन्ति हि। गुरुस्निग्धाम्ललवणान्यतिमात्रं समश्नतां। नवमन्नञ्च पानञ्च निद्रामास्यासुखानि च। त्यक्त व्यायामचिन्तानां संशोधनमकुर्व्वतां। श्लेष्मा पित्तञ्च मेदश्च मांसञ्चातिप्रवर्द्धते। तैरावृतगतिर्वायुरोज आदाय गच्छति। यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते।" च सू १७।

**मधुयष्टि।** स्त्री। इक्षौ। श च। मधूकवृक्षे। यष्टिमधुनि। वै निघ।

**मधुयष्टिका (यष्टी)।** स्त्री। यष्टिमधुनि। च सु। चि रक्त पीमरोधि। मधूकवृक्षे। इक्षौ। वै निघ।

**मधुयोनि।** स्त्री। कपिलद्राक्षायाम्। वै निघ।

**मधुरम्।** क्ली। वङ्गे। रा नि व १२। मधुरिकायां। মউরী। (মৌরি)। यष्टिमधुनि। रा नि व ६। शिह्लके। रसे। रा नि व १९। विषे। सिक्थ।

हिष: । पु । स्वनामख्यातमहाग्रामजातीयपशु
शेषे । मँहिष । हि भैस । ते दुन्नपोतु ।
तत्पर्य्याया,—लुलाप वाहद्विषन् कासर
रिभ घोरस्कन्ध पृष्ठशृङ्गी लाभशृङ्ग यमवाहन
महत्वरन् दन्शौह रक्तमल कालीतनय
गलिक कृष्णशृङ्ग अश्वारि अनूप रजस्वल
गभीर क्षीधी कलुष मत्त विषाणी बली गवली ।
स च ग्राम्यारण्यभेदेन द्विविध । तयोर्वन्यमांसम्
पलत्रु दीपन बलदञ्च । ग्राम्यमांस स्निग्ध
निद्राकर पित्तहरञ्च । रा नि व १७ ।

महिषकन्द । पु । श्वेतालुके । रा नि व ७ ।
तत्पर्य्याया,—शुभालु लुलापकन्द शुक्लकान्द
महिषीकन्द । गुणा —कटु रुच्य मुखगाद्यहर
वातश्लेष्मामयापह ।

महिष(षी)प्रिया । स्त्री । शुनीतृणे । रा
नि व ८ ।

महिषमत्स्य । पु । मत्स्यविशेषे । तल्लक्षण
गुणा—कृष्ण दीर्घकाय बलवान् महाशल्कश्च ।
तन्मांस दीपन बलवीर्य्यकरञ्च । रा नि व १० ।

महिषमस्तक: । पु । शालिधान्यविशेषे ।
शालिधान । भा पु १भा धा व । गुणा —शालिवत् ।

महिषवल्ली । स्त्री । स्वनामख्यातसोमवल्लीसम
लताविशेषे । हि छिरहिटी । म महिषवेलि ।
क ग्राम्यवलि । तत्पर्य्याया,—सौम्या अतिसौम्या
अमलवल्लिका खुरप्रभावा । गुणा —रसवीर्य्य
विपाकेषु सोमवल्लीसमा । रा नि व ३ ।

महिषासुरसम्भव । पु । अभिनवगुग्गुलौ ।
रा नि व १२ ।

महिषाक्ष (क) । पु । स्वनामख्यातगुग्गुलु
विशेषे । महिषाक्ष गुग्गुल । गुग्गुली । पलङ्क ।
रा नि व १२ । "भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति
स्मृत ।" भा म ४भा । भगन्दरे । च द कुष्ठ चि ।

महिषी । स्त्री । महिषस्त्रियाम् । तत्पर्य्याया
—मन्दगमना महाक्षीरा पयस्विनी लुलापकान्ता
कलषा सुरङ्गद्वेषिणी । औषधद्रव्ये । नि ।

महिषीकन्द । पु । स्वनामख्यातमहाकन्द
विशेषे । महिषीकन्द । यस्य गण्डे इति अनूपदेशे
प्रसिद्ध । गुणा —कटुक कफवातरोगघ्न रोचन
मुखशोषापह । रा नि व ७ ।

महिषीघृतम् । क्ली । महिषदुग्धोत्थघृते ।
भैसा घि । गुणा —"सवातविषशमन सुशीत
माहिष घृतम् । मधुर गुरु विष्टम्भि बल्य श्रेष्ठ
गुणात्मकम् ॥" अत्रि ८अ ।

महिषीतक्रम् । क्ली । महिषीघोले । मइँसेर
घोल । गुणा —"माहिष कफकृत् किञ्चिद्घन
शोफकर तथा । प्रशस्त प्लीहार्शोग्रहणीदोषिणाम्
सारिणामपि ॥" अत्रि ८अ ।

महिषीदधि । क्ली । महिषीदुग्धोत्थदधनि ।
मइँसेर दइ । गुणा —"घन माहिषमुद्दिष्ट मधुर
रक्तदोषकृत् । कफशोफहर स्वस्य पित्तकृद्वात
कोपनम् ॥" अत्रि ८अ ।

महिषीदुग्धम् । क्ली । महिषीक्षीरे । मइँसेर
दुध् । भैसा दुध । क ग्राम्यपहालु । गुणा —
सौम्य विपाकि गुरु शीतल बलद पुष्टिद वृष्य
पित्तदाहासघ्नञ्च । रा नि व १५ । "स्निग्ध
महच्छीतकर च तन्द्रानिद्राकर वृष्यतम श्रमघ्न ।
बलप्रद पुष्टिकर कफघ्न सञ्जीवन माहिषमुच्यते
पय ॥" अत्रि ८अ ।

महिषीमूत्रम् । क्ली । महिषीजले । मइँसेर
मूत । गुणा —"सर सतिक्त कटुक कषाय प्रभेदि
वातघ्न श्रम करोति । पित्तप्रकोप कुरुते सदा
च कुष्ठार्श पाण्डूदरशूलनाशनम् ॥" अत्रि ९अ ।

मही । स्त्री । गाभारीवृक्षे । कटुकायां । शिका ।
हिलमोचिकायाम् । हिञ्चे । शिका । गवि ।
नटा । मानवदेशप्रसिद्धायाम् नद्याम् । तज्जल
गुणा —'महीजलन्तु सुस्वादु बल्य पित्तहर गुरु ।"

महीकदम्ब । पु । भकदम्बे । सुवि १०अ ।

महीजम् । क्ली । आर्द्रके । रा नि व ६ । पु ।
हव । वै निघ ।

महीद्रव. । पु । धूलौ । धुलो ।

महीपद. । पु । किञ्चुलुके । केँचो । वै निघ ।

महीरूह: (रुह.) । पु । वृक्षे । शाकवृक्षे ।

महीलता । स्त्री । गण्डूपद्याम् । केँचो ।
श्रम ।

महीसुत । पु । शाकवृक्षे । सेगुन गाछ ।
रा नि व ९ ।

महेन्द्रकदली । स्त्री । कदलीवृक्षविशेषे ।
बुनो कला । गुणा —उष्णा वातासृग्दरपित्तघ्नी
च । रा नि व ११ ।

उमान्तर्दाहविवेचो ग्लानि स्यान्मासगज्वरे ॥" चिकित्सा शौत्ल्यविरेचनादि। निदा।

**मासग्रन्थि** । पु । मांसजग्रन्थिरोगे। लक्षणम्—"मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत्। स्निग्धं महान्तं कठिनं शिरानद्धं कफाकृतिम् ॥" वाउ २९ष।

**मासच्छदा** । स्त्री । मांसरोहिण्याम्। तत्पर्य्याया,—मासरोही मांसी रसायनी सुलोमा लोमकरिणी। रा नि व १२।

**मासजम्** । क्ली । मेदोधातौ। हे च।

**मासजाति** । स्त्री । मृग विष्किर प्रतुद प्रसह बिलेशय महामृग जलचर मत्स्यादासु मांसजातिषु अष्टविधासु। प म।

**मासजालम्** । क्ली । जालवन्मांसे। मांस शिरा स्नायु वा जालं। "चत्वारि मांसजालानि, तानि मणिबन्धगुल्फसंश्रितानि परस्परसन्निबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति यैर्गवाक्षितमिदं शरीरम् ।' सु शा ५ष।

**मासतान** । पु । कण्ठगत मुखरोगभेदे । लक्षणं यथा—"प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण। स मांसतानः कथितो ऽवलम्बी प्राणप्रणुत्सर्व्वकृतो विकारः॥" सु नि १६ष।

**मासतेज** । क्ली । मेदोधातौ। हे च।

**मासदलन** । पुं । शोण्डबरक, रक्तरोहितक वृक्षे। श च।

**मासद्रावी** (इन्) । पु । अम्लवेतसे। टैथरुल। रा नि व ६।

**मासधरा** । स्त्री । तन्नामकप्रथमकलायाम् । "यस्यां मांसे शिराखायुधमनीस्रोतसां प्रताना भवन्ति।" स्थूलापरनामसमानत्वचि। या व्रीहिद्वयप्रमाणा भवति। सु शा ४ष।

**मासपचनम्** । क्ली । मांसपाके। सु।

**मासपाक** । पुं । शुक्ररोगविशेषे। लक्षणं —"शीर्यन्ते। यत्र मांसानि यत्र सर्व्वाश्च वेदना। विद्यात्तं मांसपाकन्तु सर्व्वदोषकृतं भिषक्॥' सु नि १४ष।

**मासपुष्टि(ष्पि)का** । स्त्री । भ्रमरारिपुष्पवृक्षे। भ्रमरमारी इति भाषाये प्रसिद्धा। रा नि व १०।

**मासपेशी** । स्त्री । मांसखण्डे । मांसस्य भेद। सु श्‌ ६ष। "बुद्बुदः सप्तरात्रेण मांसपेशी भवेत्ततः। द्विसप्ताहात् भवेत पेशी रक्तमांसचिता दृढा। बीजस्याङ्कुरा पेश्यः पञ्चविंशतिरात्रतः॥" सुखबोध। मांसपेशीराह—'यथार्थमुत्पला युक्तौ यातु स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥" मांसपेश्यः शरीरे पञ्चशत सङ्ख्यका। तासां चतुःशतानि शाखासु। कोष्ठे षट्षष्टि। ग्रीवाया ऊर्द्ध्वगाश्चतुस्त्रिंशत्। स्त्रीणान्तु विंशत्यधिकपञ्चशतानि। तात्र गर्भाशयगर्भमार्ग योनिस्तनेषु तिष्ठन्ति। पेशीनाञ्च सम्मापि—इहिना शिरा स्नायुस्थि पर्व्वसन्धय पेश्याहता सबला भवन्ति। शाखासु तत्सङ्ख्या यथा—पादाङ्गुलीषु १५। पादाग्रे १०। पादोपरिकूर्च्चसन्निविष्टा १०। गुल्फतलयो १०। गुल्फजानुनोरन्तरे २०। जानुनि ५। ऊरौ २०। वङ्क्षणे १०। एवमेकस्य सक्थिनि १००। एतेनेतरसक्थिबाहू व्याख्यातौ। कोष्ठेषु यथा—गुदे ३। शेफसि १। सेवन्यां १। वृषणयो २। स्फिचो १०। वस्तिमूर्द्धनि २। उदरे ५। नाभौ १। पृष्ठोर्द्ध्वमयत पञ्च पञ्च दीर्घा। १०। पार्श्वयो ६। वक्षसि १०। अक्षकांसौ प्रति समन्तात् ७। हृदि २। यकृति २। प्लीह्नि २। उण्डुके २। ग्रीवोर्द्ध्वं ३४। यथा—ग्रीवायां ४। हन्वो ८। काकलकयो १। गले १। तालुनि २। जिह्वायां १। ओष्ठयो २। नासायां २। नेत्रयो २। गण्डयो ४। कर्णयो २। ललाटे ४। शिरसि १। स्त्रीणां अधिका विंशति। यथा—गर्भाशये ३। शुक्रार्त्तवप्रवेशिन्यां ३। योनावभ्यन्तरे सुखाश्रिते प्रसृते २। योनिकर्णिके २। स्तनयो १०। इति। भा। सु शा ५ष।

**मासफल** । पु । तरम्बुजवृक्षाम्। उवमूलेत्र लता। रा नि व ०।

**मासफला** । स्त्री । वार्त्ताकाम्। रा नि व ०।

**मासमाषा** । स्त्री । माषपर्ण्याम्।

**मासरक्ता** । स्त्री । रोहिण्याम्। मां मरोहिण्यै। वै निघ।

**मासरज्जु** । स्त्री । मांसनिबन्धनवायौ। तावतस। "महत्यो मांसरज्ज्वस्तत्र पृष्ठवंशमुभयत पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे।" सु शा ५ष।

**मासरस** । पुं । मांसद्रवे। मां स्मद्र झोल। गुणा—"रसो मांसस्य चक्षुषो हृद्य माषवर्द्धन।

तत्पर्य्याया,—मक्षीका भम माचिका गन्धलोलुपा पतङ्गिका पुत्तिका अवतोत्पन्ना वमनीया पलङ्कषा वर्म्मणा नीलमक्षिका। चिका। भा। सा षड्विधा कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिका चेति। ताभिर्दष्टे दाहशोफौ भवतः। स्थालिकाकाषायीभ्यामेतद्दष्टे पिडकाश्च सोपद्रवा भवन्ति। सु कल्प ८ अ।

**मक्षिकामलम्।** क्ली। सिक्थके। मम। रा नि व १३।

**मक्षिकावान्तम्।** क्ली। मधुनि।

**मक्षिकाविट्।** स्त्री। मक्षिकामले। मांछिर विष्ठा। वै निघ।

**माक्षल्यः।** पु। अश्वे।

**मांसम्।** क्ली। शरीरे रक्तजतृतीयधातौ। मांस। तत्पर्य्याया,—पिशितं तरसं पललं पलं क्रव्यं आमिषं असृज नाडलं कीरम्। रा नि व १८। तत्तु गर्भस्थस्याष्टमिमासे भवति। मुग्धबोध। तत्स्वरूपं यथा—"शोणितं स्वाग्निना पक्वं वायुना च घनीकृतम्। तदेव मांसं जानीयात्।" लेपश्च तत्कर्म्म। भा। गुणा—"सत्त्वं मांसं वातविध्वंसि हृद्यं बल्यं रुच्यं वृष्यं तच्च मांसं। देशस्थाना-द्यामयस्य स्वभावे भूयो नानारूपतां याति नूनम्॥" इति साधारणदेशमांसगुणा। रा नि व १७। मांसरससाधनं यथा—घने मांसरसे कर्त्तव्ये मांसस्य द्वादशपलं दत्त्वा पक्तव्यम्। तदनु तनुके रसे कर्त्तव्ये मांसस्य षट्पलं पानीयं प्रस्थमात्रमेव दातव्यम्। अच्छतरे रसे कर्त्तव्ये प्रस्थे जले मांसस्य पलं दत्त्वा एतन्मांसं पिष्टा प्रस्थार्द्धशेषस्थितजले पक्त्वा यथारूपं स्थाप्य वस्त्रेण छानयित्वा यूषं कार्य्यं। "द्रव्यतो द्विगुणं मांसं सर्व्वतो द्विगुणं पयः। पादस्थं संस्कृतं शेषं षडङ्गो यूष उच्यते। पलानि द्वादशप्रस्थे घनोऽयं तनुके तु षट्। मांसस्य रटकं कुर्य्यात् पलमच्छतरे रसे॥" प प २ ख। त्याज्यमांसं यथा—तत्र पूतिगन्धव्याधितविषसर्पहतदिग्धविद्ध जीर्णकृशबालानामसात्म्यचारिणां मांसानि अभक्ष्याणि दोषकराणि च भवन्ति। "बालस्य हृद्यं कृशस्य रोगिणो विषादिदग्धस्य मृतस्य चाम्बुषु। त्याज्यं समादे पिशितन्तु सर्व्वं विशेषतः शुष्कं च चिरस्थितञ्च॥" रा नि व १७। "मृतञ्च व्याधितं शुष्कं वृद्धं बालं विषैर्हतम्। अगोचरहतं व्याड-मृदितं मांसमुत्सृजेत्॥" राज २प। उपादेय मांसं यथा—"स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गमेषु महाशरीरेषु अल्पशरीरा अल्पशरीरेषु महाशरीरा प्रधानतमा। एवमेकजातीयानां महाशरीरेभ्यः कृशशरीरा प्रधानतमा॥" सु सू ४६ अ। पुनः पूर्व्वभागो योषितोऽधोभागश्च गुरुः। पक्षिणः उरोग्रीवं विशेषेण गुरु। सु सू ४६ अ। "गुरुमत्स्या-सहभुजो ये चोपचितमेदसः। एकदेशेऽपि पूर्व्वार्द्धं शशाणां पक्षिणां परम्। तैलसिद्धमांसगुणा—"मांसं यत्तैलसिद्धं वीर्य्योष्णं पित्तलं कटु। अग्निसन्दीपनं हृद्यं दृष्टिनुत् पुष्टिकृल्लघु॥" घृतसिद्धमांसगुणा—"मांसन्तु घृतसिद्धं दृष्टिदं पुष्टिकृल्लघु। प्रीणनं सर्व्वधातूनां विशेषात्सुखशोषिणाम्॥" शुष्कमांसगुणलक्षणे—"परिशुष्कं स्थिरं स्निग्धं हृद्यं प्रीणनं गुरु। पित्तघ्नं बलमेधाग्निमांसौजःशुक्रवर्द्धनम्। मांसं बहुघृते पक्वं सिद्धशीतान्वितं गुरु। क्षीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते॥"। प्रदिग्धमांसलक्षणगुणा—"तदेव घनतक्राढ्यं प्रदिग्धं तु विशालकम्। प्रदिग्धं बलमांसाग्निवर्द्धनं कफपित्तजित्॥" राज २प। पु। कीटे। शर।

**मांसकच्छपः।** पुं। तालुगतमुखरोगे। See कच्छप।

**मांसकर्णी।** स्त्री। वरद्यादिकीटे। वक्रगुरु इति। वा ख।

**मांसकारि।** क्ली। रक्ते। हे च।

**मांसकीलकः।** पु। तन्नामकगुह्यरोगभेदे। अर्शोभेदे वा। लक्षणं यथा—"अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलका। पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभा। तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रं पुंस्त्वं भगार्त्तवम्॥" वा उ ३३ अ।

**मांसकेशी (इन्)।** पु। पादरोगभेदयुक्ते अश्वे। "केशाकाराणि मांसानि यस्य स्युः खलजानि च। मांसकेशीति तं विद्यात्॥" ज द २८ अ।

**मांसकोथ।** पु। मांसगलने। वा उ २८ अ।

**मांसखुर।** पुं। पादरोगविशेषयुक्ते अश्वे। लक्षणं यथा—"बहुमांसखुरश्चैव अश्वो मांसखुरी हयः।" ज द २८ अ।

**मांसगज्वरः।** पु। ज्वरविशेषे। तल्लक्षणम्।—"पिपीलिकाभिरिव तथा सूक्ष्मसूत्रप्रदीपता।"

मांसरोहिण्योभेदे । रा नि व १२ । बदन्याम् । काकोल्याम् । मे ।

**मासेष्टा** । स्त्री । वल्गुलायाम् । रा नि व ४ ।

**मासोदकम्** । क्ली । मांसरसे ।

**मासौदनम्** । क्ली । मांसमिश्रौदने । मांसेर पोलाओ । गुणा —"मांसौदनं धातुवृद्धिकरं स्निग्धं गुरु स्मृतम् ।" वै निघ । च ।

**मास्याह्वया** । स्त्री । जटामांस्यां । सु चि २४ ।

**माकन्द** । पु । आम्रवृक्षे । भा ।

**माकन्दी** । स्त्री । स्वनामख्यातपत्रशाकवृन्ते । हि मादानी, माइनी । म मायिनी । क मागिनी तत्पर्य्याया,—मदमूला मादिनी गन्धमूलिका । गुणा —कटु तिक्ता मधुरा किञ्चिन्तवला दीपनी रुच्या पथ्या वर्षासु न सितासिका च । रा नि व ७ । आमलकीवृक्षे । म । पीतचन्दने । हरिचन्दन । श मा । [ र मा ।

**माकरा** । स्त्री । मदनवृक्षवृक्षे । नवआफल गाछ ।

**माकुलि** । पु । कृष्णसर्पेण गोनसा वैपरीत्येन वा जाते सर्पे । सु कल्प ४थ ।

**मागधम्** । क्ली । पिप्पलीमूले । सौवर्चललवणे । वै निघ । पु । स्थूलजीरके । प सु । जीरके । रा नि व ६ । शुक्लजीरके । म । [ व्या वि ।

**मागधिका** । स्त्री । पिप्पल्याम् । वै निघ वा

**मागधिमूलम्** । क्ली । पिप्पलीमूले । प्र वाङ्गालगुर्ड इष्यम् ।

**मागधी** । स्त्री । पिप्पल्याम् । प सु । रा नि व ६।२३ । मेघ सतसञ्जीवन्या । शर्करायां । जटा । सूक्ष्मैलायां । यूथिकायां । श्वेत यूँई । रा नि व १० । जीरके । रा नि व २३ । शतपुष्पाविशेषे । वै निघ । शालिधान्यविशेषे । सा च कफवातला । अवि १५ष ।

**मागधीजटा** । स्त्री । पिप्पलीमूले । वै निघ ।

**मागधीशिफा** । स्त्री । पिप्पलीमूले । सम्र न्त्र चि त्रिभुवनकीर्त्तिरसे ।

**मागधेया** । स्त्री । स्वर्णजीवन्याम् । वै निघ ।

**माघमा** । स्त्री । कर्कटे । वै निघ ।

**माघवती** } **माघोनो** } स्त्री । पुर्व्वदिशि । रा नि व २१ ।

**माघ्यम्** । क्ली । कुन्दपुष्पे । कुँद फुल । र मा ।

**माङ्गल्यम्** । क्ली । स्वर्णे । कपित्थफले । दधनि । नारिकेले । जीवके । स्थलपद्मे । मसूरके । मधुके । रा नि व २३ । पिप्पलीमूले । रीठाकरञ्जे । ऋषभके । हरिद्राद्वये । वै निघ ।

**माङ्गल्य** । पु । विल्ववृक्षे । र मा ।

**माङ्गल्यकाया** । स्त्री । दूर्व्वायाम् । हरिद्रायाम् । ऋद्धौ । माषपर्ण्याम् । गोरोचनायाम् । हरीतक्याम् । वै निघ ।

**माङ्गल्यकुसुमा** । स्त्री । शङ्खपुष्प्याम् । वै निघ ।

**माङ्गल्यप्रवरा** । स्त्री । वचायाम् । वै निघ ।

**माङ्गल्या** । स्त्री । गोरोचनायाम् । शमीवृक्षे । जीवन्त्याम् । वै निघ ।

**माङ्गल्यागुरु** । पु । अगुरुभेदे । केदारदेश प्रसिद्ध । गुणा —शीतगुण स सुगन्धियोगवाह श्रेष्ठश्च । रा नि व १२ । [ व ५ ।

**माङ्गल्यार्हा** । स्त्री । त्रायमाणायाम् । रा नि

**माचल** । पु । रोगे ।

**माचिका** । स्त्री । आम्रातकवृक्षे । मोइया इति पश्चिमदेशप्रसिद्धवृक्षे । तत्पर्य्याया,—अम्बिका अम्लष्ठा अम्लालिका अम्बिका मधुरविदला केशी सुवहा बालमूलिका । गुणा —"अम्ला रसे पाके कषाया शीतला लघु । पक्वातीसारपित्तास्र कफकण्ठामयापहा ।" भा । पाठायाम् । आक्-नादि । च चि ८म । मक्षिकायाम् । त्रिका ।

**माची** । स्त्री । काकमाचीक्षुपे । गुड्कीउली । वै निघ ।

**माची(टी)कम्** । क्ली । देवदारुणि । रस र प्रद चि पुष्यानुगचूर्णे ।

**माचीपत्रम्** । क्ली । सुरपर्णनामपत्रशाके । रा नि व १० ।

**माजल** । पु । चासनामकपक्षिविशेषे । श च ।

**माञ्जरिक** । पु । अपामार्गक्षुपे । रा नि व ४ ।

**माटामक** । पु । तरक्ष्मुसदृशलताफलभेदे । "सेटुमाटामकौ समौ ॥"

**माटी** । स्त्री । पर्णदलशिरायाम् । पानेर शिर । वै निघ ।

**माठ** । पु । सुनिषण्णकशाके । सुसुनि शाक । वै निघ ।

नि व १२। महाश्रावणिकायाम्। रा नि व ५। क्षुद्रकुमार्य्याम्। वै निघ। गवि। मे।

**मातङ्गा**। स्त्री। नागबलायाम्। वै निघ।

**मातुलः (क)**। पु। धुस्तूरवृक्षे। धुतुरा गाछ। मदनवृक्षे। कलायविशेषे। मे। रा नि व १०। त्रिका।

**मातुलद्रुम**। पु। धुस्तूरवृक्षे। शाल्मलीवृक्षे। शिमुल गाछ। वै निघ।

**मातुलपुत्रक**। पु। धुस्तूरफले। श्वेत धुतुरार फल। अम।

**मातुलपुष्पम्**। क्ली। धुस्तूरपुष्पे। वै निघ।

**मातुलानी**। स्त्री। प्रियङ्गुलतायाम्। श च। शणबीजे। हे च। भङ्गायाम्। सिद्धि। कलायै। मटर। मे।

**मातुलाहि**। पु। सर्पविशेषे। मालुया सांप, केउटिया सांप। अम।

**मातुली**। स्त्री। शणबीजे। भङ्गायां। श च।

**मातुलुङ्ग (क)**। पु। (Citrus medica) छोलङ्गवृक्षे। टावा नेबुर गाछ। हि बीजौरा। म माहुलिङ्ग। क मादला। तै मादीफलपुचेट्टु। उत् कलबा। तत्पर्य्याया,—फलपूर फलपूरक बीजपूर बीजपूर्ण रुचक अफल लुकुष पूर पूरक अम्लकेशर छोलङ्ग। प सु। सु सू ३६ अ। च द ज्व चि। "अरुचौ मातुलुङ्गस्य केशरम्।" च सू ४अ। गुणा—"स्यान्मातुलुङ्ग कफवातहन्ता हन्ता क्रमीणां जठरामयघ्न। स दूषितरक्तविकारपित्तसन्दीपन शूलविकारहारी।" तत्फलगुणा—"श्वासकासारुचिहर तृषाघ्न कण्ठशोधनं। दीपन लघु रुच्यञ्च मातुलुङ्गमुदाहृतम्॥" अम्लकटूष्ण श्वासकासघ्न पाचक कण्ठशोधन दीपन लघु हृद्य रुचिकृच्च। तच्च फल बाल वातपित्तकफरक्तकरम्। मध्य फल तादृशमेव। पक्व फल वर्णकर हृद्य पुष्टिकरं बलकर शूलहरम् अजीर्णनाशनं विबन्ध वात कफ श्वासाग्निमान्द्यहर कासारोचकशोफघ्नञ्च। त्वक तिक्ता दुर्जरा क्रमिकफवातघ्नी च। तत्करङ्ग स्वादु शीतं गुरु स्निग्ध वातपित्तहरञ्च। तन्मध्यमुष्ण शूलविनाहर मरोचकघ्नञ्च। तत्केसरं दीपन लघु संग्राहि गुल्मार्शोघ्नञ्च। तद्दकेसर पित्तमारुतघ्न हृद्य बलकर हृद्य रक्तमांसबलदञ्च। स्वरस अरुचौ श्वासकासयोश्च हित। तथा शूले अजीर्णे मन्दाग्नौ वातकफे च हित। तत्कटाह कफकृत् दुर्जरञ्च। तत्पुष्प तिक्तम्। बीज गुल्मघ्नम्। अत्रि १०अ। तत्केसर वातघ्नम् उदररोगघ्न दीप्यमघ्नञ्च। बीजम् तिक्त कफाश शोथहरञ्च। रा नि व ११। तन्मांस बृंहण शीतल गुरु वातपित्तजित्। केसर लघु सग्राही शूलगुल्मोदरघ्नञ्च। च द पित्त चि कण्ठतालुशोषप्रलेपे। "केसर मातुलुङ्गस्य।" च द वातरक्त भग्न चि। "मातुलुङ्गफल केशरी घृत।" बीजम् उष्ण क्रमिश्लेष्मवातघ्न गर्भद गुरु च। पुष्प वातल ग्राहि लघु रक्तपित्तहर शूलाजीर्णविबन्धाग्निमान्द्ये हितम्। तद्रस अरुचि श्वासकासेषु हित अतिमधुर हृद्यञ्च। मद व ६।

**मातुलुङ्गशिफा**। स्त्री। मातुलुङ्गमूले। छोलङ्ग नेबुर मूल। च द कफज्व चि। "मातुलुङ्गशिफाविश्व।"

**मातुलुङ्गा (ङ्गिका,ङ्गी)**। स्त्री। जम्बीरभेदे। शरबती लेबु। हि शालारा। रा नि व ११। भा म ३भ मू घा चि। सियो विमू चि प्रमीलिकायचूर्णे।

**मातृक**। पु। ऋषभके। प मु। स्त्री (का)। ऋषभके। माटरुपकै। वै निघ।

**मातृकाकुन्द**। पु। स्त्रीगुदजव्रणविशेषे। वा उ अ। See गुदकुन्द।

**मातृकावह**। पु। पदकीटे। पेदो पोका। "मातृकावहकीटज।" प्रयोग। च द ग ग चि।

**मातृनन्दन (न्दी,इन्)**। पु। महाकरञ्जे। वै निघ। गुच्छकरञ्जवृक्षे। रा नि व ९।

**मातृनिन्दक**। पु। प्रतुदजातीयपक्षिणि। सु म ४६अ।

**मातृमण्डलम्**। क्ली। नेत्रयोर्मध्यभागे। तत्र आसन्नमरणो न पश्यति। अत्रि।

**मातृवाहक**। पु। कीटभेदे। पानगुड़ा वा पेदो पोका।

**मातृवाहिनी**। स्त्री। वल्गुलापक्षिणि। रा नि व १९।

**मातृसिंही**। स्त्री। वासकवृक्षे। श र।

**मात्रा**। स्त्री। अन्नपानादिपरिमाणे। च सू १अ। भोजनादिपरिमाणे। कालपरिमाणे। अम। द्रव्यविशेषे मात्रामाह पुष्करश्रवत—"आढ़कमाढ़

पला मात्रा कुडवस्य प्रमाणत । मधुतैलघृतादेश्च द्रवद्रव्ये चतुष्पलम् ॥" विश्वामित्र—"सुरागुग्गुलु वाह्लीकत्रिफलारिष्टमागरे । कुष्माण्डार्द्रकनिम्बानां कुडवश्चाष्टभि पलै ॥" "सर्पि खण्ड जल क्षीद तैल क्षीरासवादिषु । अष्टौ पलानि कुडवो नारिकेले च शस्यते ॥" सा कौ । तथाच भेद । "गुडरामठशुण्ठीनां मासकुष्माण्डयोरपि । गुडूच्या गुग्गुलोश्चैव प्रस्थ षोडशभि पलै ॥" भोज—"यच्चूर्णे गुटिकायाश्च कर्त्तव्या गुल्मरोगिणाम् । क्षीरहिङ्गुजमोदाम्लवेतसैस्ता न केवला ॥ क्रोष्टुशीर्षादिरोगेषु जटायुर्द्विगुणो मत । प्रमेहादिषु रोगेषु मात्रातोऽष्ट प्रशस्यते ॥"

**मादक:** । पु । अहिफेण । आफिम् । प सु । हरिणभेद । वै निघ । दात्यूहपक्षिणि । श मा । स्त्री (का) । भङ्गायाम् । सिद्धि, भाङ् । वै निघ ।

**मादनम्** । क्ली । लवङ्गे । रा नि व १३ । पु । मदनवृक्षे । त्रि । मदजनके ।

**मादनी** । स्त्री । माकन्याम् । रा नि व ७ । विजयायाम् । सिद्धि । भा ।

**मादिनी** । स्त्री । शक्राशने । सिद्धि । वै निघ ।

**माद्री** । स्त्री । कृष्णातिविषायाम् । काल आतइच । रा नि व ६ । धा चि ८।१२४ । वा उ २४ ।

**माधव** । पु । कृष्णमुद्गे । प सु । रा नि व १६ । वैशाखमासे । त्रिका । मधूकवृक्षे । वसन्तकाले । जीरकवृक्षे । क्ली । मधूकशीटे । वै निघ । च द सामान्य चि ।

**माधवक** । पु । मधूकमद्य । मौलेर मद ।

**माधवकर:** । पु । रुग्विनिश्चयग्रन्थकारे । रसकौमुदीकारे च ।

**माधवद्रुम.** । पु । आम्रवृक्षे । रा नि व ११ ।

**माधवप्रियम्** । क्ली । पीतचन्दने । हरिचन्दन । रा नि व १२ । [भ ।

**माधविका** । स्त्री । माधवीलतायाम् । श टी

**माधवी** । स्त्री । माधवीलतायां । रा नि व १० । महाद्रोणपुष्पे । रा नि व ४ । वासन्तीपुष्पवृक्षे । रा नि व १०।१२ । शतपर्व्वे । रा नि व २३ । मधुशर्करायाम् । रा नि व १४।२३ । तुलसीवृक्षे । वाराहीकन्दे । दुग्धफेनिकायाम्, दुग्धपाषाणे । माध्वीसुरायाम् । वै निघ । मदे । त्रिका ।

**माधवीमूलम्** । क्ली । माधवीलतामूले । रस र स्तनरोग चि । "पीतेन माधवीमूल पीत स्त्रीमध्यकार्श्यकृत ।"

**माधवीलता** । स्त्री । स्वनामख्यातलतायाम् । माधवी फुलेर गाछ । गुरुविन्द, माधवी, इन्द्र गोचे, इति महाराष्ट्रकर्णाटदेशयो प्रसिद्धा । तै माधवतीगे, पुव्व लगुरिविन्द । तत्पर्य्याया —अतिमुक्त अतिमुक्तक पुण्ड्रक वासन्तीलता माधवीलता चन्द्रवल्ली सुगन्धा भ्रमरोत्सवा भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणा वसन्तदूती लतामाधवी । गुणा —कटुका तिक्ता कषाया मदगन्धयुक्ता पित्तकासव्रणघ्नी दाहशोषघ्नी च । रा नि व १० । अपिच—"माधवी स्यात्तु वासन्ती पुण्ड्रकी सुण्डकोऽपि च । अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सव ॥ माधवी मधुरा शीता लघ्वी दोषत्रयघ्नी च ॥" भा ।

**माधवेष्टा** । स्त्री । वाराहीनाममहाकन्दशाके । वै निघ ।

**माधवोचितम्** । क्ली । कक्कोले । कक्कोल फल । रा नि व १२ ।

**माधवोद्भव:** । पु । राजादनीवृक्षे । क्षीरी गाछ । रा नि व ११ ।

**माधुतैलिक:** । पु । तन्नामकवस्तिविधौ । सु चि ३८अ ।

**माधुरम्** । क्ली । मल्लिकापुष्पे । त्रिका ।

**माधुरी** । स्त्री । अजमोदायाम् । रा नि व ६ । द्राक्षासवे । मधुरतायाम् । वै निघ ।

**माधूकसार:** । पु । मधूकवृक्षसारे । मउल गाछ । सु सू १५अ शिरोविरेचने ।

**माधूकी** । स्त्री । मधूकपुष्पजातमद्ये । "मधूकपुष्पजाता या माधूकी सा निगद्यते ।" गुणा —माधूकी मादिनी बल्या पुष्टिकृत् कामवर्द्धिनी ।

**माध्वकम्** । क्ली । माध्वीके । वै निघ ।

**माध्वाम्र** । पु । बहुरसालाम्रवृक्षे । थोन आमेर गाछ । रा नि व ११ ।

**माध्वी** । स्त्री । मधुखर्ज्जूरीवृक्षे । रा नि व ११ । मधुरकण्टकमत्स्ये । श र । पुष्परसादिमधुकृते मद्ये । "पुष्पद्रवादिमधुसम्भवा तु माध्वी ।" गुणा —मधुरा हृद्या वातपित्तहृत् मात्रुणा पाण्डु

कामनागुन्मार्शमिदघ्नी च । रा नि व १४ । पुष्परसे । मधुशर्करायाम् । वै निघ । मद्ये । त्रिका ।

**माध्वीकम्** । क्ली । मध्वासवे । चद ताम्रा नि । मधूकपुष्पकृतमद्ये । अम । मद्ये । रा नि व १४ । द्राक्षाकृतमद्ये । द्राक्षामद्य, पोर्ट । गुणा —"माध्वीकं शीतलाम्लं मधुरमपि तथा संकषायोगकञ्च रूच्यात् पित्तामयानां शमनमपि तथा चातिसारं प्रमेहान् । गुल्मानाहोपमर्दं जरयति सकलं दीपयत्यग्निमाद्यम् तथ्याद्यानामवाम्लशमनमपि तथा हन्ति सर्वांश्च रोगान् ॥" चवि । १८च । पु । निपाये । शिम् । पम् । त्रिका ।

**माध्वीकफल** । पुं । मधुनारिकेलवृक्षे । रा नि व ११ ।

**माध्वीका** । स्त्री । श्वेतनिष्पावे । श्वेत शिम् । रा नि व १६ ।

**माध्वीमधुरा** । स्त्री । मधुखर्जूरिकायाम् । पिण्डीखेजुर । रा नि व ११ ।

**माध्वीशर्करा** । स्त्री । मधुशर्करायाम् । मधुर चिनि । ता अष्टविधा मधूनामष्टविधत्वात् । गुणा अपि तत्तन्मधुतुल्या भवन्ति । रा नि व १४ ।

**माध्वीसिता** । स्त्री । मधुशर्करायाम् । मधुर चिनि । रा नि व १४ ।

**मानम्** । क्ली । परिमाणे । परिमाण, ओजन । "मानाधीनमितमाचार्या भेषजानां प्रकल्पनम् । मेनिरे यत्ततो मानमुच्यते पारिभाषिकम् ॥" तच्च द्विविध कालिङ्गमागधभेदेन । तयोर्मागधं श्रेष्ठम् । "कालिङ्गान्मागधं श्रेष्ठम् ।" इति । तद्यथा,— त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणुभि । त्रसरेणोस्तु पर्यायनाम्ना वंशी निगद्यते ॥ षड्वंशीभिर्मरीचि स्यात् षण्मरीच्यस्तु सर्षप । षट्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभि । गुञ्जाभि र्दशभि शोक्तो माषको ब्रह्मणा पुरा ॥ हेमश्च माषकश्चैव पर्यायस्तस्य कीर्त्तित ॥ माषस्तु पञ्चभि षड्भिस्तथा सप्तभिरष्टभि । दशभि द्वादशभिश्च रक्तिभि षड्विधो मत ॥ चरकस्य तु माषस्तु दशगुञ्जाभिरेव च । चरकस्य तु चार्द्धेन सुश्रुतस्य तु माषक ॥ माषैश्चतुर्भि शाण स्याद्धरण स निगद्यते । टङ्क स एव कथितस्तद्द्वय कोल उच्यते ॥ क्षुद्रको वटकश्चैव द्रङ्क्षण स निगद्यते । कोलद्वयञ्च कर्षं स्यात् स प्रोक्त पाणिमानिक ॥ अक्ष पिचु पाणितलं किञ्चित् पाणिश्च तिन्दुक । विडालपदकञ्चैव तथा षोडशिका मता ॥ करमध्यो हंसपद सुवर्णं कवडग्रह । उदुम्बरञ्च पर्यायै कर्ष एव निगद्यते ॥ स्यात् कर्षाभ्यामर्द्धपल शुक्तिरष्टमिका तथा । शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ॥ प्रकुञ्च षोडशी बिल्वं पलमेवात्र कीर्त्त्यते ॥ पलाभ्यां प्रसृति ज्ञेया प्रसृतञ्च निगद्यते । प्रसृतिभ्यामञ्जलि स्यात् कुडवोऽर्द्धशरावक ॥ अष्टमानञ्च स ज्ञेय कुडवाभ्यां च मानिका । शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणै ॥ शरावाभ्यां भवेत् प्रस्थश्चतुष्प्रस्थैस्तथाढकम् । भाजनं कंसपात्रञ्च चतुष्षष्टिपलञ्च तत् ॥ चतुर्भिराढकैर्द्रोण कलशो नल्वणोऽर्म्मण । उन्मानञ्च घटो राशिर्द्रोणपर्याय संज्ञित ॥ द्रोणाभ्यां शूर्पकुम्भौ च चतुष्षष्टिशरावक । शूर्पाभ्याञ्च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥ द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभि । चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ पलानां द्विसहस्रञ्च भार एक प्रकीर्त्तित ॥ "तुलापलशतं ज्ञेया सर्व्वत्रैष विनिश्चय । माषटङ्काक्षबिल्वानि कुडव प्रस्थमाढकम् । राशिर्द्रोणी खारिरिति यथोत्तरचतुर्गुणा । गुञ्जादिमानमारभ्य यावत् स्यात् कुडवस्थिति । द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् । प्रस्थादिमानमारभ्य द्विगुणन्तु द्रवार्द्रयो । मानं तथा तुलायास्तु द्विगुणं न क्वचित् स्मृतम् ॥" प प्र १ख ।

**मानकम्** । क्ली । शरावे । ১ সের । वै निघ । ज्व चि चन्दनाद्यतैले । पु । माणके । মাণকচু । र मा । मालाकन्दे । वै निघ ।

**मानकच्चार** । पु । माणकदण्डपरिचारे । মাণডাঁটার ক্ষার । भैष ।

**मानत** । पु । पर्पटके । ক্ষেৎপাবড়া । वै निघ ।

**मानद्रुम** । पु । शाल्मलीवृक्षे । वा सू १५च प्रियङ्ग्वादिव । "मानद्रुमो मोचरस ।"

**मानधानिका** । स्त्री । त्रपुष्याम् । শশা, কাঁকুড় । श मा ।

**मानभाण्डम्** । क्ली । परिमाणभाण्डे । মাপের ভাঁড় । च सू १५च ।

**मानमूताफल** । पुं । पटोलवृक्षे । वै निघ ।

**मानव** । पु । मनुष्ये । अम ।

**मानवकोत्तम** । पु । शिग्रौ । रा नि व १८ ।

ता मावा कुडवस्य प्रमाणत । मधुतैलघृतादिष ुष्कद्रव्ये चतुष्पलम् ॥' विश्वामित्र—"मुद्गमाषगुल ाह्लीकलिफलारिष्टनागरैः । कुष्माण्डार्द्रकनिम्बानां कुडवश्चाष्टभि पलैः ॥" "सर्पि खण्ड जल वौद्र तैल चीरासवादिषु । अष्टौ पलानि कुड़वो ारिकेले च शस्यते ॥" सा कौ । तथाच भेद । 'गुडरामठगण्ढीनां मासकुष्माण्डयोरपि । गुडूच्या ुग्गुलोश्चैव प्रस्थ' षोडशभि पलैः ॥" भोज— "यच्चूर्णे गुटिकायाश्च कर्त्तव्या गुणरोगिणाम् । वौरदिड्गजमोदाम्लवेतसैला न केवला ॥ क्रोष्टु शीर्षादिरोगेषु जटायुर्हि गुणो मत । प्रमेहादिषु ोगेषु मात्रातोऽर्द्धं प्रशस्यते ॥"

ादकः । पुं । अहिफेण । आफिम् । प मु । हरिणभेदे । वै निघ । दालूहपचिषि । श मा । स्त्री (का) । भङ्गायाम् । सिद्धि, भाङ् । वै निघ ।

ादनम् । क्ली । लवङ्गे । रा नि व २२ । पु । मदनवृक्षे । त्रि । मदजनके ।

ादनी । स्त्री । माकन्द्याम् । रा नि व ७ । विजयायाम् । सिद्धि । भा ।

ादिनी । स्त्री । मत्तकाशिनी । सिद्धि । वै निघ ।

ाद्री । स्त्री । कृष्णातिविषायाम् । काल आतईच । रा नि व ६ । धा चि ८।१२श । वा उ २श ।

ाधव. । पु । कृष्णमङ्गे । प मु । रा नि व १६ । वैशाखमासे । त्रिका । मधूकवृक्षे । वसन्तकाले । जीरकवृक्षे । क्ली । मधूकभेदे । वै निघ । च द शाल्मा चि ।

माधवक' । पु । मधूकमद्य । गोफलेर मद ।

माधवकर' । पु । रुग्विनिश्चयग्रन्थकारे । रसकौमुदीकारे च ।

माधवद्रुम । पु । आम्रवृक्षे । रा नि व ११ ।

माधवप्रियम् । क्ली । पीतचन्दने । हरिचन्दन । रा नि व १२ । [भ ।

माधविका । स्त्री । माधवीलतायाम् । अटी

माधवी । स्त्री । माधवीलतायां । रा नि व १० । शताह्वाचुपे । रा नि व ४ । वासन्तीपुष्पवृक्षे । रा नि व १०।२० । शतपर्वे । रा नि व २२ । मधु शर्करायाम् । रा नि व १४।२२ । तुलसीवृक्षे । वाराहीकन्दे । दुग्धफेनिकायाम्, दुग्धपायाषि । माध्वीधुरायाम् । वै निघ । मद्ये । त्रिका ।

माधवीमूलम् । क्ली । माधवीलतामूले । रस र समरी चि । "घोलेन माधवीमूल पीत स्त्रीमध्यकार्य्यकृत ।"

माधवीलता । स्त्री । स्वनामख्यातलतायाम् । माधवी फूलेर गाछ । गुलविन्द, माधवी, इन्द्र गोचे, इति महाराष्ट्रकर्णाटदेशयो प्रसिद्धा । तैं माधवतीगै, पुम्बुलगुरिविन्द । तत्पर्य्याया — अतिमुक्त अतिमुक्तक पुण्ड्रक वासन्तीलता माधवीलता चन्द्रवल्ली सुगन्धा भ्रमरोत्सवा भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणा वसन्तदूती लतामाधवी । गुणा —कटुका तिक्ता कषाया मदगन्धयुक्ता पित्तकासव्रणघ्नी दाहशोषघ्नी च । रा नि व १० । अपिच—"माधवी स्यात् वासन्ती पुण्ड्रकी मुण्डकोऽपि च । अतिमुक्तो विमुक्तश्च कामुकी भ्रमरोत्सव ॥ माधवी मधुरा शीता लघ्वी दोषत्रयघ्नी च ॥" भा ।

माधवेष्टा । स्त्री । वाराहीनाममहाकन्दशाके । वै निघ ।

माधवोचितम् । क्ली । कक्कोले । कक्कोल फल । रा नि व १२ ।

माधवोद्भवः । पु । राजादनीवृक्षे । क्षीरी गाछ । रा नि व ११ ।

माधुतैलिकः । पुं । तन्नामकवस्तिविधौ । सु चि ३८श ।

माधुरम् । क्ली । मल्लिकापुष्पे । त्रिका ।

माधुरी । स्त्री । अजमोदायाम् । रा नि व ६ । द्राचासवे । मधुरतायाम् । वै निघ ।

माधूकसार । पु । मधूकवृक्षसारे । मउल गाछ । मज्जा वा सू १५श शिरोविरेचने ।

माधूकी । स्त्री । मधूकपुष्पजातमद्ये । "मधूक पुष्पजाता या माधूकी सा निगद्यते ।" गुणा — माधूकी मादिनी बल्या पुष्टिकृत् कामवर्द्धिनी ।

माध्वकम् । क्ली । माध्वीके । वै निघ ।

माध्वाम्र । पु । मधुरसालाम्रवृक्षे । आम आमेर गाछ । रा नि व ११ ।

माध्वी । स्त्री । मधुखर्ज्जरीवृक्षे । रा नि व ११ । मधुरकण्टकमत्स्ये । श र । पुष्परसादिमधुकृते मद्ये । "पुष्पद्रवादिमधुसारभवा तु माध्वी ।" गुणा —मधुरा हृद्या वातपित्तहृत् नात्युष्णा पाण्डु

**माननम्।** क्ली। मनसि। विका।

**मानसक्लैव्यम्।** क्ली। चित्तस्थूलक्लैव्यं। मनःक्लृप्तता। सु चि २६ अ।

**मानसज्वरः।** पु। य आदौ मनसि जायते, वैचित्तादौ। लक्षणम्—"वैचित्तमरतिर्ग्लानिर्मनस स्तापलक्षणम्।" च चि ३ अ।

**मानसालयः (सौका.)।** पु। हंसे। रा नि व १९।

**मानसी।** स्त्री। दुर्गपुष्प्याम्। देशभूष्ठी।

**मानिकम् (का)।** क्ली, स्त्री। अष्टपलमिते माने। ६४ तो। ८ सेर। सियो वृहद्युक्तस्थाने। "कुडवाभ्यां च मानिका।" प प्र १ख। मन्। अ र। (क्ली) वमनविरेचनयो शोधनान्यतरे। च द वमनाधिकारे।

**मानिनी।** स्त्री। लवणाकन्दे। रा नि व ७। प्रियङ्गौ।

**मानिमन्यम्।** क्ली। सैन्धवलवणे। भैष कुष्ठ चि। "मानिमन्यञ्च तुल्यांशम्।"

**मानी (इन्)।** पु। सिंहे। रा नि व १९। स्त्री (नी)। शरावमिते। ८ शं। भैष।

**मानुषी।** स्त्री। औषधनिर्माणकार्य्ये। चिकित्साभेदे। तद्यथा,—आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता। सत्वप्रधाना दैवी स्यात् छेदभेदाग्निकासुरी॥ मानुषी षड्रसा ज्ञेया जपहोमादिसत्कृता। कलौ चान्धवलैर्लोके मानुषी सैव पूजिता। अ व। नार्य्याम्। स्त्रीलोके। अम।

**मानुषीदधि।** क्ली। मानुषीदुग्धजातदधि। मानुषेर दुधेर दई। गुणा—विपाके मधुर बल्यम् अम्ल गुरु सन्तर्पण चक्षुष्य सर्वदोषघ्नञ्च। रा नि व १५।

**मानुषीक्षीरम्।** क्ली। मानुषीस्तनदुग्धे। मानुषेर दुध। मधुरं कषाय हिम लघु चक्षुष्य दीपन पथ्य पाचन रोचनञ्च। रा नि व १५। सर्वौषधम् इत्यमेव सात्म्य सन्तर्पणं नेत्ररुजापहञ्च। पित्तस्य रक्तस्य च नाशनञ्च नारीपय श्रेष्ठतमंच प्रशस्तम्॥" अ चि ८ अ।

**मान्यम्।** क्ली। आलस्ये। रा नि व २०। रोगे। हे च।

**माम्बिका।** स्त्री। अम्बष्ठायाम्। रा नि,व ४।

**मायादः।** पुं। कुम्भीरे। विका।

**माया(यि)फलम्** / **मायिकम्** } क्ली। फलविशेषे। माजूफल, मायाफल। तत्पर्य्याया,—मायि मायिक मायिफल छिद्र फलम्। गुणा—कटूष्ण वातहरं कैशकृष्णता कार शैथिल्यसङ्कोचकरञ्च। रा नि व ६।

**मायी।** स्त्री। हिलमोचिकायां। हिञ्चेशाक। र मा।

**मायुः।** पु। पित्ते। रा नि व २१। विका। प्र रविसुन्दररसे। "स सोममायु।" भा ज्व चि।

**मायूरा।** स्त्री। काकोदुम्बरिकायाम्। वै निघ।

**मायूरादिपञ्चव्यञ्जनम्।** क्ली। मयूरपञ्च वस्त्रवेतादिव्यञ्जने। गुणा—"मायूरा वल्लजा वेत्रा याता दोषत्रयापहा।" राज २प। [भा।

**मायूरी।** स्त्री। अजमोदायाम्। वनयमानी।

**मार.।** पु। मृत्यौ। मे। धुस्तूरके। अ च।

**मारकः।** पु। श्येनपक्षिणि। वाजवोरी। मि। हिंसके। वै निघ। क्ली। हिङ्गुलि। रा नि व १३।

**मारकवर्गः।** पुं। रसमर्द्दकद्रव्यगणे। यथा—"घनवचाचित्रकगोक्षुरा कटुतुम्बी दन्तिका जाति। सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनीकन्दम्। विषमुष्टिपञ्चवल्ली लज्जा देवदाली लाक्षा। सहदेवानीपकण्टनिर्गुण्डीचक्रलाङ्गलिका। माना कंचन्दरेखा रविभक्ता काकमाचिका चार्क। विष्णुक्रान्ता वायसतुण्डी वन्ध्या बला गुण्डी चैव। कोषातकी जयन्ती वाराही हस्तिशुण्डिका रम्भा। मत्स्याक्षी यमचिञ्चा हरिद्रे द्वे पुनर्नवाद्वितयम्। धुस्तूरकाकजङ्घे शतावरी कञ्चुकी चैव बन्ध्या। तिलभेकपर्णीके दूर्वा मूर्वा हरीतकी तुलसी। गोकण्टकाखुपर्णी कर्कोटी कन्दवर्गलता च। मुषली हिङ्गु गुडूची शिग्रु गिरिकर्णिका सहादेवी। माकवसैन्धवसरघोसोमलता श्वेतसर्षपोऽसनश्च। हंसपदी व्याघ्रपदी किंशुकमल्लातकेन्द्रवारुणिका। सर्वैर्वाऽंशं वा अष्टादशाधिका वापि द्रव्यम्। समीरणमूर्च्छादौ च युक्तिर्विधिवदुपयोज्यम्॥" र सा स।

**मारङ्गा।** स्त्री। मेदायाम्। रा नि व ५।

**मारजातक।** पु। मार्ज्जारे। वै निघ।

**मारटम्।** क्ली। इक्षुमूले। वै निघ।

मारणम्। क्ली। अभिचारभेदे। धात्वादिमारणे।
मारारिनारीरज.। क्ली। गन्धके। भा
ज चि कम्पतरौ।
मारिष (प)। पुं। पत्रशाकविशेषे।
न्‌टे' दा दँटीनटेत्र शाक। हिं मरषा। उत्
मेघटा शाग। तत्पर्य्याया,—कम्बर मायक
माष मार्षिक। स द्विविध श्वेतरक्तभेदेन। गुणा
—"मारिषो मधुर शीतो विष्टम्भी पित्तनुद् गु।
वातश्लेष्मकरो रक्तविषमग्निप्रमाथिजित्॥ रक्तमार्षो
गुरुर्नाति सक्षारो मधुर सर। श्लेष्मल कटुक
पाके स्वल्पदोष उदीरित॥' भा पु १भ भाव।
मारोच। पुं। कङ्कोलवृक्षे। रा नि व १२।
मारीचपत्रक। पु। सरलवृक्षे। टार्पिनेत्र
गाछ। रा नि व १२। [ सञ्जतरौ। वै निघ।
मारीचपत्रिका। स्त्री। सरलदेवदारौ।
मारीचवल्ली। स्त्री। मरिचवृक्षे। वै निघ।
मारो(रु)ष। पु। मारिषशाके। हि।
मारुण्ड। पुं। सर्पाण्डे। मे।
मारुत। पुं। वायौ। रा नि व २१।
मारुता। स्त्री। स्पृक्कायां। पिड़िः। वै निघ।
मारुतापह। पु। वरुणवृक्षे। रा नि व ९।
मार्क.। पु। भृङ्गराजे। र मा।
मार्कटपिप्पली। स्त्री। कपिपिप्पल्याम।
आपा। रा नि व ४।
मार्कण्डिका (ण्डी)। स्त्री। भूम्याहुल्यो।
कँकरोल। हि भूइखखसावली भूमिप्रमरण
शीला। वम भू इतरवड़। तत्पर्य्याय —
भूमिचरी। गुणा—"मार्कण्डिका कुष्ठघ्नी
ऊर्द्धाध कायशोधनी। विषदुगन्धकासघ्नी गुल्मोदर
विनाशिनी॥" मृदुरेचनी च। भा पू। वै निघ
२भ च मा चि प्रश्नाद्रिचूर्णे। [ ४ ]
मार्कण्डीयम्। क्ली। भूम्याहुल्यो। रा नि व
मार्कव। पु। भृङ्गराजे। भीमराज। र मा।
हि भगरा। म मगरमूल। क भगरेवा। वम
माका। तत्पर्य्याया,—भृङ्गराज भृङ्ग पतङ्ग
माकर मार्क नागमार पतङ्ग भृङ्गबीदर
भृङ्गरज भृङ्गार भृङ्गराज मर्कर भृङ्गाह्व
एकरज भृङ्गारक करञ्जक अङ्गारक पितप्रिय
केशरञ्जन कुन्तलवर्द्धन। मार्कव नीलपीतमङ्गा
भेदेन त्रिधा। गुणा—कटुक तिक्त उष्ण
केशरञ्जन कफशोथविषविषघ्न रसायनञ्च। रा नि
व ४। •च द ज्वरातिसा चि व्योषाद्यचूर्णे। "निम्न
भूमिजमार्कवम्" च द भा वा चि सिधलायाम्।
मार्ग। पु। मृगे। मलद्वारे। त्रिका। कस्तू
र्य्याम्। मृगनाभि। मे। रक्तापामार्गे। रम चि
मार्गसिन्दूरे। भैष कर्परी चि अपामार्गक्षारतैले।
(क) मार्गशीर्षमासे। श मा।
मार्गवाहिनी। स्त्री। क्षुद्रनाड्याम्। वै निघ।
मार्गविशोधनम्। क्ली। मूत्रपुरीषमङ्गे सति
तन्मार्गशोधनकर्माणि। सु सू ७भ।
मार्जनम्। क्ली। शुद्धकरणे। श र। पु।
लोध्रवृक्षे। प मु। श्वेतलोध्रे। सुभूति। रक्तलोध्रे।
स्वामी। स्त्री (नी)। सम्मार्जन्याम्। झाँटा।
मार्जार। पुं। रक्तचित्रकवृक्षे। रा नि व ६।
पूतिसारिवायाम्। वै निघ। बिड़ाले। अम।
खट्टाशे। खटाश। हे च। (क) मयूरे। त्रिका।
मार्जारकण्ठ। पु। मयूरे। श र।
मार्जारगन्धा (न्धिका)। स्त्री। मुद्गपर्ण्याम्।
मुगानी। प मु। रा नि व ३।
मार्जारपाद। पु। अश्वभेदे। यथाऽस्य
पादे कूर्चे च स्वर्णभिन्नवर्णा रेखा भवेत्। स च
अशुभमङ्गलकर। ज द ३भ।
मार्जारिका। स्त्री। कस्तूर्य्याम्। वै निघ।
मार्ज्जारी (ली)। स्त्री। गन्धमार्ज्जारे।
खाटाशी। तत्पर्य्याया,—पूतिकाज पूतिका
गन्धचेलिका। तद्गन्धगुणा—वामनी चक्षुष्या
वातघ्नी कान्तिकरी कफनाशिनी च। मदन
पाल। कस्तूर्य्याम्। मृगनाभि। रा नि व १२।२३।
मार्जारीय। पु। बिडाले। मे।
मार्जाल। पु। बिडाल। हि कोष।
मार्जिता। स्त्री। दधिशर्करा। प मु।
शिखरिण्याम्। वै निघ।
मार्त्तण्ड। पु। अर्कवृक्षे। अम। शूकरे।
मे। स्वर्णमाक्षिके। वै निघ।
मार्त्तण्डमूलम्। क्ली। अर्कमूल। वै निघ।
२भ ज्व चि निर्गुण्डीधूपे।
मार्त्तण्डवल्लभा। स्त्री। आदित्यभक्तायाम्।
हुड़हुड़िया। रा नि व ४।

**मार्त्तिकः।** त्रि। मृण्मये। च चि १थ आमलक घृते। पु। शरावे। विका।

**मार्द्दवम्।** क्ली। मृदुतायाम्।

**मार्द्वीकम्।** क्ली। द्राक्षारसजात मद्यमधे। "मार्द्वीकमविदाहित्वात्मधुरान्वयसस्तथा। रक्तपित्ते ऽपि सतत वर्द्धनं प्रतिषिध्यते। मधुरं तद्धि रूक्षञ्च कषायानुरस लघु। लघुपाकि सर शोषविषमज्वर नाशनम्॥" सु सू ४५ अ मद्यव।

**मार्द्वीकमद्यम्।** क्ली। द्राक्षाकृतमद्ये। "मृद्वीकाभि कृत मद्य मार्द्वीकमिति चोच्यते। मृद्वीकानां सुपक्वानां च स्वयं गालित पटात्॥ रसेनेन हि तन्मद्य कषायरहितेन यत्। मार्द्वीक कापिशं भीमविक्रान्त कापिशायनम्॥" तोड प्रद शौनक।

**मार्द्वीकशुक्तम्।** क्ली। मार्द्वीकरसेन सतैलेन कन्दशाकफलैर्युते चुक्रे। प प्र ३ख।

**मार्षः।** पु। मारिषशाके। नटे' शाक। भा पू १भ शा व।

**मार्षकः।** पु। मधुरवास्तूके। मिठा वेतो। मारिषशाके। नटे' शाक। रा नि व ७।

**मार्ष्टि'।** स्त्री। तैलमर्द्दने। वै निघ।

**मालकम्।** क्ली। स्थलपद्मे। जटा। प्रपौण्डरीके। कृष्णतुलस्याम्।

**मालक'।** पुं। निम्बवृक्षे। महानिम्बे। अम।

**माल(ला)कन्द।** पु। स्वनामख्यातमहा कन्दशाके। म दावचियगड्। क कण्यिगोलि। गुणा—सुतीक्ष्ण गण्डमालाघ्न दीपन गुल्महर वातघ्न प्रद च। रा नि व ७।

**मालती।** स्त्री। (Aganosma calicina Syn Echites caryophyllata) स्वनाम ख्याते पुष्पशाके। मालतीलता, गन्धमालती। र मा। सु सू ४६ अ। गुणा—"मालती कफ पित्तास्यरुग्व्रणक्रिमिकुष्ठभित्। तस्याः कुसुमं तथा पत्र तत्कफपित्तजित्॥" राज ५प। पीतजाती वृक्षे। पीत जातीफुलेर गाछ। ग्रैष्मजात्याम। जातीकुसुमवृक्षे। तत्पर्याया,—जाति जाती सुमना। रा नि व १०। पाठायाम्। आक्नादि। वै निघ। पुष्प्यां। ज्योत्स्नायाम्। भारतीयनदी विशेषे। ४ च।

**मालतीजात'।** पु। टङ्कणक्षारे। र सा म।

**मालतीतीरजः।** पु। टङ्कणे। सोहागा। हे च।

**मालतीतीरसम्भवम्।** क्ली। टङ्कणे। सोहागा। रा नि व १०।

**मालतीपत्रिका (त्री)।** स्त्री। जातीकोशे। जयित्री। रा नि व १२।

**मालतीपुष्पम्।** क्ली। जातीपुष्पे। चि शी पानीयकल्याणघृते। स्वनामकपुष्पे। वै निघ।

**मालतीफलम्।** क्ली। जातीफले। जायफल। रा नि व १२।

**मालतीमूलम्।** क्ली। मालतीशिफायाम्। मालतीशिकड़। इद जङ्गमविषहरम। नकुल ११अ।

**मालतृणम्।** क्ली। तृणसामान्ये। तृणविशेषे। मालतृण। वै निघ।

**मालय.।** पु। चन्दनवृक्षे। वै निघ। क्ली। श्रीखण्डचन्दने। विका। पद्मकनामसुगन्धकाष्ठे। पद्मकाष्ठे। रा नि व १२।

**मालवा।** स्त्री। उपोदकायाम्। बड़ पुंई। भा पू १भ शा व।

**मालवि(वी)का।** स्त्री। त्रिवृति। तेउड़ी। रा नि व ६। वा चि २अ।

**मालविटपी (इन्)।** पु। कुम्भीवृक्षे। वै निघ।

**मालवी।** स्त्री। पाठाथाम। आक्नादि। रा नि व ६।

**मालसी।** स्त्री। केशपुष्टवृक्षे। श र।

**माला।** स्त्री। वनोदूर्वायाम्। रा नि व ८। भूम्यामलक्याम्। वै निघ। पृक्कायाम्।

**मालाकण्ट (क)।** पु। अपामार्गक्षुपे। रा नि व ४।

**मालागुणा।** स्त्री। असाध्यलूताविशेषे। सु कल्प ८अ।

**मालाग्रन्थि।** स्त्री। मालादूर्वायाम, वनी दूर्वायाम। रा नि व ८।

**मालातृण (क)म्।** पुं, क्ली। भूतृणे। गन्ध थड़। रा नि व ८। आम्रगन्धसदृशसुगन्धरोहिष तृण। वै निघ।

**मालादूर्वा।** स्त्री। मालाकारदूर्वाविशेषे।

मालादूर्वा, गाँठिआदूर्वा। स वेलिदरियानी। के बलिगदछि। बम बन्धिदूर्वा। तत्पर्य्याया,—ग्रन्थिदूर्वा मालादन्धि ग्रन्थिला ग्रन्थिदूर्वा ग्रन्थिमूला मूलग्रन्थि वेदनी रोहत्पर्वा पर्व्ववल्ली शिवाह्वा। गुणा—मधुरा तिक्ता शिशिरा पित्तघ्नी कफवातिलप्वाहरी च। रा नि व ८।

**मालाफलम्**
**मालामणि** } क्ली, पुं। रुद्राक्षे। वै निघ।

**मालारिष्टा**। स्त्री। पाचीनामसुगन्धद्रव्ये। रा नि व १०।

**मालालिका (ली)**। स्त्री। स्पृक्कानामगन्धद्रव्ये। रा नि व १२।

**मालाश्वेतमा**। स्त्री। तुलसीभेदे। वै निघ।

**मालिक**। पु। पक्षिविशेषे। स। रञ्जके। श र। स्त्री (का)। द्राक्षामद्ये। वै निघ। मल्लिकाविशेषे। चन्द्रमल्लिका। मद्ये। दारा। सप्तलायाम्। मे। पतस्याम्। मञ्जिना। श च।

**मालिनी**। स्त्री। अग्निशिखावृक्षे। दुरालभायाम्। श च।

**मालु**। पु। पत्रबहुलसताभेदे।

**मालुक**। पु। कृष्णार्जके। काल बाबुई। स्वल्पकुतराजवृक्षे। वै निघ।

**मालुकाच्छद (पत्र)**। पु। अश्मन्तकवृक्षे। वै निघ।

**मालुधान**। पु। मालुनाहिसर्पे। मालुया साप। अम। स्त्री (नी)। लताभेदे। वै निघ।

**मालूक**। पु। कृष्णार्जके। कृष्णपत्र सूक्ष्म तुलसी। रा नि व १०।

**मालूर**। पु। विल्ववृक्षे। प सु। कपित्थवृक्षे। कयेत् गाछ। रा नि व ११।

**मालूरमूलम्**। क्ली। विल्वमूले। भा म १भ जिह्वकाज्य चि। "मालूरमूलामयमधुयुता।"

**मालेया**। स्त्री। स्थूलैलायाम्। प सु।

**माल्यम्**। क्ली। पुष्पे। पुष्पमालायाम्। म।

**माल्यक**। पु। मदनवृक्षे। वै निघ।

**माल्यपुष्प**। पु। शणवृक्षे। शण गाछ। रा नि व ४।

**माल्यपुष्पिका**। स्त्री। शणपुष्प्याम्। बन शण। रा नि व ४।

**माल्या**। स्त्री। तृणभेदे। वै निघ।

**माष (क)**। पु। क्षुद्ररोगविशेषे। उँछ तिल। तिलकान् तत्रतान्माषानाहुः। "माषांस्तानिव चोन्नतान्।" वा उ ३१ अ। A sort of kidney bean (phaseolus radiatus or P Roxburghii) स्वनामख्यात शमीधान्यभेदे। माषकलाय। प सु। हि उरीद, तें मिनुमलु, तृणधान्यविशेषम्। तत्पर्य्याया,—बीजवर बली कुरुविन्द धान्यवीर कृषाकर मांसल बलाढ्य पित्र्य पितृभोजन। गुणा—स्निग्ध मलकर शोषघ्न श्लेष्मकर वीर्य्योष्ण रक्तपित्तप्रकोपकर वातघ्न गुरु बलकर रोचन स्वादु श्रमसुखवतां नित्य सेवनीयश्च। रा नि व १६। "माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः। स्रंसनस्तर्पणो बल्यः शुक्रलो बृंहणः परः। भिन्नमूत्रमलः स्तन्यो मेदःपित्तकफप्रदः। गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत्। कफपित्तकरा माषाः॥" भा पू १भ धा व। 'स्निग्धोऽथ वृष्यो मधुरश्च बल्यो मरुत्कफानां परिवृंहणश्च। पाकेऽम्लकोष्णो विदितो हिमश्च माषोऽथ इन्द्रो कथितो मरुच्च॥" चचि १५ अ। माषयूषगुणा—"घन सवातं कफकृन्माषयूषश्च पित्तकृत्। अम्लपथ्युषित तत्र तैलपाने च शस्यते॥" चचि १२ अ। "माषयूषो गुरुश्चैव वृष्यत्वबलपित्तकृत्। अनल्पकं कफं कुर्व्वन् मलद्वौष्ठं विवर्द्धयेत्॥" द्रव्यगु। परिमाणभेदे। मासा। तत्पर्य्याया —मास हेम धामक। स मागधमाने सुश्रुतमते च ५ पञ्चरत्तिकात्मक। चरकमते ६।८ गुञ्जात्मक। कालिङ्गमाने सुश्रुतमते ५।७।८ गुञ्जापरिमाणम्। भा। चरके वैद्यकान्तरे च १० गुञ्जात्मकमानम्। १२ गुञ्जात्मकोऽप्यस्ति। १२ धान्यात्मक १८ माषात्मकोऽपि दृश्यते। अतएव स द्वाधिक षड्विध पञ्चगुञ्जात्मक षड्गुञ्जात्मक सप्तगुञ्जात्मक अष्टगुञ्जात्मक दशगुञ्जात्मक द्वादशगुञ्जात्मकश्चेति। तत्र पञ्चगुञ्जात्मको य स नाम्ना कालिङ्ग सौश्रुतश्च षड्गुञ्जात्मकोऽपि कालिङ्ग इति केचित्। दशरत्तिकमाष चरकसम्मतो गौडमाषक इत्युच्यते। स एव सर्व्वत्र व्यवहार्य्य। यथा—"माषस्तु पञ्चभिः षड्भिस्तथा सप्तभिरष्टभिः। दशभिर्द्वादशभिश्च रक्तीभिः षड्विधो मतः। अत्र कालिङ्गमाषश्च पञ्च गुञ्जः स सौश्रुतः। दशगुञ्जस्तु माषः स्यात् माषकः स च चारकः। सप्तगुञ्जस्तु केऽप्याहुः मानकं नाम

**वनवल्लभा (री)**। स्त्री। निर्गुण्डिकायाम्। रा नि व ८।

**वनवातामः**। पुं। वातामवृक्षे। वनवादाम।

**वनवासः**। पु। मधूकवृक्षे। मउल गाछ। वै निघ।

**वनवासकः**। पु। शाल्मलीकन्दे। रा नि व ७।

**वनवासनः**। पुं। खट्टाशे। खाटाशि। त्रिका।

**वनवासी (इन्)**। पुं। मण्डपीकन्दे। शाल्मली कन्दे। वाराहीकन्दे। रा नि व ७। ऋषभके। रा नि व ५। मुष्ककवृक्षे। घण्टापारुल। रा नि व ११। द्वीपकाके। द्वीपान्तरवचायाम्। वै निघ।

**वनविडालः**। पु। वनमार्जारे। वै निघ।

**वनविलासिनी**। स्त्री। नलपुष्पीलतायाम्। रा नि व ३।

**वनवीजः (क)**। पु। वनबीजपूरके। बुनो टावा लेबु। रा नि व ११।

**वनवीजपूरकः**। पु। वनजात मातुलुङ्गवृक्षे। बुनो लेबुर गाछ, टावा। स वनमातुलिङ्ग। क कामाघवन। तत्पर्य्याया,—वनज वनवीज वनवीजपूर अत्यम्ला गन्धाम्ला वनोद्भवा देवदूती पीता देवदासी देवेष्टा मातुलुङ्गिका पाचनी महाफला। गुणा—अम्ल कटुकत्व रुचिप्रद वातघ्न अग्निदीपककृमिनाशक कफघ्न श्वासघ्न। रा नि व ११। [व ४।

**वनवृन्ताकी**। स्त्री। महावृहत्याम्। रा नि

**वनव्रीहिः**। पुं। देवधान्ये, नीवारे। उँड़ि धान। इ च।

**वनशिम्बिका**। स्त्री। अरण्यशिम्ब्याम्। मैष शिरोरी चि हृदृशमूल तैले।

**वनशू(सू)करी**। स्त्री। कपिकच्छ्वाम्। आलाकुशी। रा नि व ३। वनवाराही। बुनो बाराहीकन्द। रा नि व ७।

**वनशू(सू)रणः**। पुं। आरण्यसूरणे। बुनो ओल। तत्पर्य्याया,—सितसूरण वनकन्द वनकुण्डल वनज वन्य वनोद्भव अर्शसूरण। गुणा—रुचिकर कटुरस कृमिगुल्मशूलघ्न। रा नि व ७।

**वनशृङ्गाटः (कः)**। पुं। गोक्षुरे, क्षुद्रगोक्षुरे। गोखुरी, छोटि गोखुरी। रा नि व ४।

**वनशोभनम्**। क्ली। पद्मे। श च।

**वनश्वा (न्)**। पु। गन्धमार्ज्जारे। शृगाले। व्याघ्रे। सी। मृगादिनि। त्रिका।

**वनषण्डी**। स्त्री। पद्मिनी। पद्मेर झाड़। वै निघ।

**वनसङ्कटः**। पु। मसूरे। मसुरी। श च।

**वनसम्भवम्**। क्ली। सैन्धवलवणे।

**वनसरोजिनी**। स्त्री। वनकार्पास्याम्। श र।

**वनस्थः**। पु। मृग। श च। क्ली (स्था)। अश्वत्थवृक्षे। गछा अश्वत्थ। रा नि व ११। अत्यम्ल पर्ण्याम्। रा नि व ३।

**वनस्नेहफला**। स्त्री। क्षुद्रवृहत्याम्। क्षुद्र व्याकुड़। वै निघ।

**वनस्पतिः**। पु। विनापुष्पफलद्रुमे। तरुमात्रे। रा नि व २। नन्दीवृक्षे। वटवृक्ष। रा नि व ११।

**वनहरिद्रा**। स्त्री। (Curcuma aromatica Syn Curcuma zedoaria) Wild Turmeric, स्वनामख्यातहरिद्रायाम्। वन हलुद। हि जली हलदी। म साली। अङि विषमा, अरिसिन प्रांस कोडूवे मंसळा। तैं कस्तुरिमञ्जु, मड़विषलुप। वम् रानहलुद, कचोरा। ता कस्तुरिमञ्जल। तत्पर्य्याया,— शोला शोलिका वनार्य्या। गुणा,—कटु उष्णा गौल्या तिक्ता दीपनी च। रा नि व ७। अपिच, —"अरण्यहरिद्राकन्द कुष्ठवातास्रनाशन।" भा।

**वनहासः (क)**। पु। कुन्दपुष्पवृक्षे। रा नि व १०। काशवृक्षे। त्रिका।

**वनाखुः (क.)**। पुं। शशके। खरगोश। खट्टाश। मुद्गे। मूग। त्रिका।

**वनाजः**। पु। वन्यच्छागले। बुनो छागल। इ च।

**वनाटुः**। पु। नीलमक्षिकायाम्। नील माछि। श मा। [व १०।

**वनार्दिदमनः**। पु। वन्यदमनके। रा नि

**वनामलः**। पु। क्षणपाकफलद्रुमे, करमर्दके। श मा।

**वनाम्रः**। पु। (Mangifera sylvatica)

सर्षप, বিড়ঙ্গ, পিপুল, করঞ্জ, নাগেশ্বর, রক্ত কাঞ্চন, শ্বেতকাঞ্চন, নিম্, অশ্বগন্ধা, বেতস, বাস্কুলি অপরাজিতা, আতুনী, তেলাকুচা, বচ, বাথালশশা, শ্বেত গ্রাথালশশা প্রভৃতি। सु सू २९ष ।

**वमनव्यापत्** । स्त्री । वान्त्यसिद्धौ आध्मानादि विकारे । सद्वैद्यातुरनिमित्त वमन विरेचनञ्च पञ्चदशधा व्यापद्यते सावशेषौषधत्व जीर्णौषधत्व हीनापहृत दोषापहृतत्व वातशूलमयोगातियोगौ जीवादानमाध्मान परिकर्त्तिका परिस्राव प्रवाहिका हृदयोपसरण विबन्ध इति । सु चि ३४ष ।

**वमनी** । स्त्री । जलौकायाम् । জোঁক। रा नि व १९।

**वमनीया** । स्त्री । मक्षिकायाम् । মাছি। रा नि व १९।

**वमि'** । स्त्री । वान्तौ । वमन। रा नि व २०। पुं । अग्नौ।

**वम्भ** । पु । वंशे । বাঁশ। शर ।

**वम्रीकूट** । पु । वल्मीके । উইঢিপি।

**वयः (स्)** । क्ली । बाल्यादौ । तच्च त्रिविधं बाल्यमध्यवार्द्धक्यानि । तेषूनषोड़शवर्षा बाल । बालश्च त्रिविध दुग्धाशी दुग्धान्नाशी अन्नभुक चेति । तत्र एकवर्षो दुग्धाशी, द्विवर्षो दुग्धान्नाशी, तदुत्तरमन्नाशी च । तथा षोड़शसप्तत्योर्मध्ये मध्यम मध्यमवयसुर्डौ यौवनादि । तत ऊर्द्धं वार्द्धक्यमिति । तत्र धातुरसादिकम् । इन्द्रियबल वीर्योत्साह च दिने दिने क्षीयन्ते यान्ति । भा । अपिच—"वयश्चतुर्विधं प्रोक्तमुत्तमाधममध्यम। हीन चातुर्थिकं प्रोक्तम् । बाल युवान वृद्धश्च मध्यमश्च तथैव च। चतुर्विध वय सम्यक् तत्समासेन वक्ष्यते। पयःपान्त शमचौर्य बालस्त्रीसुकुमारक। एतेषां मध्यमा सञ्ज्ञा प्रोच्यते वैद्यकागमे। आषोड़शाद्भवे द्बाल पञ्चविंशो युवा नर। मध्यम सप्तति यावत्परतो वृद्ध उच्यते। तथाच सुकुमारश्चैते मध्यमसंज्ञका । वयस षोड़शाधिक्य समय स्याद्विंशु य । आविंशतिवमा प्राप्तो यथा च क्रमदर्शनात् । पूर्ण वय स्त्रिय प्राप्ता मध्यम चाधम वय । पञ्चविंशत्समादूर्द्धम् आपञ्चाशद्वत पुमान् । कम्प्रकठोरा वनिता इत्यत चोत्तमं वय । पञ्चविंशत्समादूर्द्धं पञ्चाशत् षोड़श समा । बालो वृद्धस्तथा मध्य इत्येतदुत्तमं वय । पञ्चवर्षा स्मृता बाला मुग्धा च षट्सप्तावधि। द्वादशाब्द स्मृता बाला मुग्धा स्यात् सप्तमावधि। प्रौढा च नववर्षोर्द्ध प्रगल्भा च त्रयोदशा। चतुर्विंशद्वर्षमूर्द्धं सप्तविंशति मध्यमा। पूर्ण वय स्त्रिय प्राप्ता इत्येतदुत्तम वय ॥" भवि पूष । यौवने । मे । पक्षिणि । अम ।

**वय'सस्थापनी** । स्त्री । ब्राह्म्याम् । ब्राह्मी शाक। वै निघ ।

**वयस्थ** । पु । आमलकवृक्षे। वै निघ ।

**वयस्था** । स्त्री । इष्टार्त्तवायां स्त्रियि। रा नि व १८ । हरीतक्याम् । पसु । भा पू १भ । काकोल्यां, क्षीरकाकोल्यां। दारुहरिद्रायाम् । सोमवल्ल्याम् । সোমলতা। रा नि व २३ । ब्राह्मीशाके। रा नि व ५ । च सू ४थ सञ्ज्ञास्थापने। सियो उन्मा चि महापैशाचघृते । आमलक्याम् । रा नि व ११ । वै निघ उन्मा चि सारस्वतघृते । वा चि ६ष । गुडूच्याम् । रा नि व ३ । च द उन्मा चि महापञ्चगव्यघृते । सूक्ष्मैलायाम् । प सु । शाल्मली वृक्षे । हे च । मत्स्याक्षपर्ण्याम् । मत्स्याक्ष्याम् । युवत्याम् । रा नि व २१।

**वयस्या** । स्त्री । आमलक्याम् । गुडूच्याम् । भा ४ष नगमेय चि । "वचा वयस्या जटिलाम् ।" क्षीरकाकोल्याम् । हरीतक्याम् । वै निघ ।

**वयोवङ्गम्** । क्ली । ओषधातौ । कथित् । रा नि व ३।

**वरम्** । क्ली । कुङ्कुमे । रा नि व १२। आर्द्रके। त्वचि । দারুচিনি। रा नि व ६ । सैन्धवलवणे। सुगन्धवर्ये । वै निघ । पुं । पियालवृक्षे। वकुल वृक्षे । विकङ्कतवृक्षे । हरिद्रावृक्षे । वै निघ । गुग्गुलौ । शर ।

**वरक** । पुं । प्रियङ्गुकनामकधान्ये । চীনা-ধান, কাঙ্নী ধান। तत्पर्य्यायौ —स्थूलकङ्गु स्थूलप्रियङ्गु । भोज्यगुणा —मधुर रुक्ष कषायं वातपित्तकरं वह्निकारोगगुणश्च । रा नि व १६। च सू २७ष । वनमुद्गे । मुगानी। हे च । पर्पटके। ক্ষেৎপাপড়া। रा नि व ५ । च वि ८ष । क्ली । कम्बलदरीकर्णे । मद व६।

**वरकन्दा** । स्त्री । क्षीरविदारीवृक्षे । प सु ।

**वरकोद्रव'** । पु । कोविदारवृक्षे । रमा ।

**वरकोलम्** । क्ली । राजबदरे । নারিকেলী কুল।

**वन्यदमनः** । पु । वनजदमनकक्षुपे । वन दना । स दाणदवणा । ९ कादवणा । गुणा —वीर्य्य लघुन मनद आमदोषहरश्च । रा नि व १० ।

**वन्यधान्यम्** । क्ली । नीवारे । उड़ि धान । प मु ।

**वन्यवृक्षः** । पु । अश्मन्तकवृक्षे । वै निघ ।

**वन्यसहचरो** । स्त्री । पीतझिण्ट्याम् । पीत झाँटी । रा नि व १० ।

**वन्या** । स्त्री । मुद्गपर्ण्यां । मुगानी । गोपाल कर्कट्यां । राखाल काँकुड़ी । गुञ्जायां । कुँच । रा नि व ३ । मिश्रेयायां । मउरी । रा नि व ४ । मुस्तके । रा नि व ६ । गन्धपत्रायाम् । रा नि व १० । विषडोङ्गर्भूरे । वनहरिद्रायां । मेथिकायां । मेथि । वै निघ ।

**वन्योपोदको** । स्त्री । वनजोपोदकायाम् । वन पुँइ । तत्पर्य्याया,—वनजा वनसाह्वया वन्यजा । गुणा,—कटु तिक्ता उष्णा रोचनी च । रा नि व ७ ।

**वपरः** । पु । केशराजे । केशुत्ते । त्रिका ।

**वपा** । स्त्री । मेदोधातौ । रा नि व १८ ।

**वपाटिका** । स्त्री । अवपाटिकायां । सु चि २०अ । See अवपाटिका । [ भा ७अ ।

**वपावहम्** । क्ली । मेदस्थानरूपकोष्ठाङ्गे । च

**वपुः (स्)** । क्ली । शरीरे । रा नि व १८ ।

**वपुःस्रव** । पु । शरीरस्थ रसधातौ । रा नि व १८ ।

**वपुर्वीर्य्यम्** । क्ली । शुक्रधातौ । वै निघ ।

**वपुषा** । स्त्री । हबुषायां । हवुष फल । भा ।

**वपुष्टमा** । स्त्री । (Hibiscus mutabilis) स्थलपद्मिन्याम् । स्थलपद्म गाछ । जटा ।

**वप्र(विष्टक)म्** । क्ली, पु । शीषधातौ । है च ।

**वप्रा** । स्त्री । मञ्जिष्ठायाम् । रा नि व ६ ।

**वप्रो** । स्त्री । वल्मीके । उईटिपि । हला ।

**वभ्रुः** । पु । मण्डलिसर्पभेदे । सु कल्प ४अ । वातपित्तोल्बणसन्निपातज्वरे । "वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति । तस्य ज्वरो मदतृष्णा मुखशोषप्रमीलका ॥ भाक्तानाऽरुचिस्तन्द्रा कास श्वासक्लमभ्रमाः । सुनिभिर्बभ्रुनामायं सन्निपात उदाहृतः ॥" भा ।

**वभ्रुधातुः** । पु । सुवर्णगैरिके । स्वर्णगैरि माटी । रा नि व १३ ।

**वमः (थुः)** । पुं । वमिरोगे । रा नि व २० । करिशुण्डाग्रशीकरे । मा नि ।

**वमनम्** । क्ली । वान्ती, ऊर्द्धमुखेन दोषहरणे । वमि । वमनस्य कालः —पूर्व्वाह्न, तथा शरद्वसन्त प्रावृट्कालाश्च । तस्य स्थानम्—मन्दाग्न्यभि पीड़ित गश्चित वमनसात्म्य धीरंश्चित्त वामयेत । तत्र श्लेष्माधिकज्वरे श्लेष्मपित्तविशुद्ध्यर्थं कार्य्यम् । हारीत । वमनाईस्य सद्योभुक्तस्य सन्तर्पणोत्थे ज्वरे कफज्वरे श्लेष्मज्वरेषु शमनम् । च द । विष दोष स्तन्यरोग श्लीपदार्व्वुद विसर्प कुष्ठ हृद्रोग मेदः शोफभ्रमकासश्वासादिवन्त अनितरुणगर्भिणीबालका दयश्च न वाम्याः । वमनद्रव्याणि च अग्निवायु गुणभूयिष्ठानि मदनफलादीनि । सु सू ४१अ । वमनद्रव्यमात्रामाह—कल्कचूर्णावलेहानां पलत्रय पलद्वय पलञ्च यथाक्रममुत्तमादिषु मात्रा । तथा क्वाथपाने नवप्रस्था श्रेष्ठा । षट्प्रस्था मध्यमा । त्रिप्रस्थाश्च कनीयसी मात्रा । प प्र ४ख । वमनीय क्वाथादिमात्रामाह—"नव प्रस्था भवेज्ज्येष्ठा मध्यमा षट् प्रकीर्त्तिता । त्रि क्वाथस्य तथ पञ्च मगधा तु कनीयसी ॥ त्रिपलं श्रेष्ठमाख्यातं द्विपलं मध्यमम्भवेत् । कनीयस्तु पलं विद्यादिति सै निश्चिता मतिः ॥ कल्कचूर्णादिषु सदा यथासंख्य विनिर्द्दिशेत् । पित्तेन स्यान्मृदु कोष्ठ क्रूरो वातकफात्मक ॥" सिद्धसार । पु । शणक्षुपे । शण गाछ । रा नि व ४ ।

**वमनकल्प** । पु । वमनार्थं मदनादिनानायोग योजनविधौ । तत्र मदनकल्प एव प्रशस्त । सु सू ४३अ ।

**वमनद्रव्यम्** । क्ली । जलगुणभूयिष्ठे अग्नि वायुगुणभूयिष्ठे च वान्तिकरद्रव्ये । वमिकर द्रव्य । तानि चाग्निवायुगुणभूयिष्ठानि, अग्निवायू हि लघू लघुत्वाच्च तानि ऊर्द्ध्वमुत्तिष्ठन्ति । तानि यथा— मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपवि ड्ङ्गपिप्पलीकरञ्जप्रपुन्नाडकोविदारकर्बुदारारिष्टा श्वगन्धाविदुलबन्धुजीवक श्वेताशणपुष्पीबिम्बीवचामृग र्वारुचित्रा इति ऊर्द्धभागहराणि द्रव्याणि । कोवि दारपूर्व्वाणां फलानि कोविदारादीनां मूलानि । मयनाफल, कुड़ चि फल केया, ताड़ापुष्प, तितलाउपुष्प, घोषाफल, श्वेत घोषा, श्वेत

**वरचन्दनम्**। क्ली। कालीयचन्दने। देव दारुणि। मे।

**वरटः**। पुं। हंसे। मे। चैदिकायाम्। বোলতা। तत्पर्य्याया,—गन्धोलि गन्धोली वरटा वरल वरला वरली घुटा क्रूरा पुदरक्षेपा विषयक्षी भङ्गरोल वरल द्रषपट्‌पद। अम। क्ली। कुन्दपुष्पे। कुँदफुल। अर।

**वरटा (टी)**। स्त्री। हंस्याम्। अम। मे। कुसुम्भवीजे। भा पू १ भ भा धा व। अग्निमन्थतिकोट भेद, वरटायाम्। বোলতা। वङ्ग। विश्वा। सु कल्प ८ अ।

**वरटोवान्तम्**। क्ली। मधुनि।

**वरडिका**। स्त्री। कुसुम्भवीजे। योग र छ। भा पू १ भ धा व।

**वरण**.। पुं। वरुणवृक्षे। वरुण गाछ। अम। उष्ट्रे। हारा।

**वरणा**। स्त्री। (Capharis trifoliata) तुवर्य्याम्। उङ्गत्र। नकुल १३ अ।

**वरण्डः (क.)**। पु। योवनकण्टके। व्रण, वयसफोंड़ा। मे। अर। [मे।

**वरण्डा**। स्त्री। शारिकायाम्। शालिक पाखी।

**वरण्डालुः**। पु। एरण्डवृक्षे। कन्दशाक विशेष। त्रिका।

**वरतिक्तः (क)**। पु। कुटजवृक्षे। कुड़चि गाछ। निम्बवृक्षे। रा नि व ९। पर्पटके। ক্ষেৎপাপড়া। भा म १ भ प्रलापकज्वरचि। रोहितकवृक्षे। रुयना गाछ। प मु।

**वरतिक्त(क्ति)का (क्ता)**। स्त्री। पाठायाम्। आकनादि। रा नि व ६।

**वरत्वरी**। स्त्री। रेणुकनामगन्धद्रव्ये। রেণুক। श च।

**वरत्रा**। स्त्री। करिमध्यबन्धनरज्ज्वाम्। काछदड़ि। शटीभ।

**वरत्वच**। पु। निम्बवृक्षे। निम् गाछ। र मा।

**वरदा**। स्त्री। अश्वगन्धायाम्। मद व १। सुवर्चलायां। हुड़हुड़े। रा नि व ४। वाराही कन्दे। गेंट इति लोके। वै निघ। कन्यायां। मे।

**वरदातु (क)**। पुं। शाकवृक्षे। সেগুন गाछ। वि सु १ मद। गुणा—शिशिर रक्तपित्त प्रशान्तमय। भा।

**वरदायिनी**। स्त्री। सुवर्चलायां। हुड़हुड़े। वै निघ।

**वरपर्णाख्यः**। पु। चोरकपुष्पीवृक्षे। कोड़ कड़ाइ। र मा.।

**वरफल'**। पुं। नारिकेलवृक्ष।

**वरमुखी**। स्त्री। रेणुकायाम्।

**वरम्बरा**। स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। श च।

**वरलः**। पु। वरटे। বোলতা। श.मा।

**वरलब्ध**। पु। चम्पकवृक्षे। प मु। रक्त चाम्पने, नागकेसरचम्पके। त्रिका।

**वरला (ली)**। स्त्री। हंस्याम्। वरटायाम्। বোলতা। त्रिका। मे।

**वरवर्णिनी**। स्त्री। हरिद्रायां। रा नि व ६। लाक्षायाम्। प्रियङ्गुलतायाम्। गोरोचनायाम्। नार्य्याम्। मे।

**वरवारणः**। पु। लाङ्गलकीषविशेषे। चरि २० अ।

**वरवाह्लीकम्**। क्ली। कुङ्कुमे। शटी।

**वरवेल**। पु। बीरतरो। स चतुर्विध श्वेतकृष्णनीलरक्तभेदेन। वै निघ।

**वरशीतम्**। क्ली। त्वचि। दारचिनि। वै निघ।

**वरश्रेणी**। स्त्री। इन्द्रमूर्व्वयाम्। वै निघ।

**वरश्रकः**। पु। श्यामाके। वै निघ।

**वरा**। स्त्री। प्रशपुष्प्याम्। त्रिफलायां। प मु। भा छ रसिवल्लभपुगपाके। "त्रियावीरश्चवारिकेशरि दवरा।" वै निघ २ भ वा व्या चि सप्ताराशादी। वालिङ्गने। বেগুন। पाठायाम्। आकनादि। औड्रपुष्पे। जवा फूल। र मा। हरिद्रायाम्। वन्ध्याकर्कोटिकाम्। मद्ये। वाराहीकन्दे। शता वराजितायाम्। सोमराज्यां। वै निघ। शतमूल्यां। रा नि व ४। गुडूच्यां। रा नि व ३। मेदायां। ब्राह्म्याम्। ब्रह्मी शाक। रा नि व ५। विडङ्गायां। रा नि व ६। रेणुकायां। রেণুক। श च।

**वराक'**। पु। पर्पटके। ক্ষেৎপাপড়া। वै निघ।

**वराहनामा (न्)।** पु। वाराहीकन्दे। अ मा। वराहक्रान्तायाम्।

**वराहनिर्य्यूह।** पु। वराहमांसरसे। च सू २७ अ।

**वराहपत्नी।** स्त्री। अश्वगन्धायाम्। रा नि व ४।

**वराहपित्तम्।** क्ली। शूकरपित्ते। अस्य शोधन मत्स्यपित्तशब्दे द्रष्टव्यम्। शा को।

**वराहपुटम्।** क्ली। औषधपाकार्थे पुटभेदे। See वाराहपुटम्।

**वराहमांसम्।** क्ली। शूकरमांसे। गुणा— "वराहमांसं गुरु वातहारि हृद्यं बलस्वेदकरं बलीत्यम्। तस्माद्गुरु ग्रामवराहमांसं तनोति मेदोबलवीर्य्यवृद्धिम्॥" रा नि व १७।

**वराहशिम्बी।** स्त्री। शूकरशीर्ष्यशिम्बीग्राम। चि क क वन्ध्याप्रतीकारे।

**वराहाङ्गी।** स्त्री। क्षुद्रदन्त्याम्। वै निघ।

**वराहिका।** स्त्री। अश्वगन्धायाम्। रा नि व ४। कपिकच्छौ। आलाकुशी। रा नि व ३।

**वराही।** स्त्री। वाराहीकन्दे। रा नि व ७। मुस्तायां। रा नि व ६। अश्वगन्धायाम्। क्षुद्रघटकायाम्। वै निघ।

**वरिवस्या।** स्त्री। शुश्रूषायाम्। अम।

**वरिशी।** स्त्री। बडिशे। श र।

**वरिषाः।** स्त्री। वर्षर्त्तौ।

**वरिषाप्रियः।** पुं। चातकपक्षिणि। श र।

**वरिष्ठम्।** क्ली। ताम्रे। ताँबा। र मा। उशीरे। वै निघ। मरिचे। मे। पु। नागरङ्ग वृक्षे। नारङ्गा लेबुर गाछ। रा नि व ११। तित्तिरपक्षिणि। तितिर पाखी। मे। स्त्री (ष्ठा)। हरिद्रायां। वै निघ। आदित्यभक्तायाम्। हुड़हुड़े। रा नि व ४।

**वरिष्टिम्।** क्ली। उशीरे। वालके। बाला। सु चि १८ अ।

**वरिष्टिमूलम्।** क्ली। उशीरमूले। वेणा मूल। सु चि १८ अ।

**वरी।** स्त्री। शतावर्य्याम्। प मु। भा प्र भेष बाजी कामादिमन्दीपनरसे। 'शाम्री वरी वानरी।' मधुशतावर्य्याम्। महाशतावर्य्याम्। वै निघ।

**वरीयसी।** स्त्री। प्रसमुल्याम्। रा नि व ४।

**वरकः।** पुं। क्षुधान्यभेदे। वरके। चीनाधान सु सू ४६ अ। गुणा—क्षुधान्यवत्।

**वरुणः।** पुं। (Crataeva religiosa Syn Capparis trifoliata) स्वनामख्याततिक्तशाकवृक्षे। वरुन गाछ। हि बिलि म वरुण। क मदवसले। तेँ उदमहि, माजिचे; उलिमिरिचेट्टु। वम् वायवरणा। ता मरलिङ्गम तत्पर्य्याया,—वरण वराण सेतु सेतुतिक्तशाक कुमार कुमारक मेघ श्वसरी शिखिमण्डल श्वेतद्रुम श्वेतवृक्ष' साधुवृक्ष तमाल मारुतापह। गुणा—कटु' उ रक्तदोषघ्न शिरोवातहर स्निग्ध आग्नेय विद्रधिवातघ्न। रा नि व ९। अपिच,—"वरुण पित्तभेदी श्लेष्मकृच्छ्राश्ममारुतान्। निहन्ति गुल्मवातास्रक्रिमींश्चोष्णाग्निदीपनम्॥ कषायो मधुरस्तिक्तः कटुको रूक्षको लघु॥' भा। तत् पुष्पगुणा "पुष्प वरुणज ग्राहि पित्तघ्नमामवातजित्" राज १५। सु सू ३८ अ। वा सू १५ अ। वै निघ २भ वा व्या चि लघुनारायणतैले। नले। मे।

**वरुणग्रहः।** पु। तन्नामके अपस्मरे दुष्टग्रहविशेषे लक्षण—"तालुजिह्वे च नेत्रे च श्रवणी मेढ्रं च। श्याव रूपश्च यस्य स्यात्ताञ्जगौरवमेव च। त स्य दपरीतस्य बुद्धिमान् वरुणग्रहे। क्रम दं महाघोर तस्माद्रस्य विनिर्दिशेत्॥" ज द ५७ अ

**वरुणात्मजा।** स्त्री। मद्ये। अम।

**वरुणादिगणः।** पुं। तदादिद्रव्यवर्गे। वरुणसहचरद्वय शतावरी दहन मोरट बिल्व विषाणिक हिंगुदवी दिकण्टकमयाद्वयमङ्गलपल्लवदर्भरुजाकरैः गुणा—कफमेदोमन्दाग्निहर अधोवातशिरःशूल गुल्मान्तर्विद्रधिघ्नश्च। वा सू १५ अ। "वरुणा गणोह्येष कफमेदोनिवारण। विनिहन्ति शिरःशूल गुल्माभ्यन्तर विद्रधीन्॥" सु सू ३८ अ "वरुणार्त्तगलौ शिग्रु तर्कारी मधुशिग्रु क मेषशृङ्गी करञ्जौ च बिम्बाग्निमन्थमोरटा। शैरेयबिरी दर्भौ वरी वसुकचित्रकौ। बिल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च। वरुणादिगण॥" सु ३८ अ। च द अश्मरीचि।

**वरूथम्।** क्ली। चर्म्मणि। मे।

**वरेण्यम्।** क्ली। कुङ्कुमे। रा नि व १२।

**वरोटम्।** पुं। मरुवकपुष्पे। श मा।

**वरोत्पलम्।** क्ली। श्वेतरक्तपद्म। वै निघ

**वरोलः** । पुं । वरटे । भङ्गरोले । ভীমরল । त्रिका ।

**वरोहशाखी (इन्)** । पुं । प्लक्षवृक्षे । পাকুড় গাছ । रा नि व ११ ।

**वरोषधी** । स्त्री । आदित्यभक्तायाम् । হড়হড়িয়া । शाकीशाके । वै निघ ।

**वर्कणा** । स्त्री । तरुणस्त्रियाम् । सु चि १ अ ।

**वर्करः** । पुं । पशुजातीयतरुणे । युवा पशु । अम । छागे । त्रिका । मेषशावके । अटी भ ।

**वर्ग** । पुं । गणे । सु कल्प १ अ ।

**वर्गचर** । पुं । पाठीनमत्स्ये । চিতল মাছ । वै निघ ।

**वर्च्च (स्)** । क्ली । रूपे । विष्ठायां । तेजसि । मे ।

**वर्च्चस्क** । पुं, क्ली । विष्ठायाम् । अम ।

**वर्च्चस्कीट** । पुं । अमिमक्षिकीटविशेषे । मलक्रमी । বিষ্ঠার কীট । सु कल्प ८ अ ।

**वर्जः** । पुं । कपर्द्दके । কড়ি ।

**वर्जनम्** । क्ली । मारणे । हे च ।

**वर्णम्** । क्ली । कुङ्कुमे । हे च । स्वर्णे । मे । र मा स ज्व चि रक्तगिरिरसे । पुं, क्ली । शुक्लादि रङ्गे । রঙ্ । स बहुविध श्वेतपाण्डुधूसररक्तपीत हरितरक्तश्यामारुणपाटलश्यावधूम्रपिङ्गलकर्बुरेषु । चामर. । स गर्भस्थस्य षष्ठे मासि भवति । सुख बोध । अङ्गलेपने । स्वर्णे । मे । स्पर्शे । अङ्गरागे । हे च ।

**वर्णकम्** । क्ली । हरिताले । रमा । सुगन्ध चूर्णलेपने । अम । पुं, क्ली । चन्दने । विलेपने । मे । अमर । हिङ्गुलादौ । अम भ । साचे । अम ।

**वर्णकण्टम्** । क्ली । तुत्थे । তুঁতিয়া । वै निघ ।

**वर्णक्षत्** । क्ली । पीतवर्णचन्दने । वै निघ ।

**वर्णदम्** । क्ली । कालीयकचन्दने । जटा ।

**वर्णदा (त्री)** । स्त्री । हरिद्रायाम् । হলুদ । रा नि व ६ ।

**वर्णपुष्प (क)** । पुं । राजतरुणीपुष्पवृक्षे । রক্ত ঝাঁটি । वम् रक्तकोरंटा । रा नि व १० ।

**वर्णपुष्पी** । स्त्री । चक्रकाण्डीपुष्पवृक्षे । रा नि व १० । [ रा नि व १२ ।

**वर्णप्रसादनम्** । क्ली । अगुरुणि । काष्ठागुरुणि ।

**वर्णभू** । स्त्री । स्थौणेयके । গেঁঠেলা । वै निघ ।

**वर्णभेदिनी** । स्त्री । सुगन्धप्रियङ्गौ । वै निघ ।

**वर्णमातृका** । स्त्री । वाग्देवतायाम् ।

**वर्णमृत्तिका** । पुं । मृत्तिकाविशेषे । লালমাটী বা আলামাটী । रस चि ६ अ ।

**वर्णरे(ले)खा** । स्त्री । खटिकायाम् । খড়িত্রিকা ।

**वर्णलेखिका** । स्त्री । कठिन्याम् । रमा ।

**वर्णलोहकम्** । क्ली । राजपित्तले । वै निघ ।

**वर्णवती** । स्त्री । हरिद्रायाम् । जटा ।

**वर्णविलासिनी** । स्त्री । हरिद्रायाम् । वै निघ ।

**वर्णशाक.** । पुं, क्ली । गौरसुवर्णशाके । वै निघ ।

**वर्णसिः** । पुं । जले । उणा ।

**वर्णा** । स्त्री । आढ्क्यां । अरहर । हे च ।

**वर्णार्ह** । पुं । हरितमुद्गे । হারিমুগ । रा नि व १६ ।

**वर्णि** । क्ली । स्वर्ण । सिद्धान्तकौमुदी ।

**वर्णिका** । स्त्री । कठिन्यां । খড়ি । हारा ।

**वर्णिनी** । स्त्री । हरिद्रायाम् । रा नि व ६ ।

**वर्णोज्ज्वलम्** । क्ली । हरिताले । गन्धके ।

**वर्ण्यम्** । त्रि । वर्णकरे । क्ली । कुङ्कुमे । वै निघ । पुं । श्वेताञ्जके । वै निघ । वर्णकरमहाकषायगणे । यथा—"चन्दनतुङ्गपद्मकोशीरमधुकमञ्जिष्ठाशारिवा पयस्या सिता लता इति दशेमानि वर्ण्यानि भवन्ति ।" रक्तचन्दन पुन्नाग वा वकम पद्म काष्ठ, বেণার মূল, যষ্টিমধু মঞ্জিষ্ঠা, অনন্তমূল, ভূঁইকুমড়া, চিনি, দূর্ব্বা । च सू ४ अ ।

**वर्त्त** । पुं । गन्धके । वै निघ ।

**वर्त्तकम्** । क्ली । वर्त्तलौहे । বিদরী । रा नि व १३ । पुं । पक्षिविशेषे । ভারুই পাখী । হি বটেরী গুড়গুড়ে । योग र ज्व चि । तन्मांसगुणा —निर्दोषं वीर्य्यकरं पुष्टिकरञ्च । रा नि व १७ । "वर्त्तको विशदी रुच्यो यथा लावस्तथैव च ।" अत्रि २१ अ । अश्वखुरे । अम ।

**वर्त्तका** । स्त्री । वर्त्तकपक्षिणि । ভারুই, বটেরবিশেষ । अटी रा ।

**वर्त्तकी** । स्त्री । सप्तलायां । সাতলা । वै निघ ।

सुकन्दश गन्धपत्र पूतगन्ध सवाहक. । गुणाः—कटु उष्ण सुगन्धि वान्तिविसर्पविषघ्नः त्वग्दोषघ्नश्च । राजनि व १० । वैजयन्तीतुलसीवृक्षे । गन्धीनामगन्धद्रव्ये । व्याघ्रनखे । नथी । वै निघ । क्ली । वोलनामगन्धद्रव्ये । राजनि व ६ । हिङ्गुलि । राजनि व १३ । सिन्दूरे । वै निघ । पीतचन्दने । गुणाः—शीतलतिक्त कफपित्तवातघ्न कण्डूकुष्ठ-व्रणघ्न रक्तशोधकाश्च । राजनि व १२ ।

**वर्व्वरकः** । पुं । विन्ध्योत्तरप्रसिद्धे मदे । तज्जात शीतजलसदृशगुणम् । राजनि व १४ । क्ली । वर्व्वर चन्दने । स्त्री (का) । भार्ग्याम् । वामनहाटी । वै निघ ।

**वर्व्वरगन्धः** । पु । श्वेतरक्तमिश्रचन्दनविशेषे । वव्वरगन्धेति भाषा । वर्व्वर चन्दन । तत्पर्य्यायाः,—वर्व्वरीत्थ श्वेतवर्व्वरक शीत सुगन्धि पित्तारि सुरभि । गुणाः,—शीततिक्त वातपित्तकफकुष्ठ कण्डूव्रणनाशक रक्तसंशोधकश्च । वै निघ ।

**वर्व्वरा (री)** । स्त्री । भार्ग्याम् । वामनहाटी । कर्णस्फोटायाम् । काणछिड़ा । वै निघ । वन तुलस्याम् । वावुई तुलसी । तत्पर्य्यायाः —असुरसा वर्व्वा कवरी तुङ्गी खरपुष्पा अजगन्धिका अजगन्धा कवरा खरपुष्पिका । सा त्रिधा कृष्णशुक्लवटपत्रभेदेन । सा गुणाः —वर्व्वरीयितयं रुक्ष शीत कटु विदाहि च । तीक्ष्णं रुचिकर हृद्य दीपन लघुपाकि च । पित्तलं कफवातास्र दद्रुक्रिमिविषापहम् ॥” भा । शाकविशेषे । पुष्पविशेषे । मे । मक्षिकाभेदे । शब्द र ।

**वर्व्वराङ्गयम्** । क्ली । वर्व्वरचन्दने । वै निघ ।

**वर्व्वरीक.** । पु । वोले । वै निघ । भार्ग्याम् । वामनहाटी । वर्णा । तुलसीभेदे । वावुई तुलसी । शब्द च । महाकाले । माकाल । हेच ।

**वर्व्वरीगन्धा** । स्त्री । कर्णस्फोटायाम् । वन तुलस्याम् । वै निघ ।

**वर्व्वरोत्थम्** । क्ली । वर्व्वरचन्दने । श्वेत रक्त चन्दन । वै निघ ।

**वर्व्वा** । स्त्री । वर्व्वरिकायाम् । शब्द च ।

**वर्व्वर (क)** । पुं । (A...

The Babhul tree

। सं ...

रीनकाड़ि । वाभूल । उत् गुइड़ा । दा कालिक्ति कर । तत्पर्य्यायाः,—युगलाक्ष कण्टाल तीक्ष्ण कण्टक गोश्रृङ्ग पङ्क्तिवीज दीर्घकण्टक, कफान्तक दृढवीज अजभक्ष । गुणाः—कषाय उष्ण कफकासघ्न आमरक्तातिसारपित्तदाहार्शो घ्नश्च । राजनि व ८ ।

**वर्षः** । पु, क्ली । वृष्टौ । वत्सरे । अम ।

**वर्षकरी** । स्त्री । झिल्लयाम् । हेच ।

**वर्षकाली** । स्त्री । जीरके । वै निघ ।

**वर्षकेतुः** । पु । रक्तपुनर्नवायाम् । राजनि व ५ । शुक्लपुनर्नवायाम् । वै निघ ।

**वर्षणम्** । क्ली । वर्षावले । त्रिका । वृष्टौ । वृष्टि । शब्द र ।

**वर्षपाकी (इन्)** । पुं । आम्रातकवृक्षे । हेच. ।

**वर्षपुष्पा** । स्त्री । महाबलायां । राजनि व ४ ।

**वर्षप्रियः** । पु । चातकपक्षिणि ।

**वर्षवरः** । पुं । नपुंसके, षण्ढे । খোজা । अम ।

**वर्षा** । स्त्री । कृष्णजीरके । राजनि व ६ । मद व २ । स्वनामख्याते ऋतौ (नित्यबहु) । वर्षाकाल । तत्पर्य्यायाः,—प्रवृट् प्रावृट् प्रावृषा घनकाल घनाकर मेघागम जलदागम जलार्णव चातकानन्द ऋतौ तपात्यय । नभोनभस्यौ सिद्ध कन्ये वा वर्षा । “सिंहकन्ये स्मृता वर्षा ।” वर्षागुणाः—“शीता विदाहिन्यो वह्निमान्द्यानिल प्रदा ।” भा ।

**वर्षाघोषः** । पु । महाभेके । बड़ ব্যাং, সোণা ব্যাং । राजनि व १९ ।

**वर्षाङ्गी** । स्त्री । पुनर्नवायाम् । शब्द र ।

**वर्षाप्रियः** । पुं । चातकपक्षिणि । त्रिका ।

**वर्षाभवः** । पु । पुनर्नवायां । रक्तपुनर्नवायाम् । राजनि व ५ ।

**वर्षाभू** । पु । भेके । अम । भूलतायाम् । কেঁচো । मे । इन्द्रगोपकीटे । আষাঢ়ে পোকা । राजनि व । स्त्री । पुनर्नवायां । राजनि व ५ ।

... य । पमु । श्वेत

... च शोथदरोल । “हथीरश्व

पुनर्नवाशाके । श्वेत

। गुणा

—कफाग्निमान्द्यवातघ्न वमनं गुल्मशोफशूलघ्न च। रा नि व ७।

**वर्षाभ्वी** । स्त्री । पुनर्नवायाम् । भेकपर्ण्याम् ।

**वर्षामद** । पुं । मयूरे । शब्दकल्प । [शब्दकल्प ।

**वर्षाभ पारावत** । पु । चातकपक्षिणि ।

**वर्षालि** । पु । क्षुद्रायाम् । পিড়িং । वै निघ

**वर्षालङ्कायिका** । स्त्री । क्षुद्रायां । পিড়িং শাক । च टी भ ।

**वर्षावती** । स्त्री । भूकीटविशेषे । ইন্দ্রগোপ কীট । भेकपर्ण्याम् । अम । पुनर्नवायाम् । अमरमाला ।

**वर्षावसानः** । पुं । शरत्काले । रा नि व २१ ।

**वर्षाह्विकः** । पुं । निर्विषसर्पभेदे । ঢেলে সাপ । सु कल्प ४थ । [रामसमुद्रे ।

**वर्षाह्वा** । पु । पुनर्नवायाम् । च द शूल चि

**वर्षोपल** । पु । मेघोद्भवशिलायां । अम ।

**वर्ष्मम्** । क्ली । शरीरे । शब्दचन्द्रिका । [अम ।

**वर्ष्म (न्)** । क्ली । शरीरे । रा नि व १८ । प्रमाणे ।

**वर्ह** । पु, क्ली । मयूरपुच्छे । अम । ग्रन्थिपर्ण भेदे । গেঁটেলা । भरत । पत्रे । श र ।

**वर्हणम्** । क्ली । तगरपुष्पे । तगरपादुका । पिण्डीतगरे । रा नि व १० । पत्रे । श र ।

**वर्हनेत्रम्** । क्ली । मयूरपुच्छचन्द्रके । ময়ূর পুচ্ছের চাঁদ । वै निघ ।

**वर्हपुष्प** । पु । शिरीषवृक्षे । रा नि व ९ । कौलिङ्ग्याम । नोनआति । रा नि व १० । ग्रन्थिपर्णे । গেঁটেলা । वै निघ ।

**वर्हभार** । पु । मयूरपुच्छे । वै निघ ।

**वर्हि** । पु । चित्रकवृक्षे । अम । अग्नौ । मे । मयूरे । वै निघ । पु, क्ली (स) । दर्भे । कुशे । विका । ग्रन्थिपर्णे । গেঁটেলা । श र ।

**वर्हिकुसुमम्** । क्ली । ग्रन्थिपर्णपुष्पे । গেঁটেলা । अ च ।

**वर्हिचूड (डा)** । पु, स्त्री । ग्रन्थिपर्णभेदे । वै निघ । मयूरशिखायाम् । रा नि व ५ ।

**वर्हिजङ्घ** । पु । पृथुशिम्बश्योनाके । শোণা গাছ । रा नि व ९ । स्त्री (ङ्घा) । पीतदीप्ते । वै निघ ।

**वर्हिण** । पु । मयूरे । अम । क्ली । तगरे । पिण्डीतगरे । वै निघ ।

**वर्हिपित्तम** । क्ली । मयूरपित्ते ।

**वर्हि(र्हि)पुष्प** । पं । शिरीषवृक्षे । रा नि व । कौलिङ्ग्याम । रा नि व १० । क्ली । ग्रन्थिपर्णविशेष । च टी भ ।

**वर्हिशिख** । पु । श्योणके । গাঁটিশালা । रा नि व ११ । स्त्री (खा) । लघ्वग्निशिखा । ছোট ধারেকুশ । भा म श्लेष्म शूला चि । मयूरशिखायाम् । वै निघ ।

**वर्हिष्ठम्** । क्ली । बालके । বালা । प र्तु । भा ।

**वर्ही (न्)** । पु । कुक्कुटे । प र्तु । मयूरे । अम ।

**वलम्** । क्ली । व्यायामगम्यशक्तौ । सु सू १०थ ।

**वलभ** । पु । सौम्यकीटभेदे । सु कल्प ८थ ।

**वलयम्** । क्ली, पु । करभूषण । বালা । अम । पु । तन्नामककण्ठगतरोगे, गलगण्डरोगे । लक्षण—"वलास एवायतमुन्नतश्च शोफं करोत्यन्नगतिं निवार्य्य । तं सर्व्वथैवाप्रतिवार्य्यवीर्य्यं विवर्ज्जनीयं वलयं वदन्ति ॥" सु नि १६थ ।

**वलवती** । स्त्री । सूक्ष्मैलायां । रा नि व ६ ।

**वला** । स्त्री । (*Sida cordifolia*) वाट्यालके । বাড়িয়ালা । হি খিরিহিটা, বরিআরি, মহ্‌দবী, ককহিয়া, গুলশকরী । तत्पर्य्याया, वाट्यालक वलिनी समङ्गा ओदनिका ओदनी भद्रा भद्रौदनी खरकाष्ठिका कल्याणिनी भद्रवला मोटा पाटी वलाढ्या शीतपाकी वाटिका वाटी वाट्या वाट्याली निलया । वला चतुर्द्धा—वला अतिवला महावला नागवला चेति । सा गुणा—"वलाचतुष्टय शीत मधुरं वलकान्तिकृत् । स्निग्ध ग्राहि समीरास्रपित्तास्रक्षतनाशनम् । वलामूलत्वचश्चूर्णं पीतं सक्षीरमकरम् । मूत्रातिसार हरति दृष्टमेतन्न संशय । हरेन्महावला कृच्छ्र भवेद्वातानुलोमनी । हन्यादतिवला मेह पयसा सितया समम ॥" भा । श्वेतवाट्यालके । रा सा सं । सु सू ३८श संशोधने । च सू ४थ बल्य व । च द ज्व चि । "काकजङ्घा वला श्यामा ।" वा पि ज्व चि । "निदिग्धिका वला रास्ना ।" गोरक्ष्याम् । গোরক্ষচাকুলিয়া । च सू ४थ बृंहणे ।

सुकन्दक गन्धपत्र पूतगन्ध, सुवाहक। गुणा—कटु उष्ण सुगन्धि वान्तिविसर्पविषघ्न, त्वग्दोषघ्नश्च। राजनिर्घण्टः १०। वैजयन्तीतुलसीवृक्षे। मल्लिकानामगन्धद्रव्ये। व्याघ्रनखे। नखी। वैद्यकनिघण्टुः। क्ली। पीतसारगन्धद्रव्ये। राजनिर्घण्टः ६। हिङ्गुलि। राजनिर्घण्टः १३। सिन्दूरे। वैद्यकनिघण्टुः। पीतचन्दने। गुणा—शीतल तिक्त कफपित्तवातघ्न कण्डूकुष्ठव्रणघ्न रक्तशोधकश्च। राजनिर्घण्टः १२।

**वर्व्वरक**। पुं। विन्ध्यपर्व्वतप्रसिद्ध मद्रे। तत्पत्र शीघ्रफलसहश्रगुणम्। राजनिर्घण्टः १४। क्ली। वर्व्वरचन्दने। स्त्री (का)। भार्ग्याम्। वामनहाटी। वैद्यकनिघण्टुः।

**वर्व्वरगन्धः**। पुं। श्वेतरक्तमिश्रचन्दनविशेषे। वर्व्वरगन्धेति भाषा। वर्व्वर चन्दन। तत्पर्य्याया,—वर्व्वरीय श्वेतवर्व्वरक शीत सुगन्धि पित्तारि सुरभि। गुणा,—शीततिक्त वातपित्तकफकुष्ठ कण्डूव्रणनाशक रक्तसंशोधकश्च। वैद्यकनिघण्टुः।

**वर्व्वरा (री)**। स्त्री। भार्ग्याम्। वामनहाटी। कर्णस्फोटायाम्। काणछिंडा। वैद्यकनिघण्टुः। वनतुलस्याम्। वावुई तुलसी। तत्पर्य्याया—कवरी तुङ्गी खरपुष्पा अजगन्धिका अजगन्धा कवरा खरपुष्पिका। सा त्रिधा कृष्णशुक्लवटपत्रभेदेन। सा गुणा—"वर्व्वरीवितय रूक्ष शीत कटु विदाहि च। तीक्ष्ण रुचिकर हृद्य दीपन लघुपाकि च। पित्तदं कफवातास्र दद्रुकृमिविषापहम्॥" भा। शाकविशेषे। पुष्पविशेषे। मे। मक्षिकाभेदे। शब्दरत्नावली।

**वर्व्वराह्वयम्**। क्ली। वर्व्वरचन्दने। वैद्यकनिघण्टुः।

**वर्व्वरीक**। पुं। वोले। वैद्यकनिघण्टुः। भार्ग्याम्। वामनहाटी। उत्पा। तुलसीभेदे। वावुई तुलसी। शब्दचन्द्रिका। महाकाले। शाकान। हेमचन्द्रः।

**वर्व्वरीगन्धा**। स्त्री। कर्णस्फोटायाम्। वनतुलस्याम्। वैद्यकनिघण्टुः।

**वर्व्वरोत्थम्**। क्ली। वर्व्वरचन्दने। শ্বেত রক্ত চন্দন। वैद्यकनिघण्टुः।

**वर्व्वी**। स्त्री। वर्व्वरिकायाम्। वावुई तुलसी। शब्दचन्द्रिका।

**वर्व्वूर (क)**। पुं। (Acacia arabica) The Babhul tree वर्व्वूलवृक्षे। বাবলা গাছ। हिं वावुल। ते वल्लसुरु नल्लतुम्म। वम्-

रीमकहि। मा भूल। उत् गुहड़ा। द्रा कालिकिकर। तत्पर्य्याया,—युगलाक्ष कफान्तक तीक्ष्णकण्टक, गोश्रृङ्ग षट्पङ्क्तिवीज, दीर्घकण्टक कफान्तक दृढवीज अजभक्ष। गुणा—कषाय उष्ण कफकासघ्न आमरक्तातिसारपित्तदाहार्शोघ्न। राजनिर्घण्टः ८।

**वर्षः**। पुं, क्ली। वृष्टौ। वत्सरे। अमरः।

**वर्षकरी**। स्त्री। झिल्ल्याम्। हेमचन्द्रः।

**वर्षकाली**। स्त्री। जीरके। वैद्यकनिघण्टुः।

**वर्षकेतु**। पुं। रक्तपुनर्नवायाम्। राजनिर्घण्टः ५। शुक्लपुनर्नवायाम्। वैद्यकनिघण्टुः।

**वर्षणम्**। क्ली। वर्षोपले। त्रिकाण्डशेषः। वृष्टौ। वृष्टि। शब्दरत्नावली।

**वर्षपाकी (इन्)**। पुं। आम्रातकवृक्षे। हेमचन्द्रः।

**वर्षपुष्पा**। स्त्री। महाबलायाम्। राजनिर्घण्टः ४।

**वर्षप्रिय**। पुं। चातकपक्षिणि।

**वर्षवरः**। पुं। नपुंसके, षण्ढे। খোজা। अमरः।

**वर्षा**। स्त्री। कृष्णजीरके। राजनिर्घण्टः ६। मदनपाल २। स्वनामख्याते ऋतौ (नित्यबहु)। वर्षाकाल। तत्पर्य्याया,—प्रवृट् प्रावृट् प्रावृषा घनकाल घनाकर मेघागम जलदागम जलार्णव चातकानन्द ऋतौ तपात्यय। नभोनभस्यौ सिंह कन्ये वा वर्षा। "सिंहकन्ये स्मृता वर्षा।" वर्षागुणा—"शीता विदाहिन्यो वह्निमान्द्यानिल प्रदा।" भा।

**वर्षाघोष**। पुं। महाभेके। বড় ব্যাঙ, সোণা ব্যাং। राजनिर्घण्टः १९।

**वर्षाङ्गी**। स्त्री। पुनर्नवायाम्। शब्दरत्नावली।

**वर्षाप्रिय**। पुं। चातकपक्षिणि। त्रिकाण्डशेषः।

**वर्षाभवः**। पुं। पुनर्नवायां। रक्तपुनर्नवायाम्। राजनिर्घण्टः ५।

**वर्षाभू**। पुं। भेके। अमरः। भूलतायाम्। কেঁচো। मे। इन्द्रगोपकीटे। আষাঢ়ে পোকা। राजनिर्घण्टः १९। स्त्री। पुनर्नवायां। राजनिर्घण्टः ५। भेकपत्न्यां। रक्तपुनर्नवायां। पद्म। श्वेतपुनर्नवायां। चक्रदत्त चि शोथदाहतैल। "हवीरश्व वर्षाभू।"

**वर्षाभूशाक**। पुं। पुनर्नवाशाके। শ্বেত-পুণ্যা শাক। म घेट्टुल। क बेल्लडकिलु। गुणा

—কফাগ্নিমান্দ্যবাতঘ্ন রুচ্যতর গুল্মপ্লীহশূলঘ্নশ্চ। রা নি ব ৩।

**বর্ষাভ্বী**। স্ত্রী। পুনর্নবায়াম্। ভেকপর্ণ্যাম্।

**বর্ষামদ'**। পু। ময়ূরে। শব্দকল্প। [শব্দকল্প।

**বর্ষাভ্র পারাবত**। পু। চাতকপক্ষিণি।

**বর্ষালি**। পু। সৃক্কায়াম্। পিড়িং। বৈ নিঘ

**বর্ষালক্কায়িকা**। স্ত্রী। সূক্কায়াং। পিড়িশাক। চটী ভ।

**বর্ষাবতী**। স্ত্রী। ভূকীটবিশেষ। ইন্দ্রগোপ কীট। ভেকপর্ণ্যাম্। অম। পুনর্নবায়াম্। অমরমালা।

**বর্ষাবসান**। পুং। শরৎকালে। রা নি ব ২১।

**বর্ষাহিক.**। পু। নির্বিষসর্পভেদে। হেলে সাপ। সু কল্প ৪অ। [রামমগুরে।

**বর্ষাহ্বা**। পু। পুনর্নবায়াম্। চ দ শূল চি

**বর্ষোপল**। পু। মেঘোদ্ভবশিলায়াং। অম।

**বর্ষ্মম্**। ক্লী। শরীরে। হিন্দুপর্ণীপ। [অম।

**বর্ষ্ম (ন্)**। ক্লী। শরীরে। রা নি ব ১৮। প্রমাণে।

**বর্হ.**। পু, ক্লী। ময়ূরপুচ্ছে। অম। গ্রন্থিপর্ণভেদে। গেঁটেলা। ভরত। পত্রে। শ র।

**বর্হণম্**। ক্লী। তগরপুষ্পে। তগরপাদুকা। পিণ্ডীতগরে। রা নি ব ১০। পর্ণে। শ র।

**বর্হনেত্রম্**। ক্লী। ময়ূরপুচ্ছচন্দ্রকে। ময়ূর পুচ্ছের চাঁদ। বৈ নিঘ।

**বর্হপুষ্প**। পু। শিরীষবৃক্ষে। রা নি ব ৯। নীলঝিণ্ট্যাম্। নীলঝাটী। রা নি ব ১০। গ্রন্থিপর্ণে। গেঁটেলা। বৈ নিঘ।

**বর্হভার**। পু। ময়ূরপুচ্ছে। বৈ নিঘ।

**বর্হি.**। পু। চিত্রকবৃক্ষে। অম। অগ্নৌ। মে। ময়ূরে। বৈ নিঘ। পু, ক্লী (স)। দর্ভে। কুশে। বিকা। গ্রন্থিপর্ণে। গেঁটেলা। শ র।

**বর্হিঃকুসুমম্**। ক্লী। গ্রন্থিপর্ণপুষ্পে। গেঁটেলা। মচ।

**বর্হিচূড. (ডা)**। পুং, স্ত্রী। গ্রন্থিপর্ণভেদে। বৈ নিঘ। ময়ূরশিখায়াম্। রা নি ব ৫।

**বর্হিজঙ্ঘ**। পু। পৃথুশিম্বশ্যোনাকে। শোণা গাছ। রা নি ব ৯। স্ত্রী (ঙ্গা)। পীতরোঙ্গে। বৈ নিঘ।

**বর্হিণঃ**। পু। ময়ূরে। অম। ক্লী। তগরে। পিণ্ডীতগরে। বৈ নিঘ।

**বর্হিপিত্তম**। ক্লী। ময়ূরপিত্তে।

**বর্হি(র্হি)পুষ্প**। পু। শিরীষবৃক্ষে। রা নি ব ৯। নীলঝিণ্ট্যাম। রা নি ব ১০। ক্লী। গ্রন্থিপর্ণবিশেষ। চটী ভ।

**বর্হিশিখ'**। পু। স্থৌণেয়কে। গাঁটিয়ালা। রা নি ব ১১। স্ত্রী (খা)। লঘুধাতক্যা। ছোট ধাইফুল। ভা ম ১ম মু ধা পি। ময়ূরশিখায়াম্। বৈ নিঘ।

**বর্হিষ্ঠম্**। ক্লী। বালকে। বালা। প মু। মা।

**বর্হী (ইন্)**। পু। কুশবর্ণে। প মু। ময়ূরে। অম।

**বলম্**। ক্লী। ব্যায়ামসামর্থ্যশক্তৌ। সু সূ ১৫অ।

**বলভ**। পু। সৌম্যকীটভেদে। সু কল্প ৮অ।

**বলয়ম্**। ক্লী, পু। করভূষণে। বালা। অম। পু। তন্নামককণ্ঠগতরোগে, গলগণ্ডরোগে। লক্ষণ—"বলাস এবায়তমুন্নতঞ্চ শোফং করোত্যন্নগতিং নিবার্য্য। তং সর্ব্বথৈবাপ্রতিবার্য্যবীর্য্যং বিবর্জ্জনীয় বলয় বদন্তি॥" সু নি ১৬অ।

**বলবতী**। স্ত্রী। সূক্ষ্মৈলায়াং। রা নি ব ৬।

**বলা**। স্ত্রী। (Sida cordifolia) বাঘ্যালক। বাড়িয়ালা। হি খিরিহিটা, বরিয়ারি, সহদেবী, কাকহিয়া, গুলশকরী। তৎপর্য্যায়, বাট্যালক বলিনী সমঙ্গা ওদনিকা ওদনী ভদ্রা ভদ্রৌদনী খরকাষ্ঠিকা কল্যাণিনী ভদ্রবলা মোটা পাটী বলায়া শীতপাকী বাটিকা বাটী বাট্যা বাট্যালী নিলয়া। বলা চতুর্দ্ধা— বলা অতিবলা মহাবলা নাগবলা চেতি। সা গুণা—"বলাচতুষ্টয় শীত মধুর বলকান্তিকৃত্। স্নিগ্ধ গ্রাহি সমীরাস্রপিত্তাস্রক্ষতনাশনম্। বলামূলত্বচশ্চূর্ণ পীত সক্ষীরমৈকরম্। মূত্রাতিসার হরতি দৃষ্টমেতন্ন সংশয়। হরেন্মহাবলা কৃচ্ছ্রং ভবেদ্বাতানুলোমনী। হন্যাদতিবলা মেহ পয়সা স্থিরয়া সমম্॥" ভা। শ্বেতবাট্যালকং। রা সা স। সু সূ ৩৮অ সংশোধনে। চ সূ ৪অ বল্য ব। চ দ জ্ব চি। "কাকনাসা বলা শ্যামা।" বা চি জ্ব চি। "নিদিগ্ধিকা বলা রাস্না।" গোরক্ষ্যাম্। গোরক্ষচাকুলিয়া। চ সূ ৪অ বৃংহণে।

दारुणपाचरी वातकोपना रूक्षा कण्ठशोधनी च। रा नि व ८।

**वव्बू(व्वो)ल'।** पुं। वर्ब्बूरवृक्षे। বাবলা গাছ। तत्पर्य्यायगुणा,—"वव्वूल किङ्किरात स्यात् किङ्किराट सपीतक। स एव कथित स्वल्पशोभा षटपदमोदिनी॥ वव्वूल कफनुद ग्राही कुष्ठ क्रिमिविषापह॥" भा।

**वव्वूलनिर्य्यास:।** पुं। वब्बूरवृक्षनिर्य्यासे। বাবলার আঠা। तद्गुणा,—वव्वूलस्य तु निर्य्यासो ग्राही पित्तानिलापह। रक्तातिसार पित्तासमेहप्रदरनाशन। अपस्मारनक शीत शोणितस्रुतिवारण। [ मे।

**वशा।** स्त्री। वन्ध्यायाम्। বাঁজা। करिण्याम्।

**वशाढ्यक'।** पुं। शिशुमारे। শুশোক। श र।

**वशा(सा)पायी** (इन्)। पुं। कुक्कुरे। श मा।

**वशाच्चार।** पुं। चारे। र मा।

**वशिका।** स्त्री। अगुरुणि। श च। [ मिच।

**वशिजाता।** स्त्री। पुष्पदानीलतायाम्। वै

**वशिनी।** स्त्री। शमीवृक्षे। শাঁই গাছ। मन्नायाम्। পরগাছা। श च। लज्जालुकायाम्।

**वशिरम्।** क्ली। सामुद्रलवणे। रा नि व ६। पु। गजपिप्पल्याम्। प सु। भा म १ भ। चव्ये। চই। रा नि व ६। च द अग्निमरीचि जयकार्ने। मर्कटस्नकरवणजाती। अपामार्गे। আপাঙ। रा नि व ४। सु चि ७ अ। रक्तापामार्गे। भा पू १ भ। सूर्य्यावर्त्तभेदे। শ্বেত হুড়হুড়ে। इलयग। मेष अन्नपि चि इइत्सुधावतीगुग्मां। च द शूल चि रामसप्डूरे। वचायां। বচ। श च।

**वशिष्ठ।** पुं। वशिष्ठीनामसन्यप्रवेतरि।

**वशीकरणम्।** क्ली। मणिमन्त्रौषधैर्वशीकरणे।

**वशीर'।** पुं। गजपिप्पल्या। जटा। चविकायां। চই। अपामार्गे। আপাঙ। वै निघ।

**वश्यम्।** क्ली। लवङ्गे। श च।

**वश्या।** स्त्री। नीलापराजितायाम्। मद व १। गोरोचनायाम्। वै निघ। [ सु ८ अ।

**वश्यात्मा** (न्)। त्रि। वशीकृतचित्तेन्द्रिये। च

**वषट्फलम्।** क्ली। कङ्कोलि। रा नि व १२।

**वसनम्।** क्ली। तेजपत्रे। रा नि व ६। स्त्री (क्ली)। पोतकावरणे। वै निघ।

**वसनाह्वय:।** पुं। तेजपत्रे।

**वसन्त'।** पुं। फाल्गुनादि। বসন্তকাল। तत्पर्य्याया,—पुष्पसमय सुरभि' मधु माधव कण्ठ ऋतुराज पुष्पमास पिकानन्द काम कामसख फाल्गुनानुज। स च फाल्गुनचैत्रात्मक। "वसन्त कुसुमोद्गमौ।" मधुमाधवौ वसन्त इति केचित्। गुणा—"वसन्तो मधुर स्निग्ध श्लेष्मवृद्धिकरश्च स।" भा। अतिसारे। श र।

**वसन्तक'।** पुं। पृथग्भिन्नश्योणाकभेदे। সোণা-বিশেষ। रा नि व ९।

**वसन्तकुसुम'।** पुं। वृक्षविशेषे। বসন্তফুলের গাছ। "वसन्तकुसुम शैलुसयितोविभकुन्तलित।" श मा।

**वसन्तकुसुमाकर:।** पुं। वाजीकरणे प्रमेहाधिकारे च रस। पाठ—"पृथक् द्वौ हाटक चन्द्र त्रयो वङ्गाहिकान्तकम्। चत्वार गुडमभ्रञ्च प्रवालमौक्तिकन्तथा। भावना गव्यदुग्धेन भावनेक्षुरसेन च। वासालाक्षारसोदीच्यरम्भाकन्द प्रसूनकै। शतपत्ररसैनैव मालत्या कुसुमोदकै। पश्चान्मृगमदैर्भाव्य सुगन्धिरससम्भवे। गुञ्जाद्वयमिद सेव्य सितामध्वाज्यसयुतम्॥" कुसुमोदकै इति द्वितीय पाठ। रस र। "द्विभाग हाटक चन्द्रम्" इति र सा सं पाठ। हाटक स्वर्णे। चन्द्र रौप्य। रम्भाकन्दप्रसूनकै रम्भामूलरस पुष्परसैश्च। शतपत्ररसेन पद्मपुष्परसेन। সোণা ২ ভ রূপা ২ভ (মতান্তরে কর্পূর), বঙ্গ শীষা এবং লৌহ প্রত্যেক ৩ ভ অভ্র, প্রবাল, মুক্তা প্রত্যেক ৪ ভ একত্র করিয়া দুগ্ধ ইক্ষুরস, বাসকছালের রস, লাহার কাথ, বালার কাথ, কলার এঁটের ও মোচার রস, পদ্মের রস, মালতীফুলের রস বা কাথ ও মৃগনাভির কাথে যথাক্রমে ভাবনা দিবে। মাত্রা ১ র।

**वसन्तघोषी** (इन्)। पुं। कोकिले। वै निघ।

**वसन्तजा।** स्त्री। वासन्तीलतायां। शुक्लयूथिकायाम्। वासन्तीवृक्षे। ছোট বাসক। रा नि व १०।

**वसन्ततिलकः ।** पु । वाजीकरणाधिकारे रस । पाठ—"द्वौ भागकतोलकं घनगुणं लौहात्तथ पारदायत्वारो नियतामत बङ्गयुगलं चैकोकृत मर्द्दयेत् । मुक्ताविद्रुमयो रसेन समता गोक्षुरवासेयुग्मा सर्व्वे वल्यकरौषधीयं सुद्हातनं पचेत् समधा । कस्तूरीघनसारमेरर्टितरसे पश्चात सुसिद्धो भवेत् ।" रस र । रसाय । स्वर्ण १ तो अभ्र २ तो लौह ३ तो पारा ४ तो वङ्ग २ तो मुक्ता २ तो प्रवाल २ तो । क्ली । पुष्पभेदे ।

**वसन्तदूतः ।** पु । आम्रवृक्षे । रा नि व ११ । कोकिले । रा नि व १९ । स्त्री (ती) । पाटलावृक्ष । पारुल गाछ । रा नि व १०।२१ । "पाटला वसन्तदूती ।" जलयं । पुष्पद्यविशेषे, गणि कारीति नाम्ना लोकये प्रसिद्धे । रा नि व १० । कोकिलायाम् । रा नि व १९ । माधवीलतायां । रा नि व २२ ।

**वसन्तद्रु'** । पु । आम्रवृक्षे । त्रिका ।

**वसन्तपुष्प ।** पु । धूलीकदम्बे । रा नि व ९ ।

**वसन्तमण्डनम् ।** क्ली । सिन्दूरे । रक्ताभ्रे । वै निघ ।

**वसन्तललना ।** स्त्री । शुक्लयूथ्याम् । श्वेत यूई । वै निघ ।

**वसन्तव्रतः ।** पुं । मसूरके । वै निघ ।

**वसन्तार्त्त' ।** पु । विभीतकवृक्षे । वै निघ ।

**वसन्तोत्सवमण्डनम् ।** क्ली । हरिताले । वै निघ ।

**वसा ।** स्त्री । मेदायाम् । रा नि व ५ । मांस रोहिण्यां । मेदोधातौ । रा नि व १८ । शुद्धमांस भवस्नेहे । चर्व्वी । भा ४भ दारोचि । सु शा ४च । "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता । मेदस सावमाणस्य स्नेहो वा कथिता वसा ॥" गुणा—"वसा मज्जा च वातघ्नी बलपित्तकफप्रदा । शोकरी माहिषी या सा वातला श्लीपवर्द्धिनी । सार्पंत्राकुलगोधेया लेपने व्यङ्गकुष्ठहा ।" मत्स्यश्रिशु मारमकरयाहादीनां वसाप्येवं । सा विसर्पहरा हृद्या कुष्ठरोगविनाशिनी च । अत्रि १४च ।

**वसाढ्य ।** पु । शिशुमारे । शुशुक । त्रिका ।

**वसादनी ।** स्त्री । पीतशिंशपायाम् । वै निघ ।

**वसामेह ।** पु । वातजन्यप्रमेहरोगे । तत्र रोगी वसातुल्य मेहति । सु नि ६च ।

**वसारोहम् ।** क्ली । छत्रिकायाम् । कौंड़क- छाता । छाता ।

**वसिरम् ।** क्ली । सामुद्रलवणे । धरणि । गजपिप्पल्यां । चटी । सु सू ३८च ।

**वसिर' ।** पु । मूर्व्वावर्णक्षुपे । हड़हड़े । अपामार्गे । सु सू ३८च वीरतर्व्वादिगणे । च सू ४च । रक्तापामार्गे । भा । मर्कटपिप्पलीनामकक्षुपजाती, अपामार्ग इति प्रसिद्धि । जलयं । वारिनिर्द्दें । जलनिम् । कोपान्तरम् ।

**वसो (इन्)** । पुं । अलनकृमि । थेड़े ।

**वसु ।** क्ली । रत्ने । धने । अम । हाटके । स्वर्ण । विश्व । वारमलिकायाम् । सोना । औषधे । वै निघ । हृद्धौषधे । मे । जले । यथा । पु । वकवृक्षे । अम । श्वेतरक्तवसुके । श्वेत रक्त वासना । रा नि व ५ । श्वेतार्के । वै निघ । पीतमुद्गे । हे च । अग्नौ । रश्मौ । वि । मधुरे । शुष्के । हे च । स्त्री । ऋद्धौ । हद्दौ । श र ।

**वसुकम् ।** क्ली । शाम्भरलवणे । अम । पांशु लवणे । रा नि व ६ । लवणागुरुणि । रा नि व १२ । चारलवणे । भा पू २भ । वकपुष्पे । वास्तूकशाके ।

**वसुक ।** पुं । स्वनामख्यातक्षुपे । वासना गाछ । स च श्वेतरक्तपुष्पभेदात् द्विविध । सा गुणा—कटु तिक्त उष्ण पाके शीतल अजीर्ण गुल्मघ्न । लघी श्वेती रसायन । रा नि व ५ । तत्पाकगुणा—कफाग्निमान्द्यवातहर रुच्यतर गुल्मशोथशूलघ्न । रा नि व ७ । च द उद्यादौ । सु चि ७च । अर्कवृक्षे । सु सू ३८च । च सू ४च । रक्तार्क, मन्दारार्के । रा नि व १० । पीतमुद्गे । वै निघ । वकपुष्पवृक्षे ।

**वसुकीटरम् ।** क्ली । तालीशपत्रे । रा नि व ६ ।

**वसुचारकम् ।** क्ली । स्वर्णे । वै निघ ।

**वसुच्छिद्रा ।** स्त्री । महामेदायां । रा नि व ५ ।

**वसुद्रुम ।** पु । उदुम्बरवृक्षे । यज्ञडुमुर । वै निघ ।

**वसुधा (खर्ज्जूरिका) ।** स्त्री । भूखर्ज्जूरिकायां खर्ज्जूरीवृक्षे । छोट खेजुर गाछ । रा नि व ११ ।

सतत'। पुं। कपि। वै निघ।

सतत(क)ज्वरः। पु। श्लामाशयस्थकफकृतज्वरे। स च प्रतिदिनं कालद्वयानुवर्त्तनात् किञ्चिदून। सु नि। "अहोरात्रे सततकः द्वौ कालावनुवर्त्तते।" मा नि।

सतसा। स्त्री। नागवल्लीभेदे। एक प्रकार पान गाछ। वम् सातसोपर्ण। रा नि व ११। See नागवल्ली।

सतिलाका। स्त्री। चुचु शाके। भा पू १भ शा व। See चुचु।

सतो। सौराष्ट्रदि। ई च। (अभावे पड़ पपटो ग्राह्या।)

सतीन (क)। पुं। कलायभेदे। मटर। रा नि व १६। गुणा—मलशुद्धिकर। सु सू ४६ अ। सु चि ३अ। च द वपा चि। मापग्रोड़ो। माषकलाय। हरेणो। अरहर। खण्डिकै। त्रैशारि। अ टो भ। "कलायस्त्रिपुट प्रोक्त सतोनो वर्त्तुलो मत।"

सतील (क)। पु। वंशे। हारा। सबो नके। रा नि व १६। स्त्री (ला)। विष्णुक्रान्तायां। अपराजिता। रा नि व ५ कलायभेदे। तेउड़ा। "सतीला निष्क्रिका तिपुटो।" भ च। तद्गुणा—"सतीला वातला रुचा वात पित्त विषापहा। अन्यणा सा तु तिक्ता च वातघ्नी श्लेष्मपित्तला॥"

सतुषम्। क्ली। धान्ये। धान। शब्दकल्प।

सतेर। पु। तुषे। तुषा।

सत्कादम्ब। पु। कैलिकदम्बवृक्षे। केलिकदम्ब। भ च। "कैलिश्च सत्कादम्ब मतभू प्रिय पालक।"

सत्काञ्चनार। पु। रक्तकाञ्चने। "सत्काञ्चनार कामालु।" भ च।

सत्काण्ड। पु। श्येनपक्षिणि। बाजपाखी। भ च।

सत्वम्। क्ली। आत्मनि। धरणि। मनसि। "सत्वसंज्ञो मनसि।" च सू १अ। बले। स्वभावे। मी। मनोविकारी। "सत्त्व मनोविकारी स्यात्तदा दत्ता तथा स्थिति।" रा नि व २१। प्राणिमात्रे। अम। क्रमो। कृमि। सु चि ८अ। सारे। रस। धरणि। "भातद निर्गत सार सत्वमित्यभिधो यते।" शुबभेदे। तत् त्रिविधं शुद्धराजसतामस भेदेन। च शा ४अ।

सत्त्वः। पु, क्ली। जन्तौ। अम।

सत्त्वशुद्धिः। स्त्री। धातुसारस्य निर्मलीकरणे। रस चि ४अ।

सत्त्वावजय। त्रि। शरीरस्याहितकररूपा दिभ्य मनोनिवर्त्तिव्यावर्त्तके औषधे। च सू ११अ।

सत्त्वादिस्थानम्। क्ली। हृदये। च।

सत्पत्रम्। क्ली। पद्मस्य कोमलदले। भ च।

सत्फलः। पुं। दाड़िमवृक्षे। भ च।

सत्फलदः। पुं। बिल्ववृक्षे। रा नि व ११।

सत्य। पुं। अश्वत्थवृक्षे। रा नि व ११।

सत्यकर्मा (न्)। पुं। बिल्ववृक्षे। बेल गाछ। वै निघ।

सत्यनामा (म्नो)। स्त्री। ब्राह्मयाम्। ब्राह्मी शाक। वै निघ। आदित्यभक्तायाम्। हड़ हड़िया। वै निघ।

सत्यफल'। पु। बिल्ववृक्षे। रा नि व ११।

सत्यवती। स्त्री। शमीवृक्षे। ब्राह्मयाम्। ब्राह्मी शाक। वै निघ।

सत्यवाक्। पुं। काके। विका।

सत्याह्वा। स्त्री। ब्राह्मयाम्। ब्राह्मी शाक। वै निघ।

सत्वक्। स्त्री। शिरायाम्। रा नि व १८।

सत्सार। पुं। वृक्षविशेषे। सत्सार गाछ। शब्दकल्प।

सक्तुकन्दक। पुं। अष्टविधस्थावरविषान्तर्गते विषे। स च पीतवर्ण। अमि श्लाम ५१अ।

सथुत्कारम्। क्ली। थुत्कारसहितवचने। ई च।

सदंशक। पुं। कर्कटे। काँकड़ा। रा नि व १९।

सदंशवदन। पुं। कङ्कपक्षिणि। काँकपाखी। रा नि व १९।

सदञ्जनम्। क्ली। पुष्पाञ्जने। भ च।

सदनम्। क्ली। अवसादे। मा नि। जले। मी।

सदाकुसुमम्। क्ली। धातकीपुष्पे। वै निघ। च क का च सा चि।

**सदागतिः** । पु । वायौ । अम । सूर्य्ये । मे ।

**सदागतिशत्रुः** । पु । एरण्डवृक्षे । चिक्रक स्त्रौ री थि अपरामासने ।

**सदातोया** । स्त्री । एलापर्ण्याम् । কাঁটা আমরুলী । श च ।

**सदानर्त्तः** । पु । खञ्जनपक्षिणि । श च ।

**सदापुरः** । पु । कैवर्त्तमुस्तायाम् । কেওট মুতা । वै निघ ।

**सदापुष्पः** । पु । नारिकेलवृक्षे । श मा । श्वेतार्के । শ্বেত আকন্দ । मन्दारार्के । লাল আকন্দ । रा नि व १० । See राजार्क । अर्क वृक्षे । আকন্দ গাছ । कुन्दवृक्षे । কুঁদ গাছ । रा नि व १० । कपिपिप्पल्याम् । লাল আপাঙ্ । वै निघ । स्त्री (पी) । अर्कवृक्षे । আকন্দ গাছ । च सू ४ अ । सु सू ४१ अ । रक्तार्के । प सु । च वि ८ अ । कार्पासवृक्षे । কাপাস গাছ । वै निघ ।

**सदाप्रसूनः** । पु । रोहीतकवृक्षे । রোহিড়া । रा नि व ८ । रक्तरोहितके । वै निघ । कुन्दवृक्षे । अर्कवृक्षे । रा नि व १० ।

**सदाफलः** । पु । नारिकेलवृक्षे । भा म था व । उदुम्बरवृक्षे । যজ্ঞডুমুর । मे । रा नि व ११ । चा सू १५ अ । "न्यग्रोधपिप्पलसदाफलरोध्रयुग्मम् ।" विल्ववृक्षे । रा नि व ११ । सपुष्पवार्त्ताकौ । কুশি-বেগুন । स । स्त्री (ला) । विष्णुक्रान्तिवृक्षे । रा नि व १० । वार्त्ताकुविशेषे । মক্কো বেগুন, গুলিবেগুন । गुणा —त्रिदोषघ्नी रक्तपित्तप्रसादनी कण्डूकच्छूघ्नी च । राज ।

**सदाभद्रा** । स्त्री । गाम्भारीवृक्षे । प सु । भा म १ भ मू धा चि ।

**सदामण्डलपत्रकः** । पु । श्वेतपुनर्नवायाम् । वै निघ ।

**सदामांसी** । स्त्री । मांसरोहिणीभेदे । रा नि व १२ । गुणा —मांसरोहिणीसमा ।

**सदावृन्तः** । पुं । विल्ववृक्षे । वै निघ ।

**सदास्यन्दनम्** । क्ली । निष्यन्दे । विश्व ।

**सद्म (न्)** । क्ली । कले । मे । गृहे । अम ।

**सद्यःप्राणकरः** । त्रि । सद्योहतमांसादिमांस नवान्नादौ । "सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनं । घृतमुष्णोदके स्नान सद्यःप्राणकराणि षट् ॥" चाणक्य ।

**सद्यःप्राणहरः** । त्रि । आघातमात्रेणैव जीवन नाशके । तथाविधदेहमर्मस्थाने यत्राहते तत्क्षण म्रियते । सु शा ६ अ । सद्योमारकद्रव्ये, शुष्क मांसतरुणदध्यादौ । सु सू ४६ अ । "पूतिर्मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥" चाणक्य ।

**सद्यःप्रोषणम्** । क्ली । आहारे । वैद्यकम् ।

**सद्यःशोथा** । स्त्री । शूकशिम्ब्याम् । আলকুশী । श च ।

**सद्योव्रणः** । पुं । सद्योजातक्षते । निदान— "नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः । भवन्ति नानाकृतयो व्रणास्ता॥" ते च षड्विधा छिन्न भिन्न विद्ध क्षत पिच्छित घृष्टश्चेति । मा नि । अपिच—"सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः । अनन्तैरपि तैरङ्गमुच्यते कुट्टमष्टधा ॥ घृष्टावकृत्तविच्छिन्नप्रविलम्बितपातितं । विद्धं भिन्नं विदलितम् ॥ तत्र घृष्ट त्वसीकया । रक्तलेशेन वा युक्तं सप्लोषं छेदनात् स्रवेत् । अवगाढं ततः क्षतं विच्छिन्नं स्यात् ततोऽपि च । प्रविलम्बि सशेषास्थि पातितं पतितं ततो । सूक्ष्मास्यशल्यविहतं विद्धं कोष्ठविवर्जितम् । भिन्नमन्यद्विदलितं मज्जरक्तपरिप्लुतं । प्रहारपीडनात् क्षेपात् सहास्थ्ना पृथुतां गतम् ॥" वा उ २६ अ ।

**सद्योमण्डलपत्रकः** । पुं । श्वेतपुनर्नवायाम् । वै निघ ।

**सद्योमांसम्** । क्ली । अभिनवमांसे । টাট্‌কা মাংস । गुणा —बल प्राणवर्द्धकम् । "सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनं । घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षट् ।" चाणक्य । [श च ।

**सनः** । पुं । घण्टापाटलवृक्षे । ঘণ্টাপারুল ।

**सनपर्णी** । स्त्री । अपराजितायाम् । श र । शालपर्ण्यौच ।

**सनाभः** । स्त्री । श्वेतपाटलौ । শ্বেত পারুল । वै निघ ।

**सनामकः** । पुं । शोभाञ्जनवृक्षे । श च ।

**सनिग्रहः** । पुं । द्विविधसन्दंशान्यतरसन्दंशे । स लोहकारसन्दंश इव कीलबद्ध । अनिग्रहश्च अनिबन्धन सर्वकार्य्येव । सु टी ७ अ ।

**सनिष्ठेवम्**। क्ली। सथुत्कृते। अम।

**सन्ततज्वरः**। पु। निरन्तरज्वरे। लक्षणं—"सप्ताह वा दशाह वा द्वादशाहमथापि वा। सन्तत्या यो विसर्गी स्यात् सन्तत स निगद्यते॥" दोष धातुमलमूत्रकोपे सततोत्पत्तिरिति चरक।

**सन्तमक.**। पु। तमकश्वासे। तल्लक्षण,—"ज्वर् स्वेद थमथुपाय कण्ठघुर्घुरिकान्वित। विशेषाद् दुर्द्दिनेता स्यच्छ्वास स्यात् तमको मत॥" इति। सु उ ५१ अ।

**सन्तर्पणम्**। क्ली। "द्राक्षादाडिमखर्जूरीकदली घृतमधुमकरायुक्तं लाजचूर्णं। "द्राक्षा दाडिम खर्जूरकदलीशर्करान्वित। लाजाचूर्णं समभ्याज्य सन्तर्पणमुदाहृतम्॥" रा नि व २२। अतिभोजने। सु सू ४४ अ। अतिदर्शी, रसादिवर्द्धक नवान्न मधा दातिसेवने। च द ज्व चि।

**सन्ताम**। अथवर्वे। अम। स्त्री (ना)। नीलापराजितायाम्। वै निघ। [याम्।] वै निघ।

**सन्तानच्छेदिका**। स्त्री। नीलापराजिता

**सन्तानिका**। स्त्री। मर्कटजालके। माकड़ जालि यास। रा नि व ८। फेने। क्षुरिकाफले। धारा। चौरसरे। मालाई। गुणा —गुरु शीता वृष्या पित्तरक्तवातजित्। रा नि व १५। अपिच, —"तर्पणी वृष्यो स्निग्धा बलास बल शुक्रला।" मिष्टान्नविशेषे। गुरखाजा। यथा—"दुग्धस्य शरावचतुष्टय शर्करामर्दशरावपरिमिताम् घृत शरावपादेकञ्च गृहीत्वा तदुर्ध्वे आवर्त्तेन घनी भूते छत्ते स्थिते सन्तानेन बहुतरफेनो भविष्यति, तत्फनक्षितदुग्धस्य तथाङ्गारोपरि रक्षणात् सरो जायते। तत्सरमर्द्ध्य चतुष्कोणाकृति निर्माय घृतेन भृष्टा एकतारकशर्करारसे मग्न कुर्य्यात्, किन्तु तथाधिकक्षणं न तिष्ठेत्।" पाकराज।

**सन्ताप**। पुं। तापे। रा नि व २०। दाह रोगे। "खेदावरोध सन्ताप।" मा नि।

**सन्दंश**। पुं। सन्दंशिकायाम्। सौंड़ाशी। हे च। नासारोमापहरणयन्त्रभेदे। नाक्चोणा। सु चि १ अ। लवाशिरासायुगतशल्योद्धरणार्थे योड़शाङ्गुलयन्त्रे। तस्य सनिग्रहानिग्रहौ द्वौ भेदौ भवत। सु सू ७ अ।

**सन्दंशिका**। स्त्री। सन्दंशयन्त्रे। सॉड़ाशी, काकाशि, चिम्टा। मे।

**सन्दानिका**। स्त्री। खरिखदिरे। बिट्‌खदिर। रा नि व ८। (नी) गोशालायाम्। गोयाल। हे च।

**सन्दाह**। पु। सम्यग्दाहे। तालोष्ठमुखदाहे। रा नि व २०।

**सन्दीप्य**। पुं। मयूरशिखावृक्षे। श च।

**सन्दुष्टभोजनम्**। क्ली। संयोगविरुद्धभोजने। मा नि यक्ष्मा चि।

**सन्धानम्**। क्ली। मद्ये। रा नि व १४। सौराष्ट्र मृत्तिकायाम्। पङ्कपर्पटी। सुरासवकृतमद्ये। "द्रवेषु चिरकालस्थ द्रव्य यत् सन्धित भवेत्।" गुणा —लघु रुच्य पाचन वातनाशनञ्च। वै निघ। सुरासन्धीकरणे। मद टैवशारि करा। शब्द कल्प नयनानन्द। काञ्जिके। इला। स्थाने। रा नि व २०।

**सन्धानिका**। स्त्री। भोज्यद्रव्यविशेषे। आचार इति लोके। आमसन्धानिकायाम्। आमेर आचार। यथा—सर्षपा १ श मरिच २ तो लवणं ६ तो मेथिका २ तो जीरकं २ तो हरिद्रा १ तो नागरसुतकं १ तो कृष्णजीरक १ तो एकत्र चूर्णयेत। आमफलानि २० निरस्थीनी द्विखण्डानि चतुःखण्डानि वा कृत्वा तदभ्यन्तरे पूर्व्वोक्तचूर्णं पूरयित्वा शलाकया बिद्धा च तैले क्षिपेत्। पाकराज।

**सन्धानी**। स्त्री। सन्धाने। अ र।

**सन्धानीयवर्ग.**। पु। पद्मम दशकाख्यमहा कषायवर्गे, भग्नसयोजने। यथा—मधुकमधुपर्णी पृश्निपर्ण्यम्बष्ठकीसमङ्गा मोचरस धातकीलोध्रप्रियङ्गु कट्फलानीति दशेमानि सन्धानीयानि भवन्ति। यष्टिमधु, गुलञ्च, चाकुले, आकनादि, वरा-क्रान्ता मोचरस, धाइफुल, लोध, प्रियङ्गु, कट्फल। च।

**सन्धारणीय**। वि। उपहर्ये। धारक। च सू ४ अ।

**सन्धि**। पुं। अस्थिसंयोगस्थाने। स द्विविध चेष्टावान् स्थिरश्च। शाखाहनुकटिषु चेष्टावन्त, शेषा स्थिरा इति। ते च सख्यया २१०। तेषां शाखास्वष्टषष्टि, कोष्ठे एकोनषष्टि, ग्रीवोर्द्ध्वे त्र्यशीतिरिति। तेषाञ्च गुल्फजानुवङ्क्षणेषु त्रयस्त्रयो ८, कक्षे १, वृद्धपङ्गुष्ठाङ्गुलीभिरेकैकाङ्गुलीषु १८,

প্রবৃদ্ধবাতো মধ্যপিত্তো হীনকফঃ ১। মধ্যবাত প্রবৃদ্ধপিত্তো হীনকফঃ ২। হীনবাত প্রবৃদ্ধপিত্ত মধ্যকফঃ ৩। প্রবৃদ্ধবাত হীনপিত্ত, মধ্যকফঃ ৪। মধ্যবাত হীনপিত্ত প্রবৃদ্ধকফঃ ৫। হীনবাতো মধ্যপিত্ত প্রবৃদ্ধকফঃ ইতি ৬ ষট,—ইতি ত্রয়োদশ। তেষাঞ্চ বাতোল্বণাদীনাং নামানি যথাক্রমম্ ১ বিস্ফারকঃ, ২ আশুকারী, ৩ কম্পনঃ, ৪ বভ্রু (ভ্রূ), ৫ শীঘ্রকারী, ৬ ভল্লু (ফল্গু), ৭ কূট পাকলঃ, ৮ সম্মোহকঃ, ৯ পাকলঃ, ১০ যাম্য (সংযাম), ১১ ক্রকচঃ, ১২ কর্কটকঃ, ১৩ (বৈদারিক) (ষকর্কটাখ্যো) বিষ্রাখ্যশ্চেতি ত্রয়োদশ ভেদাঃ। ঘ। ভা ম। ম। তন্ত্রান্তরোক্তনামানি যথা —শীতাঙ্গ, তন্দ্রিক, বিলবিভ্রম, কর্ণিক, জিহ্বক, কণ্ঠকুব্জক, রুগ্দাহ, রক্তষ্ঠীবী, ভুগ্ন নেত্র, প্রলাপক, অভিন্যাস, কণ্ঠগ্রহ, কর্ণগ্রহ শ্চেতি। পুনস্তন্ত্রান্তরোক্তনামানি যথা—কুম্ভীপাক, প্রোর্ণুনাব, প্রলাপী, অন্তর্দাহ, দণ্ডপাত, অন্তক, এণীদাহ, হারিদ্র, অজঘোষ, ভূতহাস, যন্ত্র পীড়, সন্ন্যাস, সংশোষী চেতি ত্রয়োদশ। ভা ম ১ম। লক্ষণাদি তত্তৎপর্য্যায়ে দ্রষ্টব্যম্।

**সন্নিপাতনাড়ী**। স্ত্রী। দন্তমূলগতরোগে। লক্ষণ—"দাহজ্বরশ্বসনমূর্চ্ছনবক্ত্রশোষা যস্যাং ভবন্তি বিহিতানি চ লক্ষণানি।" মা নি।

**স[illegible]ন্ত (হর.)**। পুং। নেপালনিম্বে। চিরেতা। বনিঘ।

**সন্নিপাতপট.**। পুং। বৈদ্যকগ্রন্থভেদে।

**সন্নিপাতমৃত্যুঞ্জয়রস**। পুং। সন্নিপাত জ্বরে রস। পাঠ—"বিষ সূতকগন্ধৌ চ বিষ মৎস্যবরাহয়োঃ। আজমায়ূরপিত্তে চ মহিষ্যাশ্চাপি যোজয়েৎ। হরিতালঞ্চ মঞ্জিষ্ঠ বানরীবীজসংযুতং। অপামার্গং চিত্রমূলং জয়পালঞ্চ কল্কয়েৎ। এতৎ সর্ব্বং সমাংশেন অজামূত্রেণ মর্দ্দয়েৎ। মাষৈক মাত্রা কার্য্যা বটিকা সন্নিপাতজ্বরে ॥" বিষ পারা, গন্ধক, মাছের পিত্ত, শূকরপিত্ত, ছাগলপিত্ত, ময়ূরপিত্ত, মাহিষপিত্ত, হরিতাল, ত্রিকটু, আলকুশীবীজ, আপাঙ্গমূল, চিতার মূল, জয়পালবীজ প্রত্যেকে সমভাগ। শিলা পাত্রে ছাগদুগ্ধদ্বারা মর্দ্দন করিয়া, মাষকলায়-প্রমাণ বটী করিবে। ভৈষ।

**সন্নিপাতসূর্য্যরস**। পুং। সন্নিপাতজ্বরে রস। পাঠ—"রসেন গন্ধ দ্বিগুণং মরিচং ত্রিগুণং তত্পাদভাগং রবিতাড়েইম। ভক্ষোষ্ণং যোজ্য মর্দ্দয়েৎ দিন ত্রয় বহ্নিরেইন ঘর্ম্মং। বিষস্য দত্তার্দ্ধ কষায়সমাষ মরাদিপিত্তৈ পরিভাবয়েচ্চ॥" মাত্রা ২—৬ র। রস ১ ভ, গন্ধক ২ ভ, তাম্রভস্ম, রূপাভস্ম, স্বর্ণভস্ম প্রত্যেকে রসের সিকি ভ, বিষ রসের অষ্টম ভাগ, একত্র চিতার রসে মাড়িয়া বটী করিবে। রসচি। অন্য— "হিঙ্গুলং গন্ধকং তাম্রং মরিচং পিপ্পলী বিষম্। শুণ্ঠী কনকবীজঞ্চ দ্রব্যচূর্ণানি কারয়েৎ। বিজয়াপত্রতোয়েন ত্রিদিনং ভাবয়েৎ সুধী॥" মাত্রা ২ র। অনু পর্ণখণ্ড, অর্ধক্বাথ। হিঙ্গুল, গন্ধক, তামা, মরিচ, পিপুল, বিষ, শুঁঠ, কনকধুতুরাবীজ, প্রত্যেক সমভাগ, সিদ্ধিরসে ৩ দিন মর্দ্দন করিবে। ভৈষ।

**সন্নিরুদ্ধগুদ**। পুং। নিরুদ্ধগুদরোগে। See নিরুদ্ধগুদ।

**সন্নোদকম্**। ক্লী। সিন্দূরে। প মু।

**সন্ন্যাস**। পুং। মূর্চ্ছাদিরোগবিশেষে। লক্ষণ যথা—"বাগ্দেহমনসাং চেষ্টা আক্ষিপ্যাতিবলা মলা। সন্ন্যস্যন্ত্যবলং জন্তুং প্রাণায়তনমাশ্রিতাঃ। স না সন্ন্যাসসন্ন্যস্ত কাষ্ঠীভূতো মৃতোপমঃ। প্রাণৈ বিমুচ্যতে শীঘ্রং মুক্ত্বা সদ্যঃফলাং ক্রিয়াম্॥" মা নি। সন্নিপাতজ্বরবিশেষে। লক্ষণং—"অতিসরতি বমতি কূজতি গাত্রাণ্যপি শিরো ন রুচিং লভতে। সন্ন্যাসসন্নিপাতে প্রলপত্যুত্তাপিতশ্চাপি ভবতি॥" ভা ম ১ ম।

**সপত্নারি**। পুং। বংশভেদে। বেউড় বাঁশ। "ভাম্যন্তি সপত্নারির্বৈজ্ঞসন্ততিরায়ত।

**সপত্ন(ত্ন)জিত**। ত্রি। পীড়িতে। দুঃখাপিতে। পু। শরাহতমৃগাদৌ। শব্দরত্ন।

**সপত্নাকরণম্**। ক্লী। অতিপীড়নে। অতি বেদনায়াম্। হলা।

**সপত্নাকৃতি**। স্ত্রী। অতিপীড়নে। ঐ অ।

**সপাদমৎস্য**। পুং। পাদবিশিষ্ট মৎস্যবিশেষে। তদ্গুণা,—"সপাদমৎস্যো মেধাকৃৎ মেদ আয়করশ্চ স। বাত পিত্তকরশ্চাপি রুচিকৃৎ পরতো মতঃ॥" বৈ নিঘ।

**সপীতক (তিকা)**। পু, স্ত্রী। রাজকোষা তক্যাম্। ধুঁধুল। রা নি ব ৭।

**সপুষ্পকা**। স্ত্রী। তিলবাসিনীশালী।

स्वनामख्यातक्षुप विशेषे। हिं ककुंधा। तत्पर्य्याया,—भण्डीर मधास आमगन्धक कोकाय' कण्टकिफल उपदश। गुणा—कटुत्व रुच्य मुखशोधन कफवातप्रशमन दीपन दाहकत्व.। रा नि व ४। अपामार्गे। वै निघ।

**समष्ठि(ष्ठी)ला।** स्त्री। कटुपर्ण्यां। नद्याम्रे। वै निघ। गण्डीरे। अम। शमठनामशाक विशेषे। शुठिआशाक। सर्व्वानन्द।

**समाख्या।** स्त्री। क्षुद्रबलायाम्। क्षुद्रबेलेडा। वै निघ।

**समानवायु'।** पु। तन्नामक देहस्थवायौ। समान वायु। तस्य स्थान पक्वमानाशयाशय। तस्य गुण—"आमपक्वाशयचर ‍समानो वह्नि सङ्गत। सोऽन्न पचति तज्जांश्च विशेषान् विवि नक्ति हि। गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान्।" सु नि १ अ।

**समालम्बः (म्बो)।** पुं। सुगन्धरोहिषतृणे। गन्धतृण। रा नि व ८।

**समालम्भः।** पु। कुङ्कुमादिलेपने। अम।

**समालम्भनम्।** क्लौ। कषाये। कुङ्कुमादि-विलेपने। त्रिका।

**समासवान्।** पु। तुम्बवृक्षे। श च।

**समाह्वा।** स्त्री। गोजिह्वायां। গোজিয়া শাক। श च।

**समितः (ता)।** पुं, स्त्री। गोधूमचूर्णे। मयदा। यथा—"गोधूमा धवला धौता कुट्टिता शोषिता-स्तत। पेषिता चालनिच्छिद्रायाविता समिता. स्मृता॥" भा। ३ अ।

**समिदुत्तमः**
**समिद्वरः** } पु। पलाशवृक्षे। वै निघ।

**समीचक'।** पुं। मैथुने। शब्दकल्प।

**समीची।** स्त्री। स्त्रीमृगी।

**समीच्छदा।** स्त्री। बराहक्रान्तायाम्।

**समोद'।** पुं। गोधूमचूर्णे। मयदा। शब्दकल्प।

**समीनिका।** स्त्री। प्रतिवर्षप्रसवायाम् गवि। दृष्टप्रतिशनो गवि। श र।

**समीरः।** पुं। शमीवृक्षे। रा नि व ८।

**समीरणः।** पुं। मरुवकवृक्षे। গন্ধ তুলসী। रा नि व १०। वायौ।

**समीरणा।** स्त्री। गर्भाशयस्थित नाडीविशेष। "प्रधानमुक्ता मदनातपत्रे समीरणा नाम विशेष नाडी। तस्या मुखे यत् पतितन्तु वीर्य्यं सन्निफल स्यादिति चन्द्रमौलि॥"

**समीरसारः।** पुं। बिल्ववृक्षे। रा नि व ११।

**समुच्चयः।** पु। इदञ्चेदञ्चेति समुच्चय। यथा—मांसवर्गे एणहरिणलावतित्तिरिसारङ्गा प्रधान मिति।

**समुत्क्रोशः।** पु। कुररीपक्षिणि। श र।

**समुत्क्लिष्टः।** त्रि। स्वस्थानात् चलिते, वहि र्गते। वा चि १ अ अरुण।

**समुत्थानम्।** क्लौ। व्याधिनिर्णये। मे।

**समुद्र'।** पु। सम्पुटे। डाबा।

**समुद्गिरणम्।** क्लौ। वमने। वै निघ।

**समुद्रकफः।** पु। समुद्रफेने। त्रिका।

**समुद्रकान्ता।** स्त्री। स्पृक्कायाम्। পিড়িং। रा नि व १२।

**समुद्रगृहम्।** क्लौ। जलयन्त्रगृहे। ফোয়ারা বার ঘর। त्रिका।

**समुद्रजम्।** क्लौ। सामुद्रलवणे। रस, चि।

**समुद्रजलम्।** क्लौ। सागरसलिले। तद्गुणा,—लवण रुच्य विस्र वैवर्ण्यदोषजनक रक्तामयकर दाहार्त्तिपित्तकृच्च। अपि च—"सामुद्रमुदक क्षारं सर्व्वदोषप्रकोपणम्।

**समुद्रनवनीतम्।** क्लौ। अमृते।

**समुद्रपुष्पम्।** क्लौ। कपित्थपुष्पे। गुणा—तुवरं मधुरं शीतल रक्तदोषघ्न कफघ्नं, पित्तघ्न कामलाहरं गर्भिणीकष्टहरञ्च। वै निघ।

**समुद्रफल(क)म्।** क्लौ। (Argyria speciosa) स्वनामख्यातवृक्षफले, कपित्थफले। दाक्षिणात्ये समुद्रकापला इति ख्यातम्। हिं कदम्ब फल, समुन्दरफापल्। बम् समुन्दरशोक। तै समुन्दरपाल। वै निघ श्भ वा व्या चि लेपसेंटे। तदुक्त—"समुद्रनाम प्रथम पयात् फलमुदाहरेत्। समुद्रफलमित्यादि नाम माध्य भिषग्वरै॥" गुणा—"फल समुद्रस्य कटूष्णकारि वातापहं मूत्रनिरोधकारि। त्रिदोषदाबानलदीप्तकारि कफा

**सम्ब(र)म्** । क्ली । जले । गटा । भम ।

**सम्बरः** । पु । मृगभेदे । शम्बर । मत्स्यविशेषे । मे । स्त्री (री) । शतावर्य्याम् । शतमूली । श र । मण्डूकपर्ण्याम् । थुलकुड़ि । भम ।

**सम्बलम्** । क्ली । जले । श र ।

**सम्बाधः (धनम्)** । पु, क्ली । भगे । मे ।

**सम्बिदा** । स्त्री । विजयायाम् । सिद्धि ।

**सम्बिदामञ्जरी** । स्त्री । गञ्जिकायाम् । गाँजा । गुणा,—"सम्बिदामञ्जरी चोग्रा मादिनी हर्षिणी तथा । ग्राग्रयी तर्पिणी मल्या मन्मथोद्दीपनी च सा ॥ निद्राप्रजननी गर्भपातिनी च विकाशिनी । वेदनाचेपहरणी ज्ञेया च मदकारिणी ॥'

**सम्भरोद्भवम्** । क्ली । गाढलवणे । शाम्भर लवण । रा नि व ६ ।

**सम्भव** । पुं । उत्पत्तिकारणे । सम्भवो नाम यो यत सम्भवति स तस्य सम्भव । यथा—"षड् धातवो गर्भस्य, व्याधेरहित, हितमारोग्यस्य इति ।" च वि ८ च ।

**सम्भव्यः** । पुं । कपित्थवृक्षे । कयेत्वेलेर गाछ । भच ।

**सम्भारम्** । क्ली । लवणविशेषे । शाम्बर लवण । हे निघ । पुं । तद्योग्याखिलद्रव्यसमुदाये । उपादानसमष्टि । च सू १५ च ।

**सम्भिन्नः** । त्रि । सम्यग्भेदविशिष्टे । निदा ।

**सम्मार्जकः (नी)** । पुं, स्त्री । मार्ज्जन्याम् । झाड़न, झाँटा । श र । भम ।

**सम्मार्जनम्** । त्रि । शोधने । र मा ।

**सम्मिलितद्रुम** । पुं । रक्तपुनर्नवायाम् । रा नि व ५ ।

**सम्मूढपिटि(ड)का** । स्त्री । शूकदोषभेदे । "पाणिभ्यां भग्नसंमूढे सम्मूढपिडका भवेत् ।" सु नि १४ च ।

**सम्मूर्च्छनम्** । क्ली । मूर्च्छायाम् । निघण्टु ।

**सम्मोहक** । पु । प्रकृतमप्यतीतवातादिज सन्निपातज्वरे । लक्षण—"प्रलापायाससम्मोहकम्प मूर्च्छारतिभ्रमा । पक्षपाताभिघातश्च तत्राप्येते विक्षेपत । एव सम्मोहको नाम सन्निपात सुदारुण ॥" भा म १म ज्व चि ।

**सम्यक्संहित** । त्रि । सम्यक्योजित । भा म १म ।

**सम्यक्क्षारः** । पु । टङ्कणक्षारे । सोहागा । र सा स ।

**सम्यग्दग्धम्** । क्ली । अग्निदाहविशेषे । दाह प्रयोजने यथायोग्यदाहे । सु सू ।

**सरम् (स्)** । क्ली । मांसे । रा नि व १७ । जले । त्रिका । सरोवरे । लक्षण—"मध्या शैल मराशाभो यत्र सख्य तिष्ठति । तत्सर ॥" भा । पुं । महापिण्डीतरौ । रा नि व ९ । त्रि । दध्यग्रभागे । दैरेर मांथा । "दध्नसूपरि यो भागो घन स्नेह समन्वित । स लोके सर इत्युक्तो दध्नो मण्डस्तु मस्तिति ॥" गुणा—सर स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशन । साम्लो वस्ति प्रशमन पित्तश्लेष्मविवर्द्धन ॥ र मा । र सा स । सारकद्रव्ये । यथा—"पिप्पली मधुरा वृष्या कटुका दीपनी सरा ।" राज ।

**सरःकाकः** । पुं । हंसे । त्रिका । स्त्री (की) । हंस्याम् । श र ।

**सरकः** । पु, क्ली । मद्यसामान्ये । रा नि व १४ । क्षुद्रसरोवरे । श र । शीधौ । शीधुपाने । मे । अन्मनि । त्रिका ।

**सरघा** । स्त्री । मधुमक्षिकायां । मौमाछि । भम ।

**सरङ्ग** । पु । पक्षिणि । उणा ।

**सरजम्** । क्ली । ऐयङ्गवीनघृते । नवनीते । ननि । हारा । र सा स ।

**सरजा (स)(स्का)** । स्त्री । ऋतुमत्यां स्त्रियाम् । त्रिका ।

**सरटः (ट)** । पु । मधुमक्षिकायाम् । मौमाछि । कृकलासे । गिरगिटी । भम । भटी ।

**सरटुः** । पु । कृकलास । गिरगिटी । उणा ।

**सरणम्** । क्ली । माधवीमद्ये । वै निघ । लौह मले । मण्डूर । हे च । स्त्री(णा) । प्रसारण्याम् । गन्धभादालिया । रा नि व व ५ । त्रिवृतायाम् । टेउड़ी । ग गा । सु सू ३६ च । श्वेतनिशोत्रि । स्वर्णक्षीरव्याम् । वै निघ ।

**सरणि (णी)** । स्त्री । प्रसारण्याम् । गन्धभाद लिया । रा नि व ५ । भा व्या धि मध्यमनारायण तैले । च द वातरक्त ।

**सर्पदण्डा (न्ता)** । स्त्री । सिंहपिप्पल्याम् । रा नि व ६ ।

**सर्पदण्डी** । स्त्री । गोरक्षतण्डुलायाम् । গোরক্ষ চাকুলিয়া । रा नि व ५ ।

**सर्पदन्ती** । स्त्री । नागदन्त्याम् । হাতিশুঁড়ে । रा नि व ५ ।

**सर्पदमनी** । स्त्री । नागदन्त्याम् । হাতিশুঁড়ে । बन्ध्याकर्कोटिकायाम् । रा नि व ३ ।

**सर्पदष्टकम्** । क्ली । सर्पदशने । तच्च त्रिविध सर्पित रदित निर्व्विषञ्चेति । केचित् चतुर्थं सर्पाङ्गा भिहतमिच्छन्ति । तेषां लक्षणानि यथा—"पदानि यत्र दन्तानामेकं द्वे वा बहूनि च । निमग्नान्यल्परक्तानि यान्युद्‌वृत्य करोति हि । चञ्चु मालकयुक्तानि वैकृत्यकरणानि च । सङ्क्षिप्तानि सशोफानि विद्यात् सर्पितम् भिषक ॥" इति । "राज्यः सलोहिता यत्र नीला पीता सितास्तथा । विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषञ्च तत् ॥" इति । "अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिन । पद पदानि वा विद्यादविषं तच्चिकित्सक ॥" इति । "सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः । कस्य चित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तत् ॥" सु कल्प ४ अ । वाभटस्तु तुण्डाहत व्यालीढ व्यालुप्त दष्टनिपीड़ितदष्टकभेदेन पञ्चधाह । एषु प्रथम द्वय निर्व्विष, निपीड़ितदष्टकम् असाध्य व्यालुप्तदष्ट कञ्च कृच्छ्रसाध्यम् । एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि । वा उ ३६ अ ।

**सर्पनामा** । स्त्री । सर्पाक्ष्याम् । সর্পকঙ্কালী বিশেষ, পানশিউলী । प मु ।

**सर्पनिर्मोक** । पु । सर्पत्वचि । সাপের খোলোষ । च शा ८ अ ।

**सर्पनेत्रा** । स्त्री । सुगन्धरास्नायां । सर्पाक्ष्यां । পানশিউলী, সর্পকঙ্কালীবিশেষ । रा नि । ७ ।

**सर्पपुष्पी** । स्त्री । बन्ध्याकर्कोटक्याम् । नाग दन्त्याम् । হাতিশুঁড়ে । रा नि व ५ ।

**सर्पप्रिय** । पुं । चन्दनवृक्षे । वै निघ ।

**सर्पफेण(न)म्** । क्ली । अहिफेने । वै निघ २य भ सा चि जातीफलादिगुटिकायां ।

**सर्पभक्षक** । पुं । नाकुलीकन्दे । मयूरे इति च ।

**सर्पभुक्** । पु । मयूरे । इति च । कच्छे । হাড়গিলা । राजसर्पे । नाकुलीकन्दे । रा नि व ७ ।

**सर्पमाला** । स्त्री । सर्पकङ्कालिकाभेदे । र मा ।

**सर्पलता** । स्त्री । नागवल्लीलतायाम् । পাণ গাছ । रा नि व ११ ।

**सर्पलोचना** । स्त्री । सर्पाक्ष्याम् । পানশিউলী । वा उ १०अ । गन्धरास्नायाम् । वै निघ ।

**सर्पविषम्** । क्ली । सर्पगरले । সাপের বিষ । "विषमाद्यमवाप्य रक्तं दूषयते वपु । रक्तमल्पवि तु प्राप्तं वर्द्धते तैलमम्बुवत ॥" वा उ ३६अ ।

**सर्पसहा** । स्त्री । सर्पाक्ष्याम् । পানশিউলী । प मु ।

**सर्पसुगन्धा (न्धिका)** । स्त्री । सर्पगन्धायाम् । वै निघ ।

**सर्हा (न्)** । पुं । नकुले । বেজি । इति च ।

**सर्पा** । स्त्री । तन्नामकौषधी । या च सर्पाकारा सर्पकङ्कालिका । च चि १अ ।

**सर्पाख्य** । पु । नागकेशरवृक्षे । र मा । महिष कन्दे । रा नि व ७ । श्वेतालुके । শাঁকআলু । वै निघ ।

**सर्पाङ्गी** । स्त्री । सङ्कलोपिप्पल्याम् । रा नि व ६ । सर्पकङ्कालीभेदे । পানশিউলী । र मा ।

**सर्पादनी** । स्त्री । खाद्यलिकानामकन्दशाके । नाकुल्याम् । গন্ধনাকুলী । रा नि व ७ ।

**सर्पारि** । पु । नकुले । मयूरे । रा नि व १९ ।

**सर्पावासम्** । क्ली । श्रीखण्डचन्दने । रा नि व १२ । श्वेतचन्दने । रा नि व १२ ।

**सर्पाशन** । पुं । मयूरे । हला ।

**सर्पास्यम्** । क्ली । नासाकर्णाश्मच्छेदनयोग्ये अस्त्र भेदे । "सर्पास्य घ्राणकर्णार्शश्छेदनेऽर्द्धाङ्गुलं फले ।"

**सर्पाक्षी** । स्त्री । सर्पगन्धायाम् । পানশিউলী । हि सरहची गण्डिनी । तत्पर्य्यायौ,—गन्धाखी नाकुलापत्र । प मु । र सा स । वै निघ २अ एकाहिक ज्व चि मसृणसञ्जीवनीरसे । र स र विष चि । गुणा —"सर्पाक्षी कटुका तिक्ता तीक्ष्णा कृमिनिकृन्तनी । वृश्चिकोन्दुरसर्पाणां विषघ्नी व्रणरोपणी ॥" भा गु व । श्वेतापराजितायाम् । रक्तशङ्खिन्याम् । वै निघ । गन्धनाकुल्याम् । रा नि व ७ ।

**सर्पिः (स्)** । क्ली । दुग्धसम्भूतस्नेहे, घृते । चि । रा नि व १५ । सर्प गतौ संस्कारात् सर्पणात्

**हीनाङ्गः।** त्रि। विकलाङ्गे। जटा।

**हीनाङ्गी।** स्त्री। क्षुद्रपिपीलिकायाम्। हे च।

**हीन्तालः।** पुं। हिन्तालवृक्षे। (हेंतालगाछ)। जटा।

**हीर(क)म्।** क्ली, पुं। (Diamand) वज्रे। शिवे। तत्पर्य्यायाः,—वज्र हीर दधीचास्थि वज्रकं सूचीमुखं वरारक रत्नमुख्य अभेद्यं दृढाङ्ग हीरं विराटज राजपट्ट राजावर्त्तं। तद्गुणाः,— स्वादु कषाय शीत सारक वान्तिकर चक्षुर्हित कर, धारणे तु पापालक्ष्मीनाशकश्च। रा नि व १३। स श्वेतलोहितपीतकृष्णभेदेन चतुर्विध— यथासंख्य द्विज क्षत्र वैश्य शूद्र इति। तत्र प्रथमो रसायने, द्वितीयो व्याधिनाशे, तृतीयो धनदाने देहदार्ढ्ये, चतुर्थश्च व्याधौ वयस्तम्भने च प्रयुज्यते। अस्य आकारभेदेन स्त्रीपुंनपुंसकत्वम्। विन्दु रेखादिहीनो रक्तः पुमान्, रेखायुक्तः षडस्रयुक्तः स्त्री च। त्रिकोणो नपुंसकम्। मारितस्य हीरकस्य गुणाः—"आयुः पुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति च। सेवितं सर्व्वरोगघ्नं मृतं वज्रं न संशयः। अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा। पाण्डुतां पङ्गुलत्वञ्च तस्मात् संशोध्य मारयेत्॥" हीरक मारणम्—"व्याघ्रीकन्दोदरे स्थितं सप्तधा पुटितं पचेत्। हयमूत्रस्य निर्व्वापात् शुद्ध प्रतिपुटं भवेत्। मण्डूकमूत्रे सततं हीरकं सेचयेत् सुधीः। सप्तधा म्रियते सत्यं नात्र कार्य्या विचारणा। भस्मीभावं गतं युक्त्या वज्रवत् कुरुते तनुम्॥" सा क। स्त्री। पिपीलिकायाम्। गान्धार्य्याम्। रा नि व ८।

**हीलम्।** क्ली। शुक्रे।

**हीलकम्।** क्ली। गौडीमद्ये। गुड़ेर मद।

**हुड (ड्ड)।** पुं। मेषे। हुडः। त्रिका। रा नि व १९। स्त्री। मेध्याम्।

**हुडिका।** स्त्री। अदोनवृक्षे। आंरडगाछ। वै निघ।

**हुडुक्कः।** पुं। दात्यूहपक्षिणि। मे।

**हुडुम्बः।** पुं। मत्स्यविशेषे। एड़ुमणाछ। श मा।

**हुण्डः।** पुं। व्याघ्रे। ग्राम्यशूकरे। शब्दरत्ना।

**हुण्डनम्।** क्ली। मत्तकादीनाम् अस्मिन् प्रवेशे मत्ततायां च। (वातुगामनेऽयत्वात्)।

अथ लाङ्गू शिरोहुण्डन कीशमुष्टिस्फुटन, अग्रे ललाटे च भङ्गवद्वेदा। नासाहुण्डनं प्राणगन्धि लोप। दृष्टिहुण्डनं दृष्टिव्यदास। कर्णहुण्डनं हृदयोपरोध। ग्रीवास्तम्भ। इति वैद्यक।

**हुतभुक् (ज्)।** पुं। अग्नौ। चित्रके।

**हुतवहः।** पुं। चित्रके। अग्नौ।

**हुताशः।** पुं। अग्नौ। अग्निवेशे। च। चित्रक वृक्षे। भा प्र अग्न्याधिकारे। च द कुष्ठ चि।

**हुताशनः।** पुं। चित्रकवृक्षे। सु चि १०अ।

**हुताशनरसः।** पुं। अग्निमान्द्ये रस। गन्धक १ भ पारद १ भ अष्टटङ्कण १ भ शुद्धविष १ भ मरिच ८ भ एकत्र निम्बूरसेन मर्द्दयित्वा मुद्गमाना वटी कार्य्या। अनु आर्द्रकरस। भा। भैष।

**हुताशवेशः।** पुं। अग्निवेशे। प च द टी।

**हुरवः।** पुं। शृगाले। त्रिका।

**हुलु।** पुं। मेषे।

**हृच्छूलम्।** क्ली। वक्षःशूले। निदा।

**हृतगन्धा।** क्ली। कुसुम्भरी। वाचाधिनिषि। वै निघ।

**हृत्कम्पः।** पुं। हृदयस्य कम्पे। निदा।

**हृत्पद्मः।** पुं। हृदये।

**हृत्पाषाण।** पुं। मनःशिलायाम्। भैष कुष्ठ चि षड्विन्दुतैले।

**हृत्प्राण।** पुं। श्वासरोगे। रा नि व २०।

**हृदयम्।** क्ली। मनसि। त्रिका। चेतनास्थाने। तच्च शोणितकफप्रसादजम्। यदाश्रया हि धमन्य प्राणवहा। तस्य च चेतनास्थानत्वात्तस्मिन् तमसा वृते प्राणिनः स्वपन्ति। तत्स्वरूप यथा—"पुण्डरीकेण सदृश हृदय स्यादधोमुख। जाग्रतस्तद्विकसति स्वपतश्च निमीलति॥" सु शा ४अ। वक्षसि। रा नि व १८।

**हृदयचरः।** पुं। कफशक्तिभिदि। च चि ७अ।

**हृदयदीपकः।** पुं। बोपदेवकृत वैद्यकग्रन्थे।

**हृदयस्थानम्।** क्ली। वक्षसि। हे च।

**हृदयात्मा (न्)।** पुं। कङ्कपक्षिणि। श च।

**हृदयादकः।** पुं। कफजकृमौ। निदा।

**हृदयोपशरणम्।** क्ली। हृदयोपद्रवे। च सू १५अ।

हेमकान्तिः । स्त्री । दारुहरिद्रायाम् । दारु-हरिद्रा । वै निघ ।

हेमकिञ्जल्कः । पुं,क्ली । नागकेशरवृक्षे तत्पुष्पे च । रा नि व ६ ।

हेमकूष्टिः । स्त्री । स्वर्णाकर्षणयोगे । यथा— "रसदरदताप्यगन्धकमनःशिलानि भागेन सङ्गानि । पुटमतपल्लवारि विच्युत हेमकूष्टिरियम् ॥" रस चि ३ अ ।

हेमकेतकी । स्त्री । स्वर्णकेतकीवृक्षे । रा नि व १० । See स्वर्णकेतकी ।

हेमगन्धिनी । स्त्री । रेणुकनाम गन्धद्रव्ये । रेणुक । र मा ।

हेमगौरः । पुं । किङ्किरातवृक्षे । रा नि व १० ।

हेमजीवन्ती । स्त्री । पीतजीवन्त्याम् । स्वर्ण जीवन्ती । रा नि व ३ ।

हेमतार(क)म् । क्ली । तुत्थे । तुँतिया । वै ष ।

हेमदुग्धः (क) । पुं । उदुम्बरवृक्षे । यज्ञ डुमुर । र मा । रा नि व ११ । मद व ५ ।

हेमदुग्धा । स्त्री । स्वर्णक्षीर्याम् । सोणाखीरई, शेयालकाँटा । जटा । भा पू १म भ विरेचनी । क्षीरोदुम्बरे । वै निघ रस भा व्या चि विषमे तैले ।

हेमदुग्धी (न्) । पु । यज्ञडुमुरवृक्षे । ग र । स्त्री । स्वर्णक्षीर्याम् । शेयालकाँटा । रा नि व ५ ।

हेमधान्यकः । पुं । तिलवृक्षे । प मु ।

हेमनिधिः । पु । पारदे । वै निघ ।

हेमन्तः । पु । शीतकाले । अग्रहायण पौषयोः । श र । तत्पर्य्याया,—ऊष्मागम शरदन्त हिमागम हैमन हैमन हैमन्त हैमल । तद्गुणा— "हेमन्त शीतल स्निग्ध स्वादुजठरवह्निकृत् ॥"

हेमन्तनाथः । पुं । कपित्थवृक्षे । श च ।

हेमपत्रम् । क्ली । धुस्तूरपत्रे । वै निघ रस दाह चि प्रलेप । नागकेशरपुष्पे । च द गाह चि । "हेम पत्र कटम्बट ।" पद्मकाष्ठे । वै निघ । स्वर्णपत्रे ।

हेमपत्रिका (त्री) । स्त्री । स्वर्णपत्रिकायाम् । सोनामुखी ।

हेमपद्मकम् । क्ली । पद्मकाष्ठे । वै निघ ।

हेमपादी । स्त्री । हंसपादीलतायाम् । रक्त लज्जालुकायाम् । रा नि व ५ ।

हेमपुष्पम् । क्ली । अशोकपुष्पे । जवापुष्पे । स्वर्णचम्पके । वै निघ । भाद्रपुष्पे । रा नि व ४ । र मा । नागकेशरपुष्पे । च द वा व्या चि एलादितैले ।

हेमपुष्पः । पु । चम्पकवृक्षे । अ ष । प मु । अशोकवृक्षे । रा नि व १० । उदुम्बरवृक्षे । यज्ञ डुमुर गाछ । प मु । महाराजचूतवृक्षे , बड़ सोणालू । रा नि व ८ । पीतलवाङ्गवृक्षे । वै निघ ।

हेमपुष्पकः । पु । चम्पकवृक्षे । अम । प मु लोध्रवृक्षे । रा नि व ६ । नागकेशरवृक्षे । वै निघ ।

हेमपुष्पिका (ष्पी) । स्त्री । स्वर्णयूथिकायाम् । वै निघ । (ष्पी) मञ्जिष्ठायाम् । त्रिका । तेलाकुचा । दुरालभायाम् । स्वर्णयूथिकायाम् । स्वर्णजीवन्त्याम् । स्वर्णलीवृक्षे । सोणालु । वै निघ । मुषल्यां । तालमूली । रा नि व ७ । इन्द्र वारुण्याम् । राखालशशा । रा नि व ३ ।

हेमफला । स्त्री । इन्द्रवारुण्यां । राखालशशा । सुवर्णकदल्याम् । चाँपाकला । रा नि व ११ । स्वर्णकदल्याम् । सोणालू । रा नि व ४ ।

हेमबलम् । क्ली । मौक्तिके । मुक्ता । रा नि व १३ ।

हेमबीजम् । क्ली । पु रूप्ये । वै निघ रस च रा चि आनन्दरसे ।

हेममांसी । स्त्री । जटामांस्याम् ।

हेममाक्षिकम् । क्ली । स्वर्णमाक्षिके । वै निघ ।

हेममित्रम् । क्ली । स्फटिकारिकायाम् । फट्किरि । प मु ।

हेमयूथिका । स्त्री । स्वर्णयूथिकायां । स्वर्ण यूँई । रा नि व १० ।

हेमरागिणी । स्त्री । हरिद्रायां । त्रिका ।

हेमल । पु । मधुशिखायै । भूकुटिलिम् । प मु । ककलासे । मे ।

हेमलता । स्त्री । स्वर्णजीवन्त्यां । रा नि व ३ । सोमलतायां । ब्राह्मीशाके । वै निघ ।

हेमवती । स्त्री । स्वर्णजीवन्त्यां । रा नि व ३ । वचायाम् । स्वर्णक्षीरियाम् । रा नि व २२ ।

हेमवर्णवती । स्त्री । दारुहरिद्रायां । वै निघ ।

हैमवल्ली। स्त्री। स्वर्णजीवन्त्याम्। रा नि व ३।
हैमशिखा। स्त्री। स्वर्णक्षीर्याम्। শেয়াল কাঁটা। প মু।
हैमशोधिनी। स्त्री। स्फटिकारिकायाम्। ফট্‌কিরি। বৈ নিঘ।
हैमसारम्। क्ली। तुत्थके। তুঁতিয়া। र सा स ज्वरकुञ्जरपारीन्द्ररसे। स्वर्णमाक्षिके। प्र कम्‌दौभरवरसे।
हैमक्षीरी। स्त्री। स्वर्णक्षीर्या। সোণাখিরুই, শেয়ালকাঁটা। रा नि व ५। सु चि ८ अ।
हैमा। स्त्री। मञ्जिष्ठायाम्। स्वर्णजीवन्त्याम्। वै निघ।
हैमाख्यम्। क्ली। स्वर्णगैरिके। वै निघ।
हैमाङ्ग। पुं। चम्पकवृक्षे। श र। सु चि २५ अ। सिंहे। मे।
हैमाह्वा (ह्वी)। स्त्री। स्वर्णक्षीरिण्यां। শেয়াল-কাঁটা। वै निघ।
हैमाद्रिजरणा। स्त्री। स्वर्णक्षीरिण्याम्। সোণাখিরুই। र मा।
हैमाद्रिजा। स्त्री। स्वर्णक्षीर्याम्। प मु।
हैमाभम्। क्ली। यशदे। দস্তা। नागकेशरे। নাগেশ্বর। वै निघ।
हैमाह्व। पुं। वनचम्पके, चम्पकवृक्षे। रा नि व १०। धुस्तूरे। भा महानारायणतैले।
हैमाह्वा। स्त्री। स्वर्णजीवन्त्याम्। रा नि व ३। स्वर्णक्षीर्याम्। শেয়ালকাঁটা। अस्या मूल चोक् इति लोके। भा महाज्वराङ्कुशे। स्वर्णचम्पके। वै निघ।
हैरम्। क्ली। हरिद्रायाम्।
हैरु। स्त्री। महाशतावर्याम्।
हैरम्ब। पुं। महिषे। मे।
हैलञ्ची। स्त्री। हिलमोचिकायाम्। হিঞে শাক। श च।
हैषी (इन्)। पु। अश्वे। त्रिका।
हैसनीया। स्त्री। नागवल्लीभेदे। रा नि व ११। See नागवल्ली।
हैमम्। क्ली। हिमशिलायाम्। वर्षोदके। रा नि व १४। करकोद्भव जले। "हिमवच्छिखरादिभ्यो द्रवीभूयाति वर्षति। यत्तदेव हिमं हैम जलमाहु र्मनीषिणः॥"
हैम (क)। पु। भूनिम्बे। চিরাতা। रा नि व ९।
हैमकान्ता। स्त्री। दार्व्यां। দারুহরিদ্রা। वै निघ।
हैमनम्। क्ली, पु। शीतर्तौ। श र।
हैमनः। पु। हैमन्तकालजषष्टिकधान्येषु। হৈমন্তিক সেটে ধান। गुणा —"हैमनास्तु हिमा ह्रष्या मधुरा वह्नवर्चस।" राज ३प। मार्गशीर्ष मासि। रा नि व २१। पौषे मासि। वै निघ।
हैमन्तबीजम् } हैमान्तबीजम् } स्त्री। रक्तान्नादिबीजे। वै निघ अर्श चि तिलादिचूर्णे।
हैमन्तिक। पु, क्ली। हैमन्तकालिकशालिधान्ये। আমন ধান। अकण्डितयुक्ता हैमन्तिका। कण्डिता कण्डितहैमन्तिका इति च केचित।
हैमपुष्पी। स्त्री। मुषल्याम्। তালমূলী। वै निघ।
हैमल। पुं, क्ली। हेमन्तकाले। केचित्।
हैमवत। पुं। विषभेदे। हेम,। मुक्तायाम्। व निघ।
हैमवती। स्त्री। हरीतक्याम। प मु। मा। रा नि व ११। वै निघ अर्शो चि। स्वर्णक्षीरिण्याम्। শেয়ালকাঁটা, ক্ষীরিণী। रा नि व ५। रेणुके। বেণুক। रा नि व ६। कदलिद्राक्षायाम्। रा नि व ११। हरिद्रायाम्। वै निघ। अतस्याम्। মশিনা। रा नि व १६। श्वेतवचायाम्। শ্বেত বচ। रा नि व ६। चा सू १५अ। सुरादि। "कुष्ठ हैमवती च।" भा म १भ ज्व चि। दारु हैमवतीकुष्ठ।" च द कृमि चि। सु सू ३८अ। च सू ४अ। पीतदुग्धमेहुण्डे। হলুদেআটা মনসা গাছ। वचायां। प मु। वै निघ २भ वा व्या चि दारुषट्‌कपीठ। च सू १अ।
हैमा (मी)। स्त्री। स्वर्णकेतक्याम्। रा नि व १०। पीतयूथिकायाम्। খীরিণ্যা। ক্ষীরিণী। रा नि व ५। वटपत्रायाम्।

ह्रस्वमूलम् । क्ली । बालमूलके । कचि मूला । इति राजनिर्घण्टः ।

ह्रस्वमूल । पुं । रक्तेक्षौ । काठ्ला इक्षु । राजनि व १४ । रक्तेक्षौ । स्त्री (ला) । उष्ट्रकाण्डी क्षुपे । उटकाटारा इति लोके । वैद्यकनिघण्टुः ।

ह्रस्ववृक्षः । पुं । कुशे । चसु ।

ह्रस्वशाखाशिफ. । पुं । क्षुपे । अम ।

ह्रस्वा । स्त्री । क्षुद्रपर्णी । मूगानी । राजनि व ३ । नागबलायां । राजनि व ४ । श्वेतापराजितायां । वैद्यकनिघण्टुः । भूमिजम्बी । दनजाम । राजनि व ११ ।

ह्रस्वाग्नि' । पुं । अर्कवृक्षे । आकन्द गाछ । विषकारकभेदे । ब्रह्मचिते । शब्द ।

ह्रस्वाङ्ग' (क') । पुं । जीवकौषधौ । जीवक । चसु । राजनि व ५ । ऋषभके । वैद्यकनिघण्टुः ।

ह्रस्वैरण्ड । पुं । रक्तैरण्डवृक्षे । राजनि व ८ ।

ह्रस्वोत्पलम् । क्ली । कह्लारपद्मे । वैद्यकनिघण्टुः ।

ह्रादिनी । स्त्री । शल्लकीवृक्षे । अमर ।

ह्रिवेरम् । क्ली । बालके । बाला । अमर ।

ह्रीकु' । पुं । जतुके । (क्ली) । त्रपुधातौ । वा' । उणा ।

ह्रीवेरम् । क्ली, पुं । (Pavonia odorata) सुगन्धद्रव्यविशेषे । गन्ध बाला । हि सुगन्धबाला । म करवाल । क मुडिवाल । तत्पर्य्याय ,— बाल बालक ह्रिवेर ह्रीवेरकं बर्हिष्ट बर्हिष्ठ उदीच्य केशनामकं कुन्तल अम्बुनामक वारिद वर केश्य वज्रम् पिङ्ग ललनाप्रिय कुन्तलोशीर कचामोद । गुणा —शीतत्वं तिक्त पित्तवान्तितृष्णा हर ज्वरकुष्ठातिसारघ्न केश्य श्विघ्न व्रणघ्न । राजनि व १२ । सुसू ३८ च । पित्तशमने । चसु ४ च । 'सूक्ष्ममूलो वर केश्योऽमृतम सरलस्तथा । नूतन स्थूलमूलश्च वर्जनीय प्रयत्नत ॥'' भैष ।

ह्रीवेरादि । पुं । ज्वरातिसारे कषाय । "ह्रीवेरातिविषा मुस्तबिल्वधन्याक नागरै । कृत कषाय ॥'' चद ।

ह्रीविल(क)म् । क्ली । ह्रीवेरे । बाला । अटीम ।

ह्लादिनी । स्त्री । शल्लकीवृक्षे । वैद्यकनिघण्टुः ।

ह्लीकु' । पुं । जतुनि । (क्ली) । त्रपुणि । अटी ।

---

क्ष ।

क्षण: । पुं । पूनके । वैद्यकनिघण्टुः । निमेषचतुष्टयात्मक कालपरिमाणे । १० प । अम ।

क्षणतु । पुं । क्षते । या । इच ।

क्षणदम् । क्ली । जले । मे ।

क्षणदा । स्त्री । रात्रौ । अम । हरिद्रायाम् । राजनि व ६ । वनिघ २भ चित्तभञ्जविषि ।

क्षणदान्ध्यम् । क्ली । रात्र्यन्धतारोगे । मानि ।

क्षणनम् । क्ली । क्षणने । चसू १८ च । वधे । अम ।

क्षणनिश्वास । पुं । शिशुमारे । अमर ।

क्षणनु । पुं । क्षते ।

क्षणरामी (इन्) । पुं । पारावते । पायरा । शभा ।

क्षतम् । क्ली । व्रणमात्रे । पा । "नातिच्छिन्न नातिभिन्नमुभयोर्लक्षणानि च । विषम व्रणमङ्गे यत्तत् क्षतत्वमिनिर्द्दिशेत् ॥'' सुचि २च ।

क्षतक । पुं । राशिकायाम् ।

क्षतकास । पुं । पञ्चकासान्तर्गतकासरोगभेदे । निदानपूर्व्वा सम्प्राप्तिर्यथा—"अतिव्यवायभाराध्व युद्धाश्वगजविग्रहै । रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् ॥'' लक्षणं—"स पूर्व्वं कासते शुष्कं ततः ष्ठीवति शोणितम् । कण्ठेन रुजतात्यर्थं विभिन्नेनेव चोरसा । सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना । दुःखस्पर्शेन शूलेन भेदपीडाभितापिना । पर्व्वभेदज्वरश्वास तृष्णावैस्वर्य्यपीडितः । पारावत इवाकूजन् कासरोगात् क्षतोद्भवात् ॥'' मानि ।

क्षतक्षर् । पुं । भल्लातकवृक्षे । वैद्यकनिघण्टुः ।

क्षतघ्न । पुं । भूकदम्बे । कुकुरशोंका । भप्र । स्त्री (घ्नी) । लाक्षायाम् । इच ।

**क्षतजम्।** क्ली। रुधिरे। रा नि व १८। कुङ्कुमे। भा म ४अ कर्पूरे वि भ्रमने। "क्षतजमधरितेव।" पुष्टि। म च।

**क्षतजतृष्णा।** स्त्री। अभिघातजन्यतृष्णायाम्। सनिदानसमाप्तिमाह—"मधुरमाध्वी मलसत्व थाहा रुह चित पित्तविवर्जनैय। पित्त सवात कुपितं नराणां तानुप्रपन्न जनयेत्पिपासां। क्षतस्य रुक् शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु॥" मा नि।

**क्षतविध्वंसी** (इन्)। पुं। इङ्गुदारकलतायाम्। म च।

**क्षतव्रणः।** पु। आघातजन्यव्रणे। भा।

**क्षतशुक्रः।** नेत्ररोगभेदे। निदा।

**क्षतहरम्।** क्ली। अगुरुणि। म च। स्त्री। लाक्षायाम्। के निघ।

**क्षतघ्नः।** पु। रक्तखदिरे। वै निघ।

**क्षतक्षीणः।** पु। उर क्षतरोगे। निदानादि—'धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्। युध्यमानस्य बलिभि पततो विषमोच्चत । विवृते वक्षसि व्याधिर्बलवान् समुदीर्यते। स्त्रीषु चातिप्रसक्तस्य रुक्षाल्पप्रमिताशिन । उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते। प्रपीड्यते तत पार्श्वे शुष्यत्यङ्गं प्रवेपते। क्रमाद्वीर्यं बल वर्णो रुचिरग्निश्च हीयते। ज्वरो व्यथा मनोदैन्य विड्भेदाग्निवधावपि। दुष्ट श्याव सुदुर्गन्ध पीतो विग्रथितो बहु। कासमानस्य चाभीक्ष्ण कफ सासृक् प्रवर्तते। सचत क्षीयतेऽत्यर्थ तथा शुक्रौजसो क्षयात्॥" मा नि।

**क्षतक्षीरी।** स्त्री। तलके। दूना। पुं (इन्)। अर्कवृक्षे। वै निघ।

**क्षतोदरं।** पु। परिस्राव्युदरे। See परिस्राव्युदरम्।

**क्षत्रम्।** क्ली। तगरपुष्प। छगलपोडिका। रा नि व १०। शरीरे। धना। पु। क्षत्रियवर्णे।

**क्षत्रपादपः** (वृक्ष)। पु। क्षीरिणीवृक्षे। खिर्णी गाछ। वे निघ। मुचुकुन्दवृक्षे। मुचकुन्द-फूलेर गाछ। रा नि व १०।

**क्षत्रिणी।** स्त्री। मञ्जिष्ठायाम्। रा नि व ६।

**क्षत्रियः।** पुं। कटफले। भ मा। क्षीरिणी वृक्षे। वे निघ। मञ्जाली वाहुमात जातिभेदे।

**क्षत्रियवरा।** स्त्री। अनागुप्तभेदे। ढिलिकाडि। वै निघ।

**क्षपणम्।** क्ली। अपकरणे। दोषहरणे। च सू १८च।

**क्षपा।** स्त्री। हरिद्रायाम्। रा नि व ६। दारु हरिद्रायाम्। वै निघ। रात्रौ।

**क्षपाकरः**
**क्षपापतिः** } पु। कर्पूरे। चन्द्रे।

**क्षमा।** स्त्री। खदिरवृक्षे। रा नि व ८।

**क्षमादंशः।** पुं। शोभाञ्जनवृक्षे। रा नि व ७।

**क्षयः।** पुं। राजयक्ष्मणि। रा नि व २०। क्षयरोगे। क्षतनेति क्षय। निरु। "क्रियाक्षयकरत्वात् तु क्षय इत्युच्यते बुधै।" भा। व्याधिविशेषे। स चाष्टादशधा यथा—वातादि त्रिविध, रसादि सप्त, मलमूत्रयोर्द्वौ, पञ्चेन्द्रियमलस्य पञ्च, ओजस एक। च सू १७अ।

**क्षयकासः।** पुं। धातुक्षयजकासरोगे। तन्निदानसम्प्राप्ति—"विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्। घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मला। कुपिता क्षयज कासं कुर्युर्देहक्षयप्रदम्॥" लक्षण—"स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चापि लभेत कासी। शुष्यन् विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिर सपूय। त सर्वलिङ्गं भृशदुश्चिकित्स्य चिकित्सितज्ञा क्षयज वदन्ति। इत्येष क्षयज कास, क्षीणानां देहनाशन। याप्यो बलवतां वा स्यात् याप्यस्त्वेव क्षतोत्थित॥" मा नि।

**क्षयज्वरः।** पुं। धातुक्षयजयज्वरे, राजयक्ष्मज्वरे। च द ज्व चि।

**क्षयतरुः।** पुं। मन्दारवृक्षे। भा।

**क्षयथुः।** पुं। क्षयरोगे, कासादौ। देम।

**क्षयनाशिनी।** स्त्री। जीवन्तीलतायां। प मु।

**क्षरम्।** क्ली। जले। मे।

**क्षवः** (कः) (क्षुत्)। पुं। (Dregea volubilis Syn Hoya viridiflora) स्वनामख्यातवृक्षे। छिक्किनीति लोके। हँचेता। छिंनाकछिक्नी। मम् नाकछिकनी, हरन्दोडी। क्षवकगुणा—तीक्ष्णगन्ध कषाय उष्ण कटु मूत्रघ्न कफवातघ्न। रा नि व ८। राजसावनाम

सर्जिक्षार ও यवक्षार । "सर्जिका यावशूकश्च क्षारद्वयमुदाहृतम् ।" भा । "नेपी वर्जिकौ क्षारौ सर्जिका यावशूकजौ ।" शार्ङ्ग म ६ प ।

**क्षारपञ्चकम् ।** क्ली । यवशूकटङ्कणस्वर्जिपलाश तिलनालेषु । रा नि व २२ ।

**क्षारपत्र(क)म् ।** पु, क्ली । वास्तूकशाके । भा पु १भ । हे च । वास्तुकीशाक । मे मिघ ।

**क्षारपाणिः ।** पुं । तन्नामकायुर्वेदतन्त्रकारे । See तन्त्रकार ।

**क्षारमध्यः ।** पुं । अपामार्गवृक्षे । प मु ।

**क्षारमृत् (त्तिका) ।** पुं । ऊषरभूमौ । गुणा —पित्तला दाहशमनी पाण्डुप्रदा च । रा नि व २ ।

**क्षारमेलकः ।** पुं । सर्वक्षार । सोहाग । रा नि व ६ ।

**क्षारमेहः ।** पुं । पित्तजन्य प्रमेहभेदे । अत्र सुतक्षारप्रतिमं मेहति । सु नि ६ प ।

**क्षारराजः ।** पु । टङ्कणक्षारे । सोहागा । र सा स ।

**क्षारलवणम् ।** क्ली । लवणविशेषे । खारीमाटी वा लवण । तद्गुणा —"शैत्यं क्षारलवणं मूत्रलं मलभेदन । हन्ति शूलं ज्वरं दाह विमभ्याभाम नाशनम् ॥" (रसकर्पूरप्रकरणे ।)

**क्षारवर्गः ।** पु । सर्जि टङ्कण यवक्षारेषु । यथा—"सर्जिका टङ्कणश्चैव यवक्षार उदाहृत ।" र सा सं ।

**क्षारवस्तिः ।** पुं, क्ली । निरूहवस्तिभेदे । पिच्कारिविशेष । यथा —"सैन्धवाक्ष समादाय मता प्रार्धं तथैव च । गोमूत्रस्य पलान्यष्टावम्लीकाया पलद्वयं । गुडस्य द्वे पले चैव सर्वमालोड्य यत्नत । मन्त्रपूत सुखोष्णञ्च वस्ति दद्याद्विचक्षण । शूल विटसङ्गमानाहं मूत्रकृच्छ्रञ्च दारुण । क्रिमुदावर्त्तं गुल्मादीन् सद्यो हन्यान्निषेवित ॥" च द निरूह वस्ति ।

**क्षारवृक्षः ।** पु । मुष्ककवृक्षे । घण्टापारुल । रा नि व ११ ।

**क्षारश्रेष्ठम् ।** क्ली । यवक्षारे । रा नि व ६ । पुं । पलाशवृक्षे । मुष्ककवृक्षे । रा नि व १०।११ ।

**क्षारषट्कम् ।** क्ली । चक्रापामार्गकुटजलाङ्गली तिल मुष्कक इत्यक्षारेषु । "चक्रापामार्गकुटजलाङ्गलीतिलमुष्ककैः । क्षारैरेतैश्च मिलितैः क्षारषट्कमुदाहृतम् ॥" रा नि व २२ ।

**क्षारसप्तकम् ।** क्ली । सप्तक्षारेषु । "सर्जिक्षारो यवक्षारष्टङ्कणश्च सुवर्चिका । पलाश मोक्षमिश्रौ क्षारसप्तकमीरितम् ॥" रावण ।

**क्षारसर्पिः ।** क्ली । क्षारपक्वघृते । च शा २४ ।

**क्षारसूत्रम् ।** क्ली । भगन्दरनाडीच्छेदनार्थं क्षारलिप्तसूत्रे । भा म ४भ नाडीव्र ।

**क्षाराच्छम् ।** क्ली । सामुद्रलवणे । हारा ।

**क्षाराम्भः (म्बु) ।** क्ली । क्षारोदके ।

**क्षाराष्टकम् ।** क्ली । अष्टविधक्षारे । "पलाश वज्रिशिखरिचिञ्चार्कतिलनालजाः । यवजः स्वर्जिका चेति क्षाराष्टकमुदाहृतम् । क्षारा एतेऽग्निना तुल्या गुल्मशूलहरा भृशम् ॥" भा ।

**क्षारिका ।** स्त्री । क्षुधायाम् । हारा ।

**क्षारोत्तमः ।** पुं । घण्टापाटलिकायाम् । घण्टापारुल । सु सू ३६ प ।

**क्षारोदकम् ।** क्ली । क्षारजले । यथा—क्षारात् पङ्क च जलं दत्त्वा वस्त्रेण दोलायन्त्रं विधाय तदध पात्रं पातयित्वा चतुर्थावशिष्टं क्वाथयित्वा तत्सर्वं ग्राह्यम् । "पानीयो यस्तु गुल्मादौ तदाग्नेर्न विशति । भावयेत् पङ्कजे तोये केचिदाहुर्यतुर्गुणे ।" प म ३ख ।

**क्षितिः ।** स्त्री । खदिरवृक्षे । रा नि व ८ । रोचनायां । श च । पृथिव्याम् ।

**क्षितिजः (न्तु) ।** पुं । भूनागे । गौंसा । रा नि व १३ ।

**क्षितितलविधिः ।** पुं । पातालयन्त्रे । र सा स गन्धकाराभरणे ।

**क्षितिनागः ।** पुं । भूनागे । गौंसा । रा नि व १३ ।

**क्षितिबदरी ।** स्त्री । भूबदर्याम् । मेटो कुल । रा नि व ११ ।

**क्षितिरुहः ।** पुं । वृक्षे । रा नि व २ ।

**क्षितिक्षमः ।** पुं । खदिरवृक्षे । रा नि व ८ ।

**क्षिद्रः ।** पुं । रोगे ।

**क्षिप्तः ।** त्रि । परस्मादस्य उपरिगते अग्नौ । भा म ३भ भयाधिकारे ।

